(सू.१) तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि।

ग(म)न्तव्यम् । कालादृष्टादि साधारणकारणत्वपरिहारेणासाधारणकारणत्वस्य त्रिष्वपि समत्वमिति । समादधी(ध)ति[११९] । ननु व्यभिचारात् कथं तयोः[१२०] कारणत्वग्रह इति चेत् प्रति[१२१]भावत् प्रागभावीर्य(य)योस्तयोः[१२२] अपि सम्भव इति न दोषः । यदुक्तम्—जन्मजन्मयदभ्यस्तं दानमध्ययनं तपः । तत् तत् परत्र संक्रान्तमित्युक्तम् । कालिदासोऽप्याह—प्रपेदिरे प्राक्तनजन्मविद्या इति । इदानीन्तनकृतौ प्रागभावीय[१२३]कृतिध्वंसानामनन्तानां सहकारित्वेनाभ्यासत्वं तत्राप्यदुष्टमेवेति ज्ञेयम् ।

अथ काव्यस्य **कारणमुक्त्वा स्वरूपमाहे**त्यत्र कारणपदेन सामग्रीपरेणैक-वचनेन त्रीण्येव कारणानीति सु [स्थम्][१२४] । प्रबन्धरूपतया ग्रं(ग्र)थने शक्त्या शब्दार्था मनसि सन्धीय(यं)ते । व्युत्पत्त्या तयोः साराऽसारविवेकः क्रियते[१२५] अभ्यासेन तयोरुत्कर्षो जन्यते, तेन त्रयोऽपि [१२६][ज]निहेतुरिति ग्रन्थार्थः । उक्तमर्थं गमयति **एव**मिति । **कारण**मिति । काव्यस्य सामग्रीमुक्त्वा काव्य-लक्षणमाह—**तदि**ति । किं काव्यलक्षणमिति शिष्याकाङ्क्षायामाह—**तददोषा**—**वि**ति । शब्दार्थौ[१२७] काव्यम् । न केवलं शब्द(ब्दः) काव्यं, नाऽपि केवलो-ऽर्थ(र्थः)[१२८] काव्यं, किन्तु शब्दार्थौ मिलितौ काव्यमित्याह—तौ विशिनष्टि ।

Readings:-(११९) P. has 'ध'.
(१२०) P. does not read विसर्ग. Wrong.
(१२१) P. has 'ती'. Wrong.
(१२२) P. reads 'य', not 'र्य'. P. is correct.
(१२३) P. reads 'भ' for 'भा'.
(१२४) P. has 'स्थं'. Correct.
(१२५) P. faultily reads 'ये' for 'य'.
(१२६) P. has a faulty reading: तत्रयोपिनिहेतु....etc.
(१२७) P. has 'र्थौ'. Wrong.
(१२८) P. reads the विसर्ग clearly; correct.

अदोषौ शब्दार्थौ । शब्देऽपि केचिद्दोषाः सम्भवन्ति गुणा अपि [१२९] केच-नार्थनिष्ठाः(ष्ठाः) शब्दनिष्ठा(ष्ठा) श्च । अलङ्कारा अपि केचिच्छब्दनिष्ठा(ष्ठा) अर्थनिष्ठा(ष्ठा)श्च । कस्मिंश्चित् काव्ये [१३०] स्फुटालङ्कारविरहेऽपि न काव्य[त्व]-हानिः । केचित् तु [35] शब्दार्थयोर्मध्ये अर्थोपहितः [१३१] शब्दः काव्यमित्याहुः । कविना [१३२] काव्यस्य कृतत्वादिति प्रयोगात् । तन्न । व्यञ्जकत्वविशेषेणोभयत्र काव्यपदप्रयोगात् । कविना [१३३] काव्य(व्यं) कृतमिति प्रयोगस्तु [१३४] कथं स्यात् । अर्थस्य स्वतःसिद्धत्वादिति चेन्न । कटः कृत इत्यादिवत् काव्यं कृतमिति प्रयोगात् । कटांशे व्यक्त्यंशे करणे न नु(तु) जात्यंशे [१३५], तद्वत् काव्येऽपि [36] । तेन काव्यस्येदं लक्षणं सिद्धं–अदोषौ सगुणौ सालङ्कारौ स्फुटा-ऽस्फुटसाधारणालङ्कारयुक्तौ [१३६] शब्दार्थौ काव्यम् ।

ननु अदोषावित्यत्र यत् किञ्चित् दोषाभावो [37] वा सर्वदोषाभावो वा । नाद्यः, अव्यावर्त्तकतापत्तेः दुष्टस्याऽपि किञ्चिद्दोषशून्यत्वात्; नाऽन्त्यः, काव्यस्य विरलत्वापत्तेः । सर्वदोषाभावस्य क्वचिदेव भावादिति चेत्, अत्र [38] वदन्ति–वृत्तिरीतिभ्यामास्वादव्यञ्जकशब्दार्थयुगले(लं) काव्यमिति लक्ष-णम् । यदि शब्दार्थयुगलमित्येतावदेवं(व) तदा [१३७] घटं भिन्द्यादित्याद्यपि काव्यं स्यात् । तदर्थमास्वादव्यञ्जकमिति । तत्रास्वादव्यञ्जकता नाऽस्तीति । आस्वादव्यञ्जकशब्दार्थयुगलमित्युक्ते आस्वादव्यञ्जके वाक्येऽतिव्याप्तिस्तदर्थं

Readings:-(१२९) P. reads 'किं' for 'के'. Wrong.
(१३०) P. has 'व्य स्फ'; wrong.
(१३१) P. does not read the विसर्ग.
(१३२) P. has 'नां'. Wrong.
(१३३) P. has 'नां', once again. Wrong.
(१३४) P. reads 'गा सु' for 'गस्तु'. Wrong.
(१३५) P. has 'कटांशे व्यक्तांशे कटांशे न तु'. Wrong. But the last 'तु' is read correctly. B. has 'नु'.
(१३६) P. has only स्फुटसाधारणा०-
(१३७) P. faultily reads नाद्य घटे.

वृत्तिरीतिभ्यामिति पदम् । वृत्तिस्त्रिधा शक्तिर्व्यञ्जना लक्षणा चेति[१३८] । रीतिर्गौडी पाञ्चाली चेति द्विविधा । लौकिकवाक्यं वृत्तिरीतिभ्यां ना-{ना} स्वादव्यञ्जकमिति न तत् काव्यम् ।

नन्वेवं दोष(षा)भावालङ्कारयुक्तत्वप्रदर्शनं व्यर्थं स्यादिति चेत् अतिशयप्रदर्शनार्थं तत् । न नु(तु)[१३९] लक्षणमध्ये प्रवेशः यथा तेजोविशेषाश्रयत्वं पद्मरागत्वम् । न नु(तु) कीटानुविद्धत्वाभावोऽपि पद्मरागलक्षणे प्रवेष्टव्य इति, अतः एव—कीटानुविद्धरत्नादिसाधारण्येन काव्यता, दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः ॥१ इति[39] । तद् दुष्टेष्वपि काव्यत्वाक्षतेः[१४०] । दोषाभावस्तु उत्कृष्टत्वप्रदर्शनार्थः । न नु (तु) दोषे सति पद्मरागत्वं {गतं}[१४१] किन्तु तेजो विशेषाश्रयत्वं तथा । यथा २ दोषाभावो यथा यथाऽलङ्कारवत्ता तथा तथोत्कृष्टकाव्यत्वम् । न तु दोषाभावो लक्षणमध्ये प्रवेष्टव्य इति । अदोषपदेन दोषसामान्याभावस्य विवक्षितत्वात् । न चैवं न्यक्कारो ह्ययमेवेत्याद्यौ(दौ) **ध्वनिकार**प्रदर्शितोत्तमकाव्येऽप्रसङ्गो, विधेयाविमर्षदोषसत्त्वादिति वाच्यम्[१४२] । दोषसामान्याभावस्य तत्राऽप्युपपादयिष्यमाणत्वात्[१४३] तथाहि—

न्यक्कारो[१४४]ह्ययमेव मे यदरयस्तत्राऽप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः[१४५] ।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

Readings:(१३८) P. faultily reads–रीति चेति.
(१३९) P. reads 'तु'. Correct.
(१४०) P. faultily reads–काव्यत्वक्षतेः.
(१४१) P. has 'गत्वं'.
(१४२) P. reads 'काव्यं'. Wrong.
(१४३) P. quotes K. P.–यत्सर्वत्र... सुरभयः, in between.
(१४४) P. reads 'न्यकारो' here as well as earlier too. But 'न्यक्कारो' is most correct expression.
(१४५) P. has 'रावणे'.

इत्यत्र वक्ष्यमाणरीत्या प्रतिपदजीवानु(तु)व्यङ्ग्यवैचित्र्योत्कर्षसहस्रस्य [१४६]उत्कटतयाऽपकर्षकत्वविरहेणादोषत्वात्[40]। तथा हि—अयमरिसम्बन्धो न्यक्कारो निन्दा अन्येषां पराभवादिर्मम त्वरिसम्बन्ध एव न्यक्कारः। अरय इति नैको द्वौ वा। पूर्वमेकोऽपि नासीत् सम्प्रति तु युगपदेव बहवो जाताः। तत्रापि तेषां मध्येऽसौ प्रधानत्वेनाभिमतस्तापसोऽपरिशीलितास्त्रः[१४७]। अत्रैव मनुष्यादकोटिपूर्णायां लङ्कायामेव। एवकारेणात्यन्तासम्भावनावगमः। निहन्ति आप्राणत्यागात् प्रहरति। हननस्य वृत्ताविरत्[१४८] वर्तमानता। रक्षन्तीति राक्षसा, आस्तां परेषां तेषामपि रक्षणे अक्षमाः, कुलं[१४९] बालयुववृद्ध-स्त्रीषु नैकमपि त्यजति। अहो जीवतीति सोत्प्रासकाक्वा। रावण इति स्वनामकीर्तनेन जीवनस्य निन्दावगमादनुतापातिशयः। जगद्विद्रावयतीति रावणस्तस्याप्येवमित्यनुतापातिशयः। स चैव धिग् धिगिति द्विरुक्त्या निन्दातिशयः। शक्नोति सर्वत्रेति शक्रं(क्रः)[१५०] तमपि जयतीति ताच्छील्ये क्विप्। प्रबोधितवता मादृशानाश्वास्य प्रकृतौ[१५१] स्थापितवता। प्रबोधनं प्रबोधितमिति इणन्तान् निष्ठा। तद्वता, इत्यर्थो न साधुः। तथासति प्रबोधना(न)वत्त्वस्य प्रबोधयितृनिष्ठत्वेन प्रबोध्यमानेऽसम्भवात्। कुम्भाविव कर्णौ यस्य। तेन स्वर्गस्य सर्वदेवालयस्य ग्रामटिकाया इव यद् विलुण्ठनं हठात् सर्वस्यानयनं; अल्पार्थे टप्रत्ययः। वृथोच्छूनैर्वृथाहङ्कारवद्भिरेभिः पूर्वदशातोऽपरिहीनैर्भुजैः[१५२] विंशत्या(द्भिः)। अतो वैरिभुजेभ्योऽधिकैरित्यर्थः।

Readings (१४६) P. has उत्कंठतया.

(१४७) P. faultily reads '०तारसः' for '०तास्त्रः'

(१४८) P. has 'वरि' for 'विरत्'.

(१४९) P. has 'कुल' and is connected with the rest बालयुव० etc., in form of a compound.

(१५०) P. has सक्रं. Wrong.

(१५१) P. has missed the words–प्रकृतौ स्थापितवता ......प्रबोधयितृनिष्ठत्वेन.

(१५२) P. has 'हानै' for 'हीनै'.

अत्र वीररसं सञ्चार्य्य [अ]सूयाख्यभावरूपास्वादप्रकर्षकप्रतिपदजीवातुव्यङ्ग्य-वैचित्र्यमहिम्ना न्यक्कारोऽयमिति प्रतिकूलवचनाज्ञानेऽप्ययं न्यक्कार इति अनुकूलवाक्यार्थज्ञान(नं) स्यादेव । दर्पणे मुखमिति सत्यपि विशेषदर्शने [ऽ]-भ्रमवत् अभ्रमविधेयस्य, विधेयतयाऽनवगमेनाकाङ्क्षाविरहादिति रसवत्त्वा-दुत्कृष्टमेवेति इत्यलं[41] व्यासेन ।

प्रकृतं च स्तु(तू)यते[१५३], काव्यमिति लक्ष्यमितरल्ल(ल)क्षणम्[१५४] । शब्दः काव्यमित्युक्ते समुद्रघोषादावतिव्याप्तिरत उक्तं **अदोषाविति**[42] । तथापि माधु-र्य्यादि { यथा } [or, त्रय] रहितेऽतिव्याप्तिस्तदर्थमुक्तं **सगुणाविति**। तथा गामानयेत्यादि वाक्येऽतिव्याप्तिस्तदर्थमुक्तम्–**अनलङ्कृतीति**। तत् [or, नञ्][१५५] ईषदर्थे अनुद(दा)[१५६]रा कन्येत्यादिवत् । स्फुटालङ्काराराहित्येऽपि काव्यत्व-मस्त्येव। ततः सिद्धोऽयमर्थः । श्रुतिकटुत्वादयो दोषा गुणाश्च रससमवायिनो धर्मा अलङ्कारा रससंयोगवृत्तयोऽत[१५७] एवाव्याप्ति[:]परिहृतेति वदन् **क्वापीत्येतद्** व्याकरोति **क्वापीति**। सर्वत्र शब्दार्थौ सालङ्कारौ काव्यं क्वाऽपि स्फुटा-लङ्कारविरहेऽपि काव्यत्वमेव । कवृङ्वर्णने, कथ्यते इति कवेः कर्म, लोकोत्तरवर्णनानिपुणमिति । वक्ष्यति च वक्त्रा(क्त्रा)द्यौचित्यवशाद् दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ न गुणौ(णो) न दोष इति । कीटानुविद्धरत्ना–दिसाधारणे[ण्ये]न[१५८]काव्यता दुष्टेष्वपि मा(म)ता[१५९] । यथा कीटानुविद्धे रत्ने प्रोद्[ज्]ज्वलप्रभातिशयेन कीटानुविद्धतादोषतिरोधानादुपादेयता न परिहीयते

Readings (१५३) P. has 'स्तू'. Correct.
(१५४) P. has 'ल' and not 'ल्ल'.
(१५५) P. has 'नञ्'.
(१५६) P. reads 'दा'; correct.
(१५७) P. has 'ये'. Wrong.
(१५८):–P. reads 'ण्ये'. Correct.
(१५९) P. has 'म'. Correct.

दोषगुणालंकाराः वक्ष्यन्ते । क्वापीत्यनेनैतदाह यत् सर्वत्र सालंकारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः ।

यथा,

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।

---

तथा [१६०]पदव्यङ्ग्यवैचित्र्याद्युत्कर्षसामग्रीवं(व)शादास्वादोत्कर्षसाम्राज्येन[१६१] दोषस्याकिञ्चित्करतया काव्यस्य काव्यता न व्याहन्यत इत्यर्थः । **अग्निपुराणेऽपि व्यासपादैरुक्तम्**—

अदोष(षं)गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति ॥

इति तेन काव्यं [१६२]शब्दार्थं(र्थ)युगलं, यतोऽदोषादिगुणत्रयविशिष्टमतो रसान्वितमित्यर्थः[४३] । तेनादोषादिविशेषणमावश्यकमिति । अदोषत्वादिज्ञानं दोषादिज्ञानाधीनमिति के ते दोषा इत्यत आह **दोषगुणालङ्कारा वक्ष्यन्त** इति । रसापकर्षकोत्कर्षकरूपाणां दोषगुणालङ्काराणां रसज्ञानाधीनज्ञान-विषयत्वेन तन्निरूपणानन्तरं[१६३]निरूपयिष्याम इत्यर्थः ।

नन्वलङ्काराणां न काव्यत्वप्रयोजकत्वं क्वापीत्यनेन तदभावेऽपि तत्त्वोपगमादित्याह **क्वापीत्यादि** । अलङ्कारपदस्य स्फुटालङ्कारपरत्वमपिना स्फुटालङ्कारसमुच्चयानयनं, तेनालङ्कारवत्त्वस्यैव [१६४]प्रयोजकत्वमायातमित्याह— **सालङ्काराविति** । एतेन स्फुटालङ्कारस्यालङ्कारत्वमभिहितं[१६५] स्फुटत्वं च पूर्वाचार्यलक्षितत्वरूपं, अस्फुटत्वं च प्रतीयमानलक्षणरहितत्वम् ।

---

Readings(१६०) P. has 'व'. Correct.
(१६१) P. reads 'प्राज्यत'. Wrong.
(१६२) P. reads 'र्थ'. Correct.
(१६३) P. has 'नत'. Wrong.
(१६४) P. quotes K.P.-प्रौढाः कदम्बानिलाः etc. in between.
(१६५) P. reads 'त्व' beween 'म' and 'भि'; wrong.

सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥१॥

अत्र स्फुटो न कश्चिदलंकारः । रसस्य च प्राधान्यान्नालंकारता ।

---

ननु प्रसिद्धालङ्कारविरहे क्व काव्यत्वमित्यत आह—**यः कौमारहर** इति । काचिन्नायिका रेवातटे कृतसङ्केतापरपुरुषरतिमपह्नुवाना वयस्यां प्रत्याह, **य** इति । यः प्रथमसम्भोगेन कौमारं कुमारीभावं हृतवान् स एव मम प्रेयान्, ता एव चैत्रमासरात्रयो, विकसितमालतीपुष्पसुगन्धयः; प्रौढा रत्युद्दीपका एत एव धूलीकदम्बवायवः । अन्यकदम्बानां[१६६]वसन्तेऽसम्भवात् । अहमपि से(सै)[१६७]वास्मि । अहमित्यर्थेऽस्मीति निपातः । एवमत्र रत्युद्दीपकतादीनां सद्भावेऽपि अनुभूते नर्मदातीरे वेतसीतरो[१६८]रधोभागे रतिव्यापारलीलाकरणविषये मन उत्सुक(कं)[१६९] भवतीति वृत्तार्थः[१७०] । **अत्र स्फुटो** [न][१७१] **कश्चिदलङ्कार** इति । स्फुटः प्रसिद्धो य(ऽ)त्र च स्फुटतरश्चमत्काररसोऽत्रालङ्कारमन्तरेण स्फुटरसत्वमेवालङ्कार इति **दण्डिमत**माक्षिपति, रसस्य [अ]-हीनत्वादिति । हिरवधारणे[44] । **रसस्य** प्राधान्यादेवेत्यर्थः । रसस्येति विप्रलम्भस्येत्यर्थः[१७२] । न च स एव वर इत्यनेनावगते पतिसान्निध्ये स्वाधीनपतिकायाः कथं विप्रलम्भ इति वाच्यम् । क्रीडास्थानालाभे सुरतप्रतिबन्धे तस्य साम्राज्यात् । अत्रालङ्कारद्वयं वर्तते । विभावनाविशेषोक्तिश्च । तत्र विभावनालक्षणं यथा—कारणाभावेऽपि कार्यं, विशेषोक्तिलक्षणं यथा—विद्यमानेष्वपि कारणेषु कार्याभावः । यथा हि पतिसान्निध्याभाव उत्कण्ठायाः कारणं

---

Readings:(१६६) P. reads 'सते'. Wrong.
(१६७) P. has 'सै'. Correct.
(१६८) 'रो' is missing in P.. Wrong.
(१६९) P. has 'कं'; correct.
(१७०) P. has 'त्थ'.
(१७१) P. has retained 'न'; correct.
(१७२) P. misses 'प्र'; wrong.

तदभावे इति वक्तव्यम् । तत्र पतिसान्निध्याभावाभावेऽपि[१७३] उत्कण्ठा इति विभावनाऽस्फुटा इति चेत् उक्तं स्यात् । यद्यभाव एव कारणं तदा(द)भावाभावेऽपि कार्यं तदा स्फुटा विभावना । अयं भावा(वः)–पतिसान्निध्याभावादेरुत्कण्ठा सामग्र्या अभावेऽप्युत्कण्ठेति कारणाभावे कार्योत्पत्तिरूपाया विभावनायाः सत्त्वेऽपि न तस्याः स्फुटत्वम् । पतिविरहादेरुत्कण्ठाकारणस्य न साक्षादपि तु [१७४]विरोधिपतिसान्निध्यादिमुख(खे)मे(नै)वोपादानात्[१७५] । एवं पतिसान्निध्यादीनां धृतिकारणानां सत्त्वेऽपि न धृतिरिति कारणसत्त्वेऽपि कार्यानुत्पत्तिरूपाया विशेषोक्तेरपि[१७६] न स्फुटत्वं, विरोध्युत्कण्ठामुखेन धृत्यभावस्योपनिबन्धात्[१७७] तन्मु(न्मू)लकश्च सन्देहसङ्करोऽपि न स्फुटः । अपरिस्फुटकोटिद्वयावलम्बनादित्याहुः । अथवा अत्र न कश्चित् स्फुटोऽलङ्कार इति कथमित्याह–अत्र विभावनाविशेषोक्त्यलङ्कारद्वयमध्यात् एकस्यापि न स्फुटत्वं । कथं–तथाहि कारणाभावे कार्यस्योत्पत्तिर्विभावनेति विभावनालक्षणं, कारणाभावश्च क्वचिदभावमुखेन[१७८] क्वचित् तद्विरुद्धकार्योपनिबन्धद्वारेण । अत्र यः कौमारहर इत्यादौ कारणस्य विरुद्धं चेतः समुत्कण्ठ इति उत्कण्ठाख्यकार्यमुपनिबद्धमिति च विशेषोक्तिः, कार्यानुत्पत्तिश्चात्र विरुद्धकार्योपनिबन्धद्वारेणोक्ता । अत्र द्वयोरपि विभानाविशेषोक्तिलक्षणयोरलङ्कारयोः साधकबाधकप्रमाणाभावादस्फुटत्वम्[१७९] । तर्हि सन्देहसङ्करोऽस्तु । सोऽपि न, कथं,उभयोरप्यलङ्कारयोः परिपूर्णलक्षणत्वाभावात् । तथाहि–कारणं हि अन्वयव्यतिरेकानुविधायि भवति । तच्चात्र व्यभि-

Readings(१७३):- Words beginning with 'उत्कण्ठा.......up to अयं भावः पति' are missing in P.; wrong.

(१७४) P. has 'ध'.

(१७५) P. has मुखेनैवोपादानात्–; correct.

(१७६) P. reads 'तु' after 'अपि'.

(१७७) P. reads 'न्मू'; correct.

(१७८) P. reads 'क्वचिदत्रभावमुखेन'; wrong.

(१७९) P. reads...'देव स्फुटत्वं'; wrong.

तद्भेदान् क्रमेणाह ।

(सू० २) इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥४॥

---

चरति । कथमित्याह—उत्कण्ठोत्पत्तौ प्रियतमाद्यसन्निधिरेव नियमेन कारणं[१८०] भवतीति । यतः प्रियतमसन्निधानेऽपि प्रणयकलहादावुत्कण्ठाया उत्पद्यमानत्वात्[१८१] । तथा विशेषोक्तेरपि कारणसामग्री नास्ति । कथमित्याह—यथा प्रियतमसन्निधानादिरनुत्कण्ठोत्पतौ कारणं तथा वेतसीतरुतलमपि कारणम् । तच्च नास्तीति कारणसामग्र्यभावः । तस्माद् विभावनाविशेषोक्त्योः परिपूर्णलक्षणाभावात् सन्देहसङ्करोऽपि न भवतीत्यत[१८२]आह—**न कश्चित् स्फुटोऽलङ्कारः** । तर्हि रसवदलङ्कारोऽस्तु । न, कथमित्याह, **रसस्य प्राधान्यान्नालङ्कारतेति**[१८३] । प्रधानो हि रसः । हिरवधारणे । यथा समुद्रो हि महासत्त्वः ।[१८४] समुद्र एव महासत्त्व इतिवत् । **रसस्यैव** प्राधान्यादित्यर्थः । एतावता रसोलङ्कार्याः(र्यः)[१८५] परमलङ्कारो न भवति । अलङ्कारत्वं प्रधानस्योपकारकत्वस्योत्कर्षद्वारा । यथा राजाऽलङ्कार्यो गजाश्वादिकमलङ्कारः ।

कुत्रचिद् रसोऽप्यलङ्कारः । यथा,

अयं स रसनोत्कर्षी पीन स्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र प्रधानभूतः करुणो रसो यथा—भूरिश्रवसो मरणसमये तत्पत्नीवचनमिति कृत्वा प्रधानकरुणो रसोऽलङ्कार्यः तदङ्गतया शृङ्गारो रसोऽलङ्कारः । अत्र यः कौमारहर इत्यादि । न कस्याऽपि शृङ्गारोऽङ्गमिति शृङ्गारोऽलङ्कार्य्य एव नालङ्कारः ।

---

Readings:- (१८०) P. reads 'ण' for 'णं'; wrong.
(१८१) P. reads 'उत्पद्यमानत्वात्तथा...etc.
(१८२) P. reads 'रा for 'आ'; wrong.
(१८३) P. reads 'न्न'; wrong.
(१८४) P. reads 'त्वं'; wrong.
(१८५) P. reads 'र्य्यः'; correct.

इदमिति काव्यम् । बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य ।

---

**तद्भेदा**मि(**नि**)[१८६]ति । काव्यभेदान् विशेषानित्यर्थः । क्रमेणेत्यतः पूर्वं ध्वन्यादीनि दे(ज्ञे)यम् । [१८७]तेषामुत्तममध्यमाधमरूपत्वादुत्तमादीनां पौर्वापर्याभिधानस्य लोके प्रसिद्धत्वात् । पूर्वं ध्वनिस्ततो गुणीभूतं व्यङ्ग्यं ततश्चित्रमित्यर्थः । केचित् तु भिद्यतेऽनेनेति विशेषलक्षणम् । भेदनं भेदो[१८८] विभागश्च । तस्य विशेषलक्षणप्रयोज { न } कधर्मनिर्देशस्य पृथग् वाक्याभिधानं[१८९] नातिफलवदिति प्रतिलक्षणवाक्यमेव तदभिधानम् । [१९०]तेनोत्तमत्वादिना विभागो ध्वनित्वादिना विशेषलक्षणम् । क्रमेणेत्यतः पूर्वमुत्तमादीनि[१९१] विशेष इत्याहुः । वाच्यादभिधेयात् । { लक्ष्यादभिधेयसु[१९२]तरां } वाच्यादतिशयतः आस्वादनिर्वाह्यनिर्वाद(ह)कत्वं,[१९३] एतच्च वृत्तौ विवेचयिष्यामः । ध्वनिव्यवहारस्य समूलतामाह—**बुधैरिति** । के ते बुधा इत्याकाङ्क्षायामाह—**वैयाकरणैरिति** । वैयाकरणैः प्रधानभूतस्फोटरूपच्याप (व्यङ्ग्य) व्यञ्ज { न } कस्य शब्दस्य ध्वनिरिति व्यवहारः कृत इत्यन्वयः । प्रधानभूतो यः स्फु(स्फो)

---

Readings(१८६):–P. reads 'नि'; correct.

(१८७) Words beginning with तेषामुत्तम० etc., upto...चित्रमित्यर्थः । are missing in P.

(१८८) P. reads 'दा' for 'दो'; wrong.

(१८९) P. reads 'न' for 'नं': wrong.

(१९०) P. reads वाक्यमेव तदेभिधतेनोत्तम...etc.; wrong.

(१९१) Between 'दी' and 'नि', P. reads a quotation from K.P., viz....कारता तद्भेदान्क्रमेणाह etc..... upto न पुनस्तस्याधमस्यातिक्रम् ।

(१९२) P. reads 'लक्ष्यादतिशयेत्वसुतरां'.

(१९३) P. reads 'ह'; correct.

टो[१९४] ब्रह्मस्वरूपा[त्म]कः[१९५] कश्चन नादः, स्फोटस्तद्रूपं यद् व्यङ्ग्यं तद् [१९६]व्यञ्जको[ऽ]न्त्यवर्णस्तेनान्ते(न्त्ये)न[१९७] वर्णेन पूर्वपूर्ववर्णानुभवसंस्कारसं[१९८]हकृतेन स्फोटो व्यञ्जनया व्यज्यते । इत्यन्त(न्त्य)वर्णस्य ध्वनिरिति परिभाषा वैयाकरणैः कृता । ततो वैयाकरणमतानुसारिभिरस्माभिरप्यालङ्कारिकैरन्त्यवर्णस्यैव ध्वनिरिति व्यवहारं (रः)[१९९] कृतः । **अन्यैरिति** । आलङ्कारिकैरित्यर्थः । आलङ्कारिकैरपि वैयाकरणमतमेवाङ्गीकृतं न तु नैयायिकमतम् । तेषां मते स्फोटव्यञ्जकता नास्ति । किन्तु अन्त्यवर्णसम्बद्धेन पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतेन[२००] श्रोत्रेणैव पदप्रत्यक्षं जन्यते इत्यर्थः । व्यासार्थो यथा—वैयाकरणानामाद्यतांत्रिकत्वेन प्रामाणिकत्वात् अर्थप्रत्ययरूपफलोत्पादकत्वात् । प्राधान्ये[न] स्फुटयत्यर्थं[२०१] प्रकाशयतीति स्फोटः स च प्रत्यायका(क)[म]न्तरासम्भवे[न] वर्णात्मकशब्देन प्रत्याय्यः । तत्र का वृत्तिरित्यत आह—**व्यङ्ग्य** इति । सङ्केताभावेन वृत्त्यन्तराविषयत्वात् व्यञ्जनयैव प्रत्याय्यः । व्यञ्जनाविषयमुक्त्वाश्रयमाह—**व्यञ्जकस्येति** । व्यञ्जनाश्रयस्येत्यर्थः । व्यञ्जनाश्रयमाह—**शब्दस्येति** । ध्वनति[२०२] स्फोटं व्यञ्जयतीति ध्वनिः ।

अयमर्थः[२०३]—शब्दात् कथं पदार्थवाक्यार्थधीराशुविनाशिनां[२०४] क्रमिकाणां वर्णानां[२०५] मेलकाभावात्, आनुपूर्व्या ज्ञातुमशक्यत्वात्, पूर्वपूर्वव-

Readings:(१९४) p. reads 'स्फो'; correct.
(१९५) P. reads 'त्म'; correct.
(१९६) P. reads 'त्य'; wrong.
(१९७) P reads 'न्त्ये'; correct.
(१९८) P. reads 'णा'; wrong.
(१९९) P. reads 'रः'; correct.
(२००) P. does not read 'न'; wrong.
(२०१) P. reads प्राधान्यस्फुटयेत्यर्थः; wrong.
(२०२) P. reads 'ध्वनिति'; wrong.
(२०३) P. does not read विसर्ग; wrong.
(२०४) P. reads 'ना'; wrong.
(२०५) P. reads 'ना' for 'नां'; wrong.

यथा

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥२॥

अत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यते ॥

[२०६]र्णानुभवजनितसंस्कारसहकृतान्तिमवर्णानुभवि(वे)न[२०७] स्फोटो व्यज्यते। स च ध्वन्यात्मकः शब्दो नित्यो ब्रह्मस्वरूपतः(कः) सकलप्रत्यये[२०८] प्रत्यायनक्षमोऽङ्गीक्रियते। तद्व्यञ्जकः शब्द एव। वृत्तिस्तु व्यञ्जनैव। सङ्केताद्यभावात्। तद्व्यञ्जकशब्दश्च ध्वनित्वेन व्यवह्रियत इति वैयाकरणानां मतम्। तत् सत्। एवमन्तिमवर्णानुभवस्यैव पदार्थवाक्यार्थप्रतीतित्वे आनुपूर्वीज्ञानस्योपायसम्भवे [न] च किमन्तर्गड्डु(ण)ना[२०९] स्फोटेनेत्यत[२१०]आह **तन्मतानुसारिभिरित्यादि**। विषयभेदेऽपि व्यञ्जनावृत्त्यङ्गीकारेण तन्मतानुसरणं अन्यैरपीति। **ध्वनिकारादिभिरित्यर्थः**। अपिना बुधसम्बन्धसमुच्चा(च्च)यन [म्-][२११]। **न्यग्भावितेति**। यत्र वाच्योऽर्थो गौ(गु)णीकृतो[ऽ]चमत्कारकारित्वात्। चमत्कारकारी व्यङ्ग्य एवेत्यर्थः। **वृद्धव्याख्या**[44A] चैवम्। न्यग्भावितं स्वाधीनीकृतं वाच्यं यें(ये) नि(ने)ति व्यङ्ग्यविशेषणम्। व्यञ्जनं प्रतीतिस्तदितरालभ्यत्वेन क्षमता व्यङ्ग्यस्य ज्ञेयेति भावः। **शब्दार्थयुगलस्येति**। द्वयोरेव काव्यत्वादित्यर्थः।

Readings: (२०६) P. reads 'त्य'; wrong.
(२०७) P. reads 'वे'; correct.
(२०८) P. reads 'प्रत्याय्यः'.
(२०९) P. reads 'ण'.
(२१०) P. reads 'न' for 'ने'; wrong.
(२११) P. reads 'म्'; correct.

अत्र वदन्ति—कारिकास्थबुधपदेन कस्याभिधानं[45] वैयाकरणस्य, ध्वनिकारादेर्वा । नाद्यः, वैयाकरणेन शब्दार्थयुगलस्य [२१२]ध्वनित्वानङ्गीकारात् । नान्त्यः,[२१३] बुधैर्वैयाकरणैरिति विवरणविरोधादिति । ध्वनिकारादि[२१४]वैयाकरणश्च द्वावेव बुधपदार्थः । वाच्यादतिशयश्च तदनिर्वाह्यरूपनिर्वाहिकत्वम् । तत्त्वालङ्कारिकनये चमत्कारो, वैयाकरणमते च पदार्थवाक्यार्थ[२१५]धीरुभयमपि वाच्येन [२१६]शोध्यम् । व्यङ्ग्यं(ग्ये)नैवार्प्यमाणत्वमिति वाच्याद् व्यङ्ग्यस्यातिशयः । बुधपदार्थमुभयमेव क्रमेण व्याचष्टे । **वैयाकरणैरि** { त्यनैरापी } ति ।

उत्तमकाव्यस्य लक्षणमुक्त्वोदाहरणमाह —**निःशेषे**ति । इदमुत्तमं काव्यम् । अत्र नायकस्याभिसारणाय प्रेषितायां तं सम्भुज्य समागतायां दूत्यां सम्भोगचिह्नेन स्फुटीभवति तस्यापराधे, उदासीनेषु तत् सञ्च(संव[२१७])रणाय तस्यां च प्रकाशनाय स्नानकार्यमुखेन विदग्धनायिका रतकार्यमाह **वापी**त्यादि । हे दूति त्वां (त्वं)[२१८] वापीं स्नातुं गताऽसीति[२१९] सम्बन्धः । वापीं[२२०] न तु गृहम् । निःशेषच्युतचन्दनं स्तनतटमित्यादीनां विशेषणानां स्नानान्वयामु(नु[२२१])पपत्त्याऽधमपदसहायैरेभिरेव विशेषणैस्तु रंतु[२२२] गताऽसीति

Readings: (२१२) 'ध्व' is missing in P.; wrong.
(२१३) 'विसर्ग' is missing in P.; wrong.
(२१४) P. has 'ध्वनिकारवैयाकरणश्च'; wrong.
(२१५) P. reads 'र्थः'; wrong.
(२१६) P. reads 'वो' for 'शो'; could it be 'बो' ?
(२१७) P. reads 'संव'; correct.
(२१८) P. has 'त्वं'; correct.
(२१९) P. misses 'इति'. It has only 'सि'; wrong.
(२२०) P. has 'पी'; wrong.
(२२१) P. has 'नु'; correct.
(२२२) P. has 'त्वरंतु'; wrong.

व्यज्यते । अन्वयानुपपत्तिर्यथा— निःशेषच्युतचन्दनं स्तनतटं, नितरां [२२३]शेषो यत्र तत् सम्पूर्णं चन्दनं भ्रष्टं नास्ति किन्तु स्तनतटे भ्रष्टम्[२२४] । परं सम्पूर्ण-स्तने न भ्रष्टम् । स्नाने तु सम्पूर्णे स्तने भ्रष्टं[२२५] भवति । तटं समीपे । समप्रायस्थलम् । तत्र चन्दनं निःशेषच्युतम् । अन्यत्र स्तनसम्बन्धि चूचुकाऽऽदिषु स { म } शेष[म्] । वापीतीरस्य जमा(ना[२२६])कीर्णतया व्रीडया तथाविध-मार्जना(न)विरहात् । एवं निर्मृष्टरागो[ऽ]धरः । अधर एव रागो निर्मृष्टो नोपरितनोष्ठ[२२७]रागो मृष्टः । न्युब्जतया तत्र जलास्थि(स्थै)र्यात् चुम्बनविरोधाच्च[२२८] । नेत्रे दूरमनञ्जने ईषदञ्जनरहिते । स्नाने सम्पूर्णमञ्जनं गच्छति । दूर(रं) वा (चा)प्यञ्जनरहिते क्षालनात् चुम्बनाच्च । दूरं [२२९]न तु तन्मध्यस्नानसमये । मुद्रणात् चुम्बना(न)भावाच्च इयं तन्वी तनुः पुलकिता जातरोमोद्गमा[२३०] । वापं स्नाने[२३१] रोमोद्गमो न भवति । तत्र घर्मनिवृत्तेरेव जायमानत्वात् । मिथ्यावादिनि, [तदंतिक]मगत्वास्माद्[४६] भाविनि । बहुधाभ्य-र्थितोऽपि नायते (याति) । इत्यादेदिनि (दूत्यादिना) (or,इत्यादीनि)[२३२]च एवमे-वास्मत्प्रतारणं तव शीलम् । णिन्यर्थोऽयं[२३३] दूतिदूतस्य मि[थ्याभिधानं...स्व[४७]]-भावः । दूति न तु सखि । तथात्वे प्रतारणं मत्प्रियसम्भोगश्च । तस्मात्

Readings:(२२३) P. has 'निशेषो'; wrong.
(२२४) P. misses 'म्'; wrong.
(२२५) P. misses the अनुस्वार; wrong.
(२२६) P. has 'ना'; correct.
(२२७) 'ष्ठ' is missing in P.; wrong.
(२२८) 'च्च' is missing in P.; wrong; also P. further reads 'नेत्रो'; for नेत्रे; wrong.
(२२९) 'न' is missing in P.; wrong.
(२३०) P. has 'माः'; wrong.
(२३१) 'ने...... भवति' is missing in P.; wrong.
(२३२) P. has इत्यादीनि; correct.
(२३३) P. has 'य' for 'यं'; wrong.

(सू० ३) अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।
अतादृशि वाच्यादनतिशायिनि । यथा

उद्देश्यका[234]र्यानिर्वा(र्व)हणतया प्रियरमणेन त्व(तु) बान्धव [जनस्य[235]]पीडा दुःखं भवति । तत्त्वं[236] जानासि इत्यन्वयाऽनुपपत्त्या [237]लक्षणामूलव्यञ्जनया रन्तुं गताऽसीति व्यज्यते । व्याचक्षे(क्ष[238])ते केचित् त[त् युक्तं][239] निःशै-(शे[240])षच्युतचन्दनादी(दि)नां जनसम्मर्दशीतकालेऽपि[241] सम्भवात् । तया(था) नायिकया शीतकालेऽल्पस्नानकरणादेतत्सर्वसम्भव इति नान्वयाऽनुपपत्तिः[242]। किन्तु स्नानप्रका[243]शनमुखेन रन्तुं गताऽसीति[244] व्यज्यते । यतः स्नानसुरतयोरेकं कार्यम् । वाच्यार्थापेक्षया व्यङ्ग्यस्य चमत्कारकारित्वादित्यर्थः । अत्र स्नातुं गताऽसीति विधेः काक्वा निषेधप्रतीतेः । न पुनर्गताऽसीति निषेधात् । तत्रैव रन्तुं गताऽसीति विधिर्व्यङ्ग्य इत्यर्थः । अत्र निःशेषच्युतच-

Readings: (२३४) P. has 'पी' for 'र्या'; wrong.

(२३५) P. supplies 'जनस्य'; correct. But P. also reads 'यथा' after 'जनस्य'. Words-'अत्र तदंतिकमेव etc....upto नितरां मलिना मुखच्छाया' are also quoted from K.P. in between the lines.

(२३६) P. has 'न त्वं' for 'तत्त्वं.

(२३७) P. has 'लक्षणानुकूल'; wrong.

(२३८) P. has 'क्ष'; correct.

(२३९) The words in the bracket [ ] are read in P. only. B. misses it.

(२४०) P. has 'शे'; correct.

(२४१) P. misses 'ऽपि......शीतकालेऽ;' wrong.

(२४२) 'विसर्ग' is missing in P; wrong.

(२४३) P. has 'से' for 'श'; wrong.

(२४४) 'ति' is missing in P.; wrong.

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥३॥

अत्र वञ्जुललतागृहे दत्तसंकेता नागतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया वाच्यस्यैव चमत्कारित्वात् ।

---

न्दनादिनां[२४५] पदानामधमपदसहायानामेव व्यञ्जकत्वम् । तथाऽत्र वस्त्वलङ्कारे(र)रसरूपस्त्रिविधोऽपि ध्वनिरुक्तः । कथमित्याह—अधमपदेन शब्दशक्तिमूलो वस्तुध्वनिः । तथा त्वां दूतीमपि यः कामयते स्वमुखसङ्गान्मां विप्रलभसे, स इव त्वमधम(मा)[२४६] । त्वमिव सोऽप्यधम इति द्वयोः पर्यायेण तस्मिन्नुपमेयोपमेति उपमालङ्कारो व्यङ्ग्यः[48] । द्वयोरुमानोपमेययोः[२४७] क्रमेण पर्यायेण तस्मिन्नुपमानोपमेयभावे सति उपमेयोपमा । लक्षणं यथा—खमिव जलं जलमिव खं [२४८] हंसश्चन्द्र इव हंस इव चन्द्रः, कुमुदाकरो(रा)स्तरो(स्तारा) स्तारा[२४९]काराणि कुमुदानीति १ । तथा नायिकाविप्रलम्भशृङ्गारोऽपि व्यङ्ग्यः ।

उत्तमकाव्यं सोदाहरणं[२५०] लक्षयित्वा मध्यमकाव्यस्य लक्षणमाह-**अतादृशीति** । व्यङ्ग्ये अतादृशि सति वाच्यो (च्या) { ऽ } र्थो(र्था) पेक्षया[२५१]ऽचमत्कारिणि सति । अयमर्थः—वाच्यार्थो[२५२]पेक्षया व्यङ्ग्य(ग्यं) चमत्कारं न करोति । तन्मध्यमं काव्यमित्यर्थः । तदेव गुणीकृतं व्यङ्ग्यं कथितमित्यनु-

---

Readings: (२४५) P. has 'दी'; wrong.
(२४६) P. reads 'मा'; correct.
(२४७) P. misses the विसर्ग; wrong.
(२४८) P. wrongly reads 'श्च' after खं, and misses 'हंसश्चन्द्र इव'; wrong.
(२४९) P. also reads faultily : 'कुमुदाकरास्तरा स्तराकाराणि'.
(२५०) P. reads 'ण' for 'णं'; wrong.
(२५१) P. reads 'याः'; wrong.
(२५२) P. has 'र्थे' for 'र्था'; wrong.

षज्यते । तस्योदाहरणमाह–**ग्रामतरुणमिति** । कश्चित् काञ्चिदित्याह— तरुण्या मुखच्छाया नितरां मलिना भवन्ति(ति)[२५३] । कथम्भूताया[ः], ग्रामतरुणं नववञ्जुलमञ्जरीसनाथकर(रं)[२५४] पश्यन्त्याः इत्यन्वयः । ग्रामशब्देन ग्रामस्थस्तरुणो ग्राह्यः । ग्राममध्ये स एवैकोऽतिशयितः कामुक इति द्योत्यते । तं पुरुषं नववञ्जुलमञ्जरीसंयुक्तकरं मुहुर्मुहुः पश्यन्त्यास्तरुण्या नितरां मुखच्छाया मुखकान्तिर्मलिना भवति । अत्र भवतीति[२५५] वर्तमानव्यपदेशेच(न) दर्शनवैवर्ण्ययोरविरामः सूच्यते । स्वयं सङ्केतस्थाने[ऽ]गमनत्वात् पुरुषस्य तत्र गमनात् नायिकाया अगमनाच्च मुखवैवर्ण्यमित्यर्थः । अत्र गुणीभूतं व्यङ्ग्यं किमित्याकाङ्क्षा[२५६]यामाह–अत्रेति । अत्र वञ्जुलस्थले दत्तसङ्केता नागतेति व्यङ्ग्यम् । नितरां मलिना मुखच्छायेति वाच्यमुखप्रेक्षित्वेन व्यङ्ग्यस्याऽचमत्कारिता । वाच्यमुखनिरीक्षकत्वेने[२५७] वैतस्य चमत्कारो, न तु स्वातन्त्र्येण । किन्तु-(न तु) दत्तसङ्केता नागतेत्येतावन्मात्रस्य चमत्कारित्वं किन्तु मलिना मुखच्छायेति वाच्यसहकृतस्यैव चमत्कारिता । तथा च वाच्यमुखनिरीक्षै[२५८]कत्वाद् व्यङ्ग्यं गुणीभूतमित्यर्थः । तथा च यावत्पर्यन्तं व्यङ्ग्यप्रतीतिर्नास्ति तावत्पर्यन्तं वाच्यार्थ एवापरिसमाप्तस्ततो व्यङ्ग्यं वाच्यार्थस्योपपादकं जातम् । वाच्यार्थस्योपपत्तिः कृता । यत एतस्या मुखछा(च्छा)या मलिना किमिति जा-(जा)[२५९]ता । यतो वञ्जुलै[२६०]लतागृहे दत्तसङ्केता नाऽऽगतेति वाच्यार्थेन व्यङ्ग्य-

---

Readings: (२५३) P. has 'ति'; correct.

(२५४) P. reads 'रं'; correct.

(२५५) 'ति' is missing in P.; wrong.

(२५६) P. reads 'क्ष'; wrong.

(२५७) P. has....निरीक्षकत्वेन नैतस्य चमत्कारो.

(२५८) P. has 'क्ष्य'; wrong.

(२५९) P. reads 'जा'; correct.

(२६०) 'ल' is missing in P.; wrong.

(सू०४) **शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥५॥**
**चित्रमिति गुणालङ्कारयुक्तम् । अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थरहितम् ।**

---

स्योपपत्तिः कृता । वाच्यार्थनिर्वाहकारित्वाद् व्यङ्ग्यस्य चमत्कारकारित्वम् । न तु स्वातन्त्र्येणेति स्पष्टोऽर्थः ।

अधमकाव्यं लक्षयति-**शब्दचित्र**मिति । चित्रशब्दार्थमाह-**चित्रमि**[२६१] { ती } -ति । गुणा माधुर्य्या[द]यस्ते रसधर्मा अपि उपचारात् शब्दगुणा अर्थगुणा इत्युच्यन्ते[२६२]। तथा च वक्ष्यति–गुणवृत्त्या { स्तेषां } पुनस्तेषां वृत्तिः शब्दार्थयोर्मतेति[२६३] । शब्दालङ्कारा अनुप्रासादयः, अर्थालङ्कारा उपमादयस्तैर्युक्तम् । अव्यङ्ग्यमित्यस्यार्थमाह–**अव्यङ्ग्यमि** { ती } ति । अव्यङ्ग्यं व्यङ्ग्यरहितं, अवरमधमं[२६४] काव्यं स्मृतम् । तच्च शब्दचित्रं वाच्यचित्रं अव्यङ्ग्यमधमं ज्ञेयम् । अत्र ईषदर्थे नञ्, न तु सर्वथा निर्व्यङ्ग्यं यतः–

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थितिः ।
काव्ये उभे ततो { ना } [ऽ]न्यत्[२६५] तच्चित्रम(मित्य)भिधीयत(ते) ॥

इति । अव्यङ्ग्यं चित्रमिति लक्षणपदमध्याहार्य्यम् । चित्रमिव चित्रम् । यथा चित्रं देवादेः नृपादेर्वा[२६६] ज्ञापनाय लिखितप्रतिकृत्या विविधविचित्रवर्णकरेखाघटनावैचित्र्येण स्वस्य चित्तमाकृष्य उत्तरकालं प्रकृतयः स्मार्य्यन्ते[२६७] । तथाऽत्राऽपि झटित्यास्वादोद्बोधायोपनिबद्धैर्गुणालङ्कारैरुत्कटवैचित्र्येणाऽऽत्मनि सहृदय-

---

Readings: (२६१) P. has 'म' for 'मि'; wrong.
(२६२) P. has 'ते' for 'न्ते', wrong; also, it has 'ण' for 'णा' in 'अर्थगुणा'; wrong.
(२६३) P. has 'भवतः; wrong.
(२६४) P. has 'अवरमधमकाव्यं'.
(२६५) P. also reads faultily 'ततोन्य अन्यत्'; then, 'तत्' is also missing.
(२६६) P. does not read 'वा'. It has 'नृपादेर्ज्ञापनाय'.
(२६७) P. has 'र्य्यन्त'; wrong.

अवरम् अधमम् । यथा

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः ।
भिद्यादुद्यदुदारदर्दुरदरी दीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥४॥

---

हृदयविश्रामपरतया यथाकथञ्चित् तदङ्गता { सा } स्वाद्यत [उत्तरं] इति चित्रता । अत एवोद्देश्यानिर्वाहकत्वादधमत्वम् । नन्वास्वादवदेव काव्यमास्वादश्च व्यङ्ग्य एवेति कथमव्यङ्ग्यमित्याह—**स्फुटेत्यादि** । स्फुटो झटित्युदबुद्ध-प्रतीयमानोऽर्थो व्यङ्ग्यस्तेन रहितं(त)मध्य(ध)मत्वेऽप्यव(प)रम(त)येष्ट-[२६८]मित्याह—**अवरमिति** । तत्र शब्दचित्रमुदाहरति **स्वच्छन्देति** । मन्दाकिनी वो युष्माकं, मन्दतां जडतां, अह्नाय क्षिप्रं, भिद्यात् । कीदृशी गङ्गा ।[२६९] स्वच्छन्दं स्वाधीनम् । न तु वातादिपरतन्त्रम् । उच्छलदुत्तरङ्गम् । इदमम्बुविशेषणम् । तेनाम्बु बाहुल्याद् गाम्भीर्य्यम् । कच्छे सजलप्रदेशे जलसमीपे निरन्तरं तरङ्गैः खननात् कुहरम् । तत्र छातेतरत् अल्पेतरत्[२७०] । अतस्तटसमीपेऽपि दुरवगाहता [ता]दृशाम्बुनः । छटा परम्परा । तया मूर्छे(र्च्छ)न् । मोहो वैचित्र्यं, विस्मयो[२७१] येषाम् । अथवा **टीकान्तरे**[४९] स्वच्छन्देन स्वेच्छया उच्छलन्त्योऽच्छा निर्मला कच्छ-देशेषु जलप्रायनिम्नस्थलेषु [२७२]छातेतराः स्थु(स्थू[२७३])ला अम्बुच्छटा जलकल्लोलास्ताभिर्मू { र्च्छानिश्य } [र्च्छ]न्[२७४] माहो येषाम् । ते च ते महर्षयश्च । तैर्मह-

---

Readings: (२६८) P. reads faultily: 'एवमयेष्ट'.

(२६९) P. reads K. P. text: अत्र वंजुलऽता......मंदतां, between 'स्व' & 'च्छ'.

(२७०) P. reads 'त' for 'त्'; wrong.

(२७१) 'स्म' is missing in P.; wrong.

(२७२) P. reads 'स्था' for 'छा'; wrong.

(२७३) P. has 'स्थू'; correct.

(२७४) P. also reads faultily; 'छालिश्यन्' !

र्षिभिर्हर्षेण विहितस्नानमाह्निकं[२७५] च यस्यां सा । वाताद्यभावेऽपि कथमीदृशी वृद्धिः । अमी तरङ्गा[ए]वेति विचित्रता । चिरजीविनामस्माकमा(म)कल्प्यमेव सुखेन स्नानादिकं भविष्यतीति । गङ्गाया उत्कर्षदर्शनेन हर्षः सहस्रगुणफलदत्वेन तथैवाह्निकं(क)स्नानस्य मुक्तिफलकत्वेन पृथगुपन्यासः । पुनः कीदृशी मन्दाकिनी उद्यद्दिति । उद्यन्त उदारा बहवो दर्दुरा मण्डूका यासु ता दर्यश्च । ताभिः दीर्घेषु अदरिद्रेषु { समुद्रेषु } द्रुमेषु द्रोहोद्रेको[२७६] येषां ते च ते महोर्मयश्च । तैर्मेदुरोऽधिको मदो यस्याः सा । अथवा उद्यन् उदारो महान् दर्दुरः पर्वतभेदस्तस्य दर्य्यादि[दै]र्घ्यं { यस्यास्तांभित्वा झटिति जलनिर्गमेण दैर्घ्यं } न तु जल { स्थ } गतं, तेन वेगातिशयः । अदरिद्राः परिणाहौच्च्राय(होच्छ्रॅाये)[50] रूढमूलत्वादाद्या (द्दीर्घा[२७७]) द्रुमास्तेषां द्रोहः पातनम् । उद्रेक ऊर्ध्वप्रसरणम् । तन्मयाः तद्युक्ताः ये तरङ्गास्त एव । निबिडः स्निग्धोऽहङ्कारो यस्याः सा मन्दाकिनी स्वर्गङ्गा । अत्र स्वाधा(धी)नो[२७८]च्छलनेनानव[र]त[२७९] वृद्ध्या, तटस्थमहाद्रुमपातनेन, दुर्भेदपर्वतभेदक्षमा(माः) । वर्गातिशयेन च म(न)द्यन्तराद् व्यतिरेकः । श्रवणकीर्तनदर्शनस्पर्शनैः पुण्यजनकानां[२८०] महर्षीणां सेवनेन च [२८१]तद्विषयकस्तावकभावः प्रति(तो[२८२])यते । प्रति एव जीवा ततश्च (प्रतिपदजीवातुतश्च)[51] तदनुगुणा एव मन्दाकिनी । तद्गुणाश्चालम्बनोद्दीपनभावै(वाः)स्ततो(स्तवो)ऽनुभावा(वः), सञ्चारिणश्च मत्यात्सुस्थादय (स्मृत्यौत्सुक्यादय)[२८३]

Readings: (२७५) P. has 'विहितस्नानादिकं च'.
(२७६) P. has 'द्र' after 'हो'; useless. Then it misses words viz. 'द्रेको...... ते'.
(२७७) 'दीर्घा' is read in P.; correct.
(२७८) P. reads 'ना' for 'नो'.
(२७९) P. reads 'र'; correct.
(२८०) P. reads पुण्यस्थ; wrong.
(२८१) P. reads तदविषय०; wrong.
(२८२) P. has 'ती'; correct.
(२८३) P. has 'मत्यावस्थादय'.

विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम् ।
ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती॥५॥

इति काव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूपविशेषनिर्णयो नाम प्रथम उल्लासः ॥१॥

---

एवेति गङ्गाविषयके[२८४]भावसम्भवेऽपि झटिति न रसस्यावभासः । द्रवद्द्रू(दरिद्र-द्रुमरू)[२८५]पेणानुप्रासप्रकर्षेण प्रथमं[२८६] चित्तोत्कर्षणात्[२८७] तद्व्यवधानेनैव तदवगते[२८८] तटभङ्गद्रुमपातनपर्वतभेदनगम्यगङ्गानिष्ठौजःप्रकाश[क]तया[६२] महाप्राण-वर्णानुप्रासयोर्गुणालङ्कारत्वे[न] एव सर्वथाऽवधेयम् । अत्र कवेर्गङ्गा(ङ्गां) प्रति भक्तिख्यापनेन रत्याख्यो भावोऽ[२८९]भिव्यज्यते । परमत्र[अचमत्]कारित्वान्न स्फुटः । अनुप्रासै(से) कव(वे)[२९०]स्तात्पर्य्यात् तिरोधीयते । अत्र ओजोलक्षणे व्यङ्ग्ये प्रतीयतो(मा[२९१])ने सत्यपि, काव्यस्य गुणाव्यभिचारित्वात् तद्व्यतिरिक्तस्यैव व्यङ्ग्यस्य प्रतीयमानत्वं[२९२] विवक्षितम् । अन्यथा काव्यत्वस्यैव हानिरिति भावः ।

वाच्यचित्रमुदाहरति, **विनिर्गतमिति** । अमरावती इन्द्रपुरी । भिया भयेन इवोत्प्रेक्ष्[२९३]यते । निमीलिताक्षीव भवतीत्यन्वयः । किं कृत्वा यं हयग्रीवं आत्म-

---

Readings: (२८४) 'क' is missing in P.; wrong.
(२८५) P. has प्रवहद्द्रूपेण०; equally faulty.
(२८६) P. has 'स' for 'थ'; wrong.
(२८७) 'त्' is missing in P.; wrong.
(२८८) P. has 'मे' for 'ते'.
(२८९) Words, 'भिव्यज्यते...स्फुटः' are missing in P.
(२९०) P. reads 'वे'; correct.
(२९१) P. has 'मा'; correct.
(२९२) P. has 'त्व'; wrong.
(२९३) P. reads 'क्ष'; wrong.

मन्दिराद् विनिर्गतमुपश्रुत्य। कथम्भूतं हयग्रीवं[२९४] मानदं मानं[२९५] अहङ्कारं शत्रोर्द्यति, मित्राय मानं सत्कारं ददातीति मानदं[53] आत्मीयगृहाद् विनिर्गतं न त्वमरावत्यां प्रविष्टम्। यदृच्छया स्वेच्छया[२९६] भ्रमणिकाभिलाषेण, न तु युयुत्सया। उपश्रुत्य कर्णाकर्णिकया[२९७] दूतमुखात् श्रुत्वा। किं विशिष्टाऽमरावती [२९८]ससंम्भ्रमेन्द्रद्रुतपातितार्गला। [२९९]दोका(दौवा)रिकाह्वाने विलम्बभया[त्] { काव्यं } [३००]ससंम्भ्रमेण इन्द्रेण द्रुत(तं)[३०१]पातितार्गला यस्याः सा। इन्द्रस्यैवमैश्वर्यह(व)तोऽप्येवं भयम्। द्वारपिधानेन[३०२]नयननिमीलनमुत्प्रेक्षितम्। अस्याश्चोत्प्रेक्षायाः सहृदयस्य विश्रामहेतुरुत्कट[३०३]चमत्कारकारकता। अत्र हयग्रीवस्य वीरो रसः प्रतीयत इति स एवालम्बनं, प्रतिपक्षेन्द्रगतं भयमुद्दीपनं, शत्रुमानखण्डनमनुभावः, यद् दृष्ट्वा सञ्चरणगम्या धृतिः सञ्चारिणीति पूर्वघनानन्दस्य [३०४]वीरस्य स[३०५] हृदया[न]नुभवे उत्प्रेक्षोत्थापि[३०६] स्फुटतरश्चमत्कारो व्यवधिः[54]। नायकेन्द्रभयप्रदर्शनप्रभूतममरावतीभयमपि वीररसपरिपोषकृति(दि){ इ }त्युत्प्रेक्षाया अलङ्कारत्वम्। केवलमनयोर्लक्ष्ययोः शब्दार्थगतवैचित्र्यप्रतीतिव्यवधानेन भाववीरयोः[३०७] प्रतीतिरिति व्यङ्ग्यस्याऽस्फुटत्वेन चित्रत्वमित्य-

---

Readings: (२९४) P. has 'व'; wrong.
(२९५) P. has 'न'; wrong.
(२९६) 'स्वेच्छया' is missing in P.
(२९७) P. has 'कर्णकया'; wrong.
(२९८) P. has 'यसं'; wrong.
(२९९) P. has 'दौका'; wrong.
(३००) P. has 'सं'; wrong.
(३०१) P. has 'तं'; correct.
(३०२) P. has 'नाविन' for 'नयन'; wrong.
(३०३) P. has 'उ' for 'रु'; wrong.
(३०४) P. has 'वीरनसस्य'. It could be वीररसस्य.
(३०५) 'स' is missing in P.; wrong.
(३०६) P. has त्वाप्युत्कटतर०; wrong.
(३०७) P. has भाविस्थोः; wrong.

वधेयम् । अयमर्थः । अत्रोत्प्रेक्षा[३०८]रूपेऽर्थालङ्कारे कवि(वे)स्तात्पर्य्यात् धीरादयो व्यङ्ग्यास्तिरोधीयन्ते इति प्रघट्टः[३०९] ।

[३१०]अत्र केचित्—चित्रं न काव्यभेदः, व्यङ्ग्यस्य प्राधान्येन प्रतीतौ ध्वनित्वं, तदन्यथा च गुणीभूतव्यङ्ग्यत्वमिति प्रकारान्तर(रा)सम्भवात् । तदुक्तं **ध्वनिकृता**—

प्रधानगुणभावाभ्यां[३११] व्यङ्ग्यस्यैवं व्यवस्थितिः ।
उभे काव्ये, तदन्यद् यत्तच्चित्रमभिधीयते[३१२] ॥ इति ।

व्यङ्ग्यस्य द्वैविध्यात् , काव्यं द्विविधं, तदन्यद् यत्तच्चित्रम् । न तु काव्यमित्यभिप्रायात् । तेन चित्रस्य काव्यत्वोपगमो गड्डरिकाप्रवाहि(हे)णेत्याहुः । तन्मतानुसारिणोऽप्यन्ये चित्रस्य काव्यता(तां) नाऽनुमन्यन्ते, तन्न । वाचकवाच्यवैचित्र्यप्रतीतिव्यवहितप्रतीतिकत्वस्य तृतीयप्रकारस्य दर्शितत्वात् , तदुभयवैचित्र्ये[३१३] च व्यङ्ग्यस्य नाङ्गित्वं न [३१४]चाङ्गत्वमिति ध्वनिगुणीभूतव्यङ्ग्याभ्यां[३१५] भेदः । [३१६]ध्वनिकारवचनं तु व्यङ्ग्यस्य [३१७]प्रधान-गुणभावाभ्यां काव्ये द्विविधे । यत्र तु व्यङ्ग्यस्य {सु} वाच्यापेक्षया न प्राधान्यं न च गुणीभावस्तच्चित्राख्यं तृतीयप्रकारं काव्यमित्यर्थः । पर(रं)

Readings: (३०८) P. has 'क्ष'; wrong.
(३०९) P. has 'घटः'; wrong.
(३१०) 'त्र' is missing in P.; wrong.
(३११) P has 'प्राधान्य'.
(३१२) After 'ते'; P. reads K.P. text–'विनिर्गत.... नाम 'प्रथमोल्लासः' in between the lines.
(३१३) P. has 'त्र्यैव'; wrong.
(३१४) P. has 'वां'.
(३१५) P. has 'नां'; wrong.
(३१६) P. has 'ध्वं'; wrong.
(३१७) P. has 'प्रधान्य'; wrong.

{ त्वं [56]नन्वै } [चै]वमलङ्कारगुणसत्त्वे[३१८] सर्वत्रैव [३१९]विचित्रतापत्तेर्न त्रैविध्यं { न } स्यादिति चेन्न, यच्च(त्र) गुणालङ्कारयोर्नोद्भटवैचित्र्यं तत्रैव पूर्वोभयरूपत्वात्, फलेनैतद् विवेचनोपपत्तेः । किञ्च यत्रास्वादनिर्वाहकप्रयत्नेन कविभिस्तयोर्निर्वाहणं तत्र नोद्भटता, यत्र तु तन्निर्वाहमुद्दिश्य पृथक् प्रयत्नस्तत्रैव तथेति, तदेव चित्रमिति । अत एव चित्रस्थले **ध्वनिकारको (रेणो)**क्तं विवक्षा तत्पर { म } त्वेन नाङ्ग(ङ्गि)त्वेन कथञ्चन, तच्चित्रम् । तत्पर{ म } त्वेन अलङ्कारपरत्वेन नाङ्गित्वेन रसतात्पर्येण । तच्चित्रमिति सिद्धम् । त्रैविध्यमित्यादि विशेषव्याख्या **चक्रवर्त्तिटीकायां**[57] प्रसिद्धेत्युपगम्यते[३२०] । इति **काव्यप्रकाशटीकायां गुणरत्नगणि**कृतायां[58] प्रथम उल्लासः सम्पूर्णः । १।

Readings: (३१८) 'सत्त्वे' is missing in P.; wrong.
(३१९) 'वि' is missing in P.
(३२०) P. has 'रमते'.

**क्रमेण शब्दार्थयोः स्वरूपमाह ।**

**(सू० ५) स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

**अत्रेति काव्ये । एषां स्वरूपं वक्ष्यते ।**

प्रथमोल्लास(से) शब्दार्थौ काव्यमित्युक्तं, तत्र कतिविधः शब्दः कतिविधो वार्थ इत्याकाङ्क्षायां प्रसङ्गसङ्गत्या तद्विभागप्रतिपादकमवतारयति । प्रथम(मं) शब्दस्य ततोऽर्थस्येत्यस्य—**स्वरूपं** विशेषरूपं, विभागरूपमित्यर्थः[1] । नन्वर्थशास्त्रादौ व्यञ्जकशब्दव्यवहाराभावात् कथं [2]त्रैविध्यमित्याशङ्क्य श्लोकगतात्रशब्दार्थमाह । **अत्रेति** । **काव्य** इति । वैयाकरणैः स्फोटं प्रति व्यञ्जकत्वश्रवणात् काव्यग्रहणमुपलक्षणं[3], व्यङ्ग्यस्यैव रसस्य प्रतिपादके काव्ये व्यञ्जकशब्दोऽवश्यंभावीति[4] त्रैविध्यमुदि(चि)तमित्यर्थः । वस्तुतस्त्वत्र व्यञ्जकत्वमेव निरूपणीयत्वयोद्देश्यं नोपाध्यन्तरं, तस्य सर्वतन्त्रसिद्धत्वात्, केवलमेतदुपपत्तये तदनुवादः । व्यञ्जकत्वं तु शब्दार्थोभयवृत्तित्वेन निरूपयिष्यमाणमिति । तदपेक्षया एकवचनमिति भावः । स्वरूपमसाधारणो धर्मः । तन्निरूपणं तु विभागानन्तरमेव सुकरमिति विभागमाह—**स्यादित्यादि** । वाचको लाक्षणिकव्यञ्जकयोर्व्यञ्जकस्य वाचकलाक्षणिकावुपजीव्या(व्य) [त्वा]दित्युपन्यासक्रमः । ननु विभागस्य विशेषलक्षणाभिधानप्रयोजकत्वेन विभागानन्तरं, तदुचितमित्याह—**एषामित्यादि** । अत्रापि स्वरूपमित्येकवचनं व्यञ्जकस्य प्राधान्यज्ञापनाय । **वक्ष्यत** इति । विभागप्रकरणसमाप्तौ । साध्यार्थविभागसिद्धावेव स्यादिति । **संप्रति** वाचकादीनां लक्षणा{न}भिधानं अर्थविभागमाह—**वाच्यादय** इत्यादि । तेषामर्थास्तदर्थाः[5] । वाचकत्वादिव्यापारेण [6]वाचकादि-

Readings: (१) P. has विशेषरूपविभागमित्यर्थः । Faulty.
(२) P. has 'त्रि' for 'त्रै'; wrong.
(३) P. has काव्यलक्षणमुपग्रहण०; wrong.
(४) P. has °वीत्यति०; wrong.
(५) 'स्त' is missing in P.; wrong.
(६) 'वाचकत्वादि....... उपस्थापितस्य' is missing in P.; wrong.

(सू०६) वाच्यादयस्तदर्थाः स्युः
वाच्यलक्ष्यव्यङ्ग्याः ॥
(सू०७) तात्पर्यार्थोऽपि केषुचित् ॥ ६ ॥

गम्या इत्यर्थः । अन्यथा तत्पदानुपादाने अर्थमात्रानुवादेन विभागे अविनाभाग(व) सम्बन्धादिना उपस्थापितस्य वाच्यत्वाद्यन्यतन(म)रू[७]पविरहेण विभागन्यूनता स्यात् । वाच्यादिवत् तदनुवादो न प्रकृतः । वृत्तिं विना लभ्यस्य (स्ये)[८]तरस्य व्यञ्जनादावपरिपन्थित्वादि(द्)[९] वाच्यादि शब्दस्याजहत्स्वार्थपरत्वमाह-**वाच्यलक्ष्यव्यङ्ग्या** इति । तेषां वाचकलाक्षणिकव्यञ्जकानां शब्दानामर्थास्तदर्थाः । वाच्यादिशब्दस्या { र्थ } जहत्स्वार्थपरत्वमाह—**वाच्यलक्ष्यव्यङ्ग्या** इति । ये त्वादिपदविवरणमिति व्याख्यान्ति ते[1A] तुच्छा, लक्ष्यव्यङ्ग्ययोरेवादिपदग्राह्यत्वात् वाच्यस्य वाच्यपदेनैवाभिधानात् । नन्वादिपदेनै[१०] तात्पर्यार्थस्यापि किमिति नोपादानमित्याह—**तात्पर्यार्थोऽपीत्यादि** । **केषुचिदिति** । षष्ठ्यर्थे[११] सप्तमी । केषाञ्चिदित्यर्थः[2] । केषाञ्चिद् वेदान्तिनां[१२] मते चत्वारोऽर्था इति जातम् । असार्वत्रिकत्वेनै[१३] तुल्यव(त्वा)दभिधानं[१४] व्यङ्ग्यस्य[2a] । तथात्वेऽपि प्रकृतग्रन्थप्रतिपाद्यतया प्राधान्यम् । अयमर्थः । वाच्य[१५]लक्ष्ययोः सार्वत्रिकत्वेन प्राधान्यं

Readings: (७) P. reads 'म'; correct.
(८) P. reads 'स्ये'; correct.
(९) P. reads 'द'; wrong.
(१०) P. reads देपन०; wrong.
(११) P. has 'ष्ठीत्यर्थे०' wrong.
(१२) P. has 'न्तीनां'; wrong.
(१३) Between 'त्वे' and 'न', P. reads K.P. text portion: 'अथ क्रमेण......भिधानवादिनः ।'
(१४) P. reads....'तिधान्यं'; wrong.
(१५) P. has 'वाचत्व'; wrong.

**आकाङ्क्षायोग्यतासंनिधिवशाद्वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् ।**

---

प्रकृतग्रन्थानुद्देश्यतया गुण[त्व]मेव । व्यङ्ग्यस्यासार्वत्रिकत्व(त्वे) [न] ग्रन्थोद्देश्यत्वास्यां(तया) प्राधान्याप्राधान्ये । इत्यमीषां तुल्यता । न तु[१६] तात्पर्यार्थस्याऽतथात्वादिति पृथगुपन्यासः । अयमर्थः । तुरीयवृत्तिवादी प्राह[१७]—वृत्तिं[१८] विना[2A] अर्थबोधनेऽतिप्रसङ्गाइ(दि)त्यन्वये तात्पर्याख्या वृत्तिः । न च तत्रापि पदानां वृत्तिः । अनधिगतपदार्थस्य वाक्यार्थानवगमात् तत्राप्यभिधानदोषः[१९] स्यात् । यतः प्रथमं पदार्थमुपस्थाप्य [२०]संसर्गमुपस्थापयतीत्यपि नास्ति । अत्र एवान्वये[2B] लक्षणेति यद् भट्टमतं तदस्यैव[२१] लक्षणेति नामान्त[२२]राभिप्रायेण । न च प्राचीनलक्षणा मुख्यार्थबाधाद्यभावात् । अर्थो ह्यत(न)न्वि[२३]तावस्थः पदेता(ना)-[२४]भिहितो, यतः अन्विता[२५]मात्मनोऽवस्थां लक्षितामेव लक्षयेदिति तात्पर्य्यविषयीकृतामेवेत्यर्थः । वाक्यार्थोपलक्ष्यमाणो हि सर्वत्रैवाऽभिलक्ष्यत इति । चेतनान्वये[3] । तात्पर्य्यवृत्तिरित्याह—**आकाङ्क्षे**त्यादि । अथवा केषाञ्चिद् वादिनां मते चत्वारोऽर्था इति वेदान्तिमतम् । वेदान्तिनां मते तात्पर्यार्थोऽपि पदार्थः ।

---

Readings: (१६) P. has 'मनु'; wrong.
(१७) 'प्राह' is missing in P.
(१८) P. has शब्दवृत्तिं विना.
(१९) 'न' is missing in P. It has अभिधादोष स्यात् ।
(२०) P. reads faultily: संसर्गस्थाप्रयतीत्यपि etc.
(२१) P. has तदस्यैवात्र लक्षणेति ।
(२२) P. has 'मं'; wrong.
(२३) P. has 'न'; correct.
(२४) P. has 'ना'; correct.
(२५) P. has अन्वितात्मनोऽवस्था लक्षितामेव etc.

केषुचित् पबे(दे)नौ[२६]स्वरसः सूचितः । तथा च तात्पर्याख्या वृत्ति[२७]र्लक्षणा मध्ये प्रविष्टा[२८] न तु पृथग् तेन लाक्षणिकविभागेनास्य विभाग इति, यथा गच्छ गच्छसि चेदित्यादौ गमनाभाव ऐ[२९]व तात्पर्य्यमिति तात्पर्याख्या वृत्तिरन्यास्ति । न च लक्षणा मुख्यै[३०]र्थ बाधाभावादिति । केषाञ्चिन्मतमस्तीति ग्रन्थं योजयन्ति । अथवा, अभिधानानन्तरं चान्वयै[३१]प्रतिपत्तिनिमित्तं तात्पर्य्यशक्तिरप्यस्ति तन्मूलोऽर्थः तात्पर्य्यलक्षणो[३२]ऽपि विद्यते । तात्पर्य्यं च तत्प्रतीतीच्छ[३३]योच्चारणम् । परं तात्पर्य्यशक्ति(क्तिः)तात्पर्यार्थश्च एतौ वाक्यविषयावेवेत्याह— नैयायिक मतमवतारयति **आकाङ्क्षेति** । अन्वयापर्य्यवसानमाकाङ्क्षा । आकाङ्क्षितस्य नैकट्यं सन्निधिः । बाधविरहो योग्यता । एतद्वशादिति साहाय्यकथनं, एतत्सहकारित्वेन । अपदार्थोऽपि वाक्यार्थोऽन्वय(ये)[३४] समुल्लसति भासते । किंविशिष्टो वाक्यार्थो; विशेषाः क्रियाकारकसम्बन्धलक्षणा(णाः)वपु(पुः) शरीरं यस्य स, विशेषवपुः । क्रियाकारकादिसम्बन्धविशेषसमयो { : } [ऽ]-पदार्थोऽपि पदैरना[३५]रब्धोऽपि भासते, संसर्गमर्यादया एव भासते इत्यभिहितान्वयवादिनां नैयायिकानां मतम् । भट्टानां मते[३६] तु वाक्यार्थे शक्तिर्यथा

Readings: (२६) P. has 'दे'; correct. But it further reads— ॰स्वरसा सूचितः; wrong.

(२७) P. has 'ल'; wrong.

(२८) P. has 'प्रदिष्टा'.

(२९) P. has 'वं'.

(३०) P. has 'ख्य'; wrong. It further reads : बाधः भावादिति।; wrong.

(३१) P. has 'न्वा'; wrong.

(३२) P. has लक्षेपि॰; wrong.

(३३) P. has 'न्व'; wrong.

(३४) P. has 'अन्वयः समुल्लसन्ति'; wrong.

(३५) P. misses 'रना' and gives पदैरब्धो॰ etc.; wrong.

(३६) P. has 'भटाना मते'; wrong.

घटपदस्य घटे शक्तिस्तथा घटान्वयेऽपि[३७] शक्तिरित्यभिहितान्वयवादिनां भट्टानां मतम् । बहुवचने [३८]तत्रैवादर इति भावः । वाच्यार्थ इति । एतद्विपरीत[३९]वादीत्यन्विताभिधानवादी [४०]प्राभाकरस्तन्मते वाक्यार्थो वाच्य एवेति । [3A]एकवचनग्रहणेनात्रानादरः सूचित[४१] इत्यवधेयः । अत्र विशेषव्याख्या[४२] यथा तात्पर्यार्थस्तात्पर्यवृत्तिलभ्यः समुल्लस[४३]ति अनुभवविषयो[४४] भवति । वाक्यार्थः प[४५]दसमूहगम्यः, अपदार्थस्तात्पर्य्यार्थः, प्रत्येकपदवृत्त्यविषयः, वक्ष्यमाणरूपाणां जात्यादीनां पदार्थानां पदवृत्तिविषयाणां समन्वये, परस्पर[४६] सम्बन्धे, [4]विशेषवपुस्तद्विशेषाकार आधाराधेयादिभावरूपः । तस्यैव प्रवर्तक-त्वात् । घटमानयेत्यादौ घटकर्मकानयनादौ भासमाने तात्पर्य्यबलाद् यत् किञ्चिद् घटानयनादिरूप(पः) । अत एव गुणीभूतव्यङ्ग्ये सामान्ये विशेषरूपो वाक्यार्थ इति वक्ष्यति । इयं[४७] वृत्तिरनुभाविकज्ञाते चोपयुज्यते[४८] । ज्ञापकं च प्रकरणादि । अभिहितानां स्वस्ववृत्त्यादेरुपस्थापितानां वृत्त्यन्तरेणान्वय इति वादिनां प्राचां[४९] नैयायिकानां भट्टानां च मतमित्यवधार्यम् । अर्थशब्दो-पस्थितस्यैव शाब्दबोधविषयत्वमिति ।

---

Readings: (३७) P. misses 'ऽपि'; wrong.
(३८) P. has 'बहुवचनेनात्रैव'; also correct.
(३९) P. has 'रित्य'; wrong.
(४०) P. has प्राप्रभाकर......वाच्यं...etc.; wrong.
(४१) 'त इ' are missing in P.; wrong.
(४२) P. has 'वा'; wrong.
(४३) P. has 'सं'; wrong.
(४४) P. has 'ये'; wrong.
(४५) P. has 'दे'; wrong.
(४६) P. has 'र'; wrong.
(४७) P. has 'द्रव्य' for 'इयं'; wrong.
(४८) P. has 'व्यज्यते;' wrong.
(४९) P. has 'प्राधान्या' for 'प्राचां'; wrong.

## वाच्य एव वाक्यार्थ इत्यन्वितभिधानवादिनः ।

य अस्व(न्व)यस्याऽपि यँद(द्)[५०]वाच्यत्वमित्यन्वयांशेऽ[५१]प्यभिधा(धां)[५२] मन्यमानानां प्राभाकराणां मत(तं) आह । प्रा(वा)च्य एवेति[५३] । सम्पूर्ण वाक्यार्थोऽपि, घटमानयेति वाक्यार्थो, घटकर्मकानयनक्रियाकोऽन्वयबोध इत्येवंरूपोऽपि वाच्य एव । एवकारेणाँ[५४]ऽत्र वृत्त्यन्तरव्युदासोऽत्राऽप्यभिधैव वृत्तिर्वाच्योऽभिधेयः। तथाहि, देवदत्त गामानयेत्युँ[५५]त्तमवृद्धप्रयोगात् पूर्वदृष्टां[५६] गोव्यक्ति मध्यमवृद्धे[५७] सञ्चारयति, तच्चेष्टँ[५८]या तस्य वाक्यस्य तदर्थबोधकतामनुमायानन्तर(रं) गां नयाश्वमानयेति[५९] प्रयोगे, गवापसारणमश्वाहरणं च दृष्ट्वाँ[६०]ऽन्वयव्यतिरेकाभ्यां क्रियापदार्थान्विते कारके कारकपदस्य कारकपदार्थान्वितक्रियायां च क्रियापदस्य शक्ति बालोऽवधारयति । ततः प्रयोगकाले तस्य प्रथमं एवान्वितबुद्धिर्जायते । न च गौरवेणान्वयांशपरी(रि)हारः । प्रथमगृहीतान्वयशक्तेरुपजीव्यत्वेन तदपरित्यागात् । तेना { न } भिधयैवाऽन्वयँ[६१]बोधोपपत्तौ किं वृत्त्यन्तरेणेति, अन्वितमेवाभिधत्त इति वादिनः प्राभाकरस्य मतमितिस्पष्टोऽर्थः ।

ननु, स्याद् वाचको लाक्षणिक इति विभागसूचककारिका(क)या शब्दस्य

---

Readings:(५०) P. has 'पदवाच्यत्व०'; wrong.
(५१) P. has 'शो' for 'शे'; wrong.
(५२) P. has 'धान'; could it be 'धानं' ?
(५३) **'वाच्य एवे**ति'......वाच्य एव ।' is missing in P.
(५४) P. has 'णो'; wrong.
(५५) Between 'ये' and 'त्यु', P. reads K.P. text: सर्वेषां......वासरो वाई ।
(५६) अनुस्वार is missing in P.; wrong.
(५७) P. has 'द्धृ'; wrong.
(५८) P. has 'ष्टा'; wrong.
(५९) P. has 'य'; wrong.
(६०) P. has 'ष्टा'; wrong.
(६१) P. has 'या'; wrong.

(सू० ८) सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।

तत्र वाच्यस्य यथा

माए घरोवअरणं अज्ज हु णत्थि त्ति साहिअं तुमए ।
ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ॥६॥
[मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया ।
तद्भण किं करणीयमेवमेव न वासरः स्थायी ॥]

---

व्यञ्जकत्वमर्थस्य व्यङ्ग्यत्वमेवाभिहितम् । काव्यलक्षणं[६२] तु सगुणावित्यनेन गुणाभिव्यञ्जकार्थकेण द्वयोरपीति विरोध इत्यत आह—**सर्वेषामिति** । अपि तु किं द्योत्यते तदाह—व्यङ्ग्यत्वसमुच्चयः । वक्त्रादिवैशिष्ट्यानवतारे[६३] अर्थान्तरव्यञ्जनं[६४] न स्यादिति प्रायश इत्युक्तम् । सर्वेषां वाच्यलक्ष्यव्यङ्ग्यानां व्यञ्जकत्वमिति भावः । वाच्यादीनां व्यञ्जकत्वमिष्यते । **प्राय** इति । सर्वदा अपिशब्दात् वाच्यत्वादिकं वाच्यलक्ष्ययोर्व्यञ्जकत्वेन तत्प्रतिपादकयोः शब्दयोरपि परम्परया काव्योपयोगादुपादानं[६५] युक्तमिति[६६] भावः ।

वाच्यादीनां व्यञ्जकत्व(त्वं) क्रमेणोदाहरति, **तत्रेति** । त्रिविधेषु अर्थेषु वाच्यस्य व्यञ्जकत्वं कथ्यते । **माए**[5A] इति । काचिद् दत्तसङ्केता तत्र जिगमिषुर्व्याजोक्त्या श्वश्रूं प्रति कथयति, माए इत्यादि । हे मातर्गृहोपकरणं गृहकार्यं तन्दुलादि, हु खलु नत्थि त्ति, अद्य खलु नास्तीति । साधितं कथितम् । त्वया । तद् भण किं करणीयमेव । न वासरस्तिष्ठति । मातरित्याज्ञाग्रहणोपयोगिरूप(पं) उपकरणं कार्यं नास्ति । खलु नास्त्येव । त्वया कथितं न तु मयोद्भावितम् । भण, करणीयं, तवाऽऽज्ञया विना किञ्चिदपि नाऽऽचरामि[६७] ।

---

Readings:(६२) P. has 'ण'; wrong.
(६३) P. has 'वसरे'.
(६४) P. has 'न', wrong. Further, 'तस्यादिति'; also wrong.
(६५) P. has 'गोउ'; wrong.
(६६) 'ति' is missing in P.; wrong.
(६७) P. has 'स'; wrong.

अत्र स्वैरविहारार्थिनीति व्यज्यते ।

लक्ष्यस्य यथा

साहेन्ती सहि सुहअं खणे खणे दूम्मिआसि मज्झकए ।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए ॥७॥

[साधयन्ती सखि सुभगं क्षणे क्षणे दूनासि मत्कृते ।
सद्भावस्नेहकरणीयसदृशकं तावद्विरचितं त्वया ॥ ]

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम् । तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम् ।

---

एवमेव व्यासङ्गं विना वासरो न तिष्ठति । अनेन सायंकाले मम पतिव्रताया गमनं नोचितमित्यात्मनः शुद्धत्वं द्योत्यते । [६८]त्वरया प्रेरयेति वा । अत्र किं व्यङ्ग्यमित्याकाङ्क्षायामाह–**अत्रे**ति । अतीते वासरे तवाऽन(ज्ञ)याऽपि[६९] न किञ्चित् करिष्यामीति वाक्यार्थो वाच्यः । अनेन वाच्येन स्वैरविहारार्थिनीति[७०] व्यज्यते । प्रमाणान्तरावगतव्यभिचारिणा(णी)[७१]रूप(पः)वक्तृवैशिष्टयात् वाच्यार्थो व्यञ्जक इत्यभिप्रायः[6] । स्पष्टार्थो यथा अत्र स्वैरविहारो व्यङ्ग्योऽर्थः । स तु वाच्यार्थेनैव व्यञ्जितः । निशि कर्तव्यमपि गृहोपकरणं दिवस एव निर्वर्तयामीति निशि तस्याः स्वैरविहारार्थित्वरूपस्य व्यङ्ग्यस्य प्रतीतिरिति **टीकान्तरे**[7] ।

अथ लक्ष्यार्थस्य व्यञ्जकत्वं वक्तृवैशिष्टया[द्] दर्शयति **साहिंती**ति । काचिन्नायिका स्वप्रियोपभुक्ता(क्तां)[७२] दूतीं प्राह–हे सखि ! **मज्झकए**[8] मम कृते । **सुहयं** सुभगम् । **खणे खणे** प्रतिक्षणम् । **साहिंती**[७३] साधयन्ती । प्रसाद-

---

Readings : (६८) P. has 'त्वया प्रेरयेना;' wrong.
(६९) P. has तदाऽनपायि' etc; wrong.
(७०) P. has स्वैरणीविहारार्थिनी; wrong.
(७१) P. has 'णी'; correct.
(७२) P. has 'क्तां'; correct.
(७३) P. has 'साहन्ती'.

यन्ती । उचिताऽनुचितं वा[७४] जोध(योज)यन्ती । **दूमियाऽसि** दूनाऽसि । दुःखिताऽसि । पीडिताऽसि । सं[७५]भावणेह करणिज्जसरिसयं सद्भावस्नेहकर्तव्यसदृशम् । **दाव** तावत् । **विरइयं** विरचितम् । **तु मए** त्वया । अत्र प्रत्यक्षं[७६]वीक्षितक्षतादिचिह्नानुमितनिजप्रियोपभोगत्वात्[७७] मित्रत्वलक्षणस्य मुख्यस्यार्थस्य बाधः । मित्रत्वशत्रुत्वयोश्च वैपरीत्यसम्बन्धः । अत्र [8A]लक्ष्यं किं व्यङ्ग्यं किमित्याकाङ्क्षायामाह- **अत्रेति** । वाक्यस्य विपरीतलक्षणया शत्रुत्वम् । स च दूतीरूपबो[७८]द्धव्यविशेषाद् व्यञ्जक इत्यर्थः । तेन लक्ष्येण दूतीकामुकत्वात् व्यङ्ग्योऽर्थः[७९] । कामुकविषयसापराधत्वं व्यङ्ग्योऽर्थः ।

अथ[८०] व्यङ्ग्यस्यार्थस्य [८१]व्यञ्जकतामाह—काचिन्नायिका कामुकं प्रति संकेतस्थानमेतदिति अभिप्रायेणाह—**उपे**(अ)[इ]त्यादि । **उअ**[9] पश्य । णिच्चलणिप्पन्दा निश्चलनिष्पन्दा । बलाया बलाका । भिसणीपत्तम्भि बिसिनीपत्रे । [८२]रहइ राजत(ते) । केव[८३] । [८४]णिम्मलमरगयभाषणपरिट्ठिया निर्मलमरकतभाजनप्रतिष्ठिता । [**संखसुत्ति व्व** ।][८५] शङ्खशुक्तिरिव । चलनं शारीरो व्यापारः, स्पन्दो-

Readings: (७४) P. has 'रा'; wrong.
(७५) 'स' is missing in P.; wrong.
(७६) P. reads 'क्ष्यवि'; wrong.
(७७) For 'त्वात्' P. has 'शत्रु'.
(७८) P. has 'ध'; wrong.
(७९) P. reads portion of K.P. text: 'लक्ष्यस्य यथा...रिति व्यज्यते', in between.
(८०) P. has 'र्थं'; wrong.
(८१) P. has 'व्यञ्जनाकथामाह'.
(८२) P. has 'रे'; correct.
(८३) P. has 'केन'; wrong.
(८४) P. has 'नम्मलमणगयं'. Faulty.
(८५) P. gives प्राकृतपाठ which is missing in B. But it reads 'स' for 'श' in sanskrit rendering.

व्यङ्ग्यस्य यथा

उअ णिच्चलणिप्पंदा भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व ॥८॥
[पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥]

अत्र निष्पन्दत्वेन आश्वस्तत्वम् । तेन च जनरहितत्वम् । अतः संकेतस्थानमेतदिति कयाचित् कंचित्प्रत्युच्यते । अथवा मिथ्या वदसि न त्वमत्रागतोऽभूरिति व्यज्यते ॥

ऽवयवव्यापारः[८६] इति न पौनरुक्त्यम्[10] । केचित् तु निश्चलेव पृथिवीव निष्पन्दा[11] । अथवा हे निश्चल निरुद्यमेति नायकसम्बोधनमित्याहुः । [८७]शङ्खशुक्तिस्तिलकाद्युपयोगिनी शङ्खपात्री न तु मुक्ताशुक्तिस्तस्या बलाकासदृशंतु(शत्वं)-रहितत्वात्[12] । विसिन्यां भ इति प्राकृतलक्षणेन चा(व)[८९]स्यभः । भिसिणीति सिद्धम् । **अत्रेति** । बलाकाया निश्चलत्वं[९०] वाच्योऽर्थः । तेन निष्पन्दत्वेन विश्वासो व्यज्यते[13] । तेन च निर्जनत्वं[९१] व्यज्यते इति व्यङ्ग्यस्य व्यञ्जकत्वमित्यतः **संकेतस्थानरूपो**ऽर्थो व्यज्यते । फलितमाह—**अत** इति । प्रकारान्तरेणाश्व[स्त][९२]त्वस्य व्यञ्जकत्वमाह—**अथवेति** । यदि त्वमत्रागतो[९३]ऽभूस्तदा बलाकाया निश्चलत्वं नोपपद्यत इति व्यङ्ग्यस्यापि व्यञ्जकता इत्यर्थः ।

अर्थस्वरूपकथनान्तरप्रागुद्दिष्टवाचकादीनां लक्षणकरणावसर इत्युत्तरश्लोक-

Readings : (८६) P. has 'रा'.
(८७) P. reads 'स' for 'श'; wrong.
(८८) P. reads 'सदृशत्वरहितत्वात्'; correct.
(८९) P. has "न 'व'स्य भः"; correct.
(९०) P. has 'श्चा'; wrong.
(९१) P. has 'त्व;' wrong.
(९२) P. reads correctly.
(९३) P. reads 'ता'; wrong.

**वाचकादीनां क्रमेण स्वरूपमाह ।**

**(सू०९) साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः ॥७॥**

मवतारयति **वाचकादीनामिति** । वाचकशब्दस्य प्रथमं लक्षणमाह—**साक्षादिति** । व्यावृत्तिर्यथा योऽर्थमभिधत्ते इत्युक्ते लाक्षणिकादावतिव्याप्तिस्तदर्थं[९४] संकेतितमिति । एवमप्यन्विताभिधानवादे गङ्गायां घोष इत्यादौ मुख्यार्थव्यवहिते[९५] तटादावपि संकेतसद्भावात् तत्रैवातिव्याप्तिरित्यत आह—**साक्षादिति** । एतावत्युच्यमाने [15]पङ्कमित्रेयादौ [16]चेष्टायाऽन(म)तिव्याप्तिस्तत्परिहाराय शब्दप्रस्तावात् [यः]**शब्द** इति द्रष्टव्यम् । अभिधत्ते प्रतिपादयतीत्यर्थः । अथवा अभिधा । [९६]अभिधाग्रहाहितसंस्कारसहकृतः स्मारयति । तेनाऽर्थस्य व्यञ्जके(कत्वे) माएघरो इत्यादि व्यञ्जके नाऽतिव्याप्तिस्तत्र व्यञ्जनावृत्त्या बोधनादित्यर्थः[17] । शक्तिभ्रमादवाचके अपभ्रंशे[1] प्रसङ्गवारणाय साक्षादित्यादि । अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपसंकेतः । साक्षात्त्वम् । संकेतग्रहान्तरेणाऽव्यवधानम्[९७] । अन्यत्र गृहीतसंकेतस्यैवात्रारोपणं तेनास्य व्यवधानमिति न प्रसङ्गः । अथ देश्यानां { किं शब्दत्वं चेवं[९८] } [चिक्वादिशब्दानां] व्यञ्जकत्वमेव । वृत्त्यन्तराभावे[९९] व्यञ्जनाया एव दत्तपदत्वात् चिकुप्रभृतीनामपभ्रंशानां वराङ्गादिव्यञ्जकस्य व्यञ्जनानिरूपणे ग्रन्थकृता वक्ष्यमाणत्वात् । अत एवापभ्रंशानां वाचकत्वमेव अन्यथा तन्मयकाव्ये काव्यत्वं न स्यात् । तेषां वाचकत्वाद्यन्यतमविरहादिति **मिश्रमतं** निरस्तम् । शक्तिभ्रमस्तु[१०१] व्यञ्जनाया एवोपजीवकः शक्तेः संकेतग्रहव[त्वा]त् । केचित्

Readings : (९४) P. has 'र्थं'; wrong.
(९५) P. has 'व्यवस्नहते'; wrong.
(९६) P. has 'अभिधायदाहितसंस्कारहकृतः स्मारयति ।'; wrong.
(९७) P. has अव्यवधान्यम् ।; wrong.
(९८) P. reads: किं शब्दत्वचेत्...; equally wrong.
(९९) P. has '०भावो०'; wrong.
(१००) P. has...नावरगादिव्यंजकस्य... etc.; wrong. P. reads this twice.
(१०१) P. has 'सु' for 'स्तु'; wrong. And then reads, व्यंजनायापनोपजीव्यशक्तेः संकेतग्रहवत् । Faulty.
(१०२) P. has 'ता' for 'त्य'; wrong.

**इहागृहीतसंकेतस्य शब्दस्यार्थप्रतीतेरभावात्संकेतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन संकेतो गृह्यते स तस्य वाचकः।**

**(सू० १०) संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।**

---

तु—अभिधत्ते समयस्मृत्य[१०२]र्थान्तरव्यापारः सन्न(न्)[१०३] स्मारयति साक्षात् संकेतितमव्यवधानेन गृहीतसंकेतं[१०४] न तु यन्नामा यत्र चैत्यादिस्तन्नामाविषयोऽपि स इतिवत् सान्तरतयेत्याहुः। यस्मिन् विषये देशे[१०५] यन्नामकः प्रधानवृक्षः स देशोऽपि तन्नामक इत्युद्देशनं यत्नमित्यर्थः। यथा वटो ग्राम इत्यत्र तरुसंकेतेन ग्रामसंकेतव्यवधानान्न साक्षात् संकेत इति। तत्र [१०६]लक्षणे(णै)वेति तदभिप्रायः इत्यलं विस्तरेण। यत्र यस्याव्यवधानेन संकेतो गृह्यते स तस्य वाचक इति साक्षात्संकेतग्रहेणैव सम्बन्धस्य दर्शितत्वादिति निर्गलितार्थः।

शाब्दव्यवहारे संकेतग्रहोपयोगमाह—इहेति। अत्र(त्रा)गृहीतसंकेतस्या[१०७]श्रुतप्रथमशब्दस्य तथात्वे हि सर्वतः सर्वस्य प्रतीतिः[१०८] स्यात्। यद्यपि यदनन्तरं यस्य प्रतीतिर्दृश्यते तदेव तस्य बोधकं किं संकेतेनेति। तथापि शब्दविशेषादर्थविशेषज्ञानं सङ्केतसापेक्षम्। यथा घटपदात् घटरूपोऽर्थः प्रतीयते नाऽन्यरूपः। संकेत एव सहाय इत्याह—**विशेषे**ति। [१०९]कारणान्तरव्यतिरेकप्रयुक्तत्वं निरस्यति सङ्केतसहाय एवेति। संकेतो नाम शब्दार्थयोः सम्बन्धात्(वं[११०])धारणम्। शब्दस्य संके[ति]तार्थाभिधायकत्वं सकलसंकेतितार्थज्ञानमन्तरेण न सम्भवतीति संकेतितमर्थ(र्थं) विभजते, **संकेतित**

---

Readings : (१०३) P. reads 'न्'; correct.
(१०४) P. reads 'त' for 'तं'; wrong.
(१०५) P. has 'श'; wrong.
(१०६) P. has 'लक्षणे तदभिप्रायः'; wrong.
(१०७) In between P. reads some portion of the K.P. text.
(१०८) विसर्ग is missing in P.; wrong.
(१०९) P. reads 'करणान्तर'.
(११०) P. reads 'व'; correct.

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव तथाप्यानन्त्याद्व्यभिचाराच्च तत्र संकेतः कर्तुं न युज्यते इति गौः शुक्लश्चलो डित्थ इत्यादीनां विषयविभागो न प्राप्नोतीति च तदुपाधावेव संकेतः ।

[२१]इत्यादिना । एनेन साक्षात् संकेतितोऽर्थो[१११] वाच्य इत्यर्थलक्षणमपि[११२] सिद्धम् । साक्षादित्यव्यवधाने[ने] न्वेव (त्येवं[११३])विवरणम् । वाच्यवाचकभाव सम्बन्ध एव संकेत इत्यर्थः ।

कः संकेतित इति जिज्ञासायामाह-**जात्यादिरि**ति । जातिगुणक्रियाद्रव्यरूप इत्यर्थः । तदुक्तम्—

शब्दैरेभिः [११४]प्रतीय(यं)ते जातिद्रव्यगुणक्रिया(याः) ।
चातुर्विध्यादमीषां तु शब्द उक्तश्चतुर्विध इति ॥

यद्यपि व्यक्ताते च(वेव)[११५] व्यवहारगोचरत्वेन संकेतः [२२]प्राप्नोतीत्याह—

**यद्यपी**ति । ननु ज्ञा(जा)तौ[११६]आनयनादिप्रवृत्तिनिवृत्त्यभावात् प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव वक्तव्या । तथाच व्यक्तिरेव पदार्थ इति [११७]वक्तुमुचितमित्यत आह—अर्थः प्रयोजनं क्रियानिर्वाहि[११८]कारी हेतुः यस्मात् प्रयोजनं[११९] तत्र प्रवृत्तिः । **आनन्त्यादि**ति । प्रतिव्यक्ति[१२०]समयग्रहो न शक्च(क्यः) । युगपदनुपस्थितेः । क्रमेण च पुरुषायुषपर्य्यवसानमित्यर्थः[१२१] । **व्यभिचारादि**ति । यस्यां व्यक्तौ संकेतो { प } गृहीतो नास्ति तस्या अपि व्यक्तेः प्रतीतिदर्श-

Readings : (१११) P. reads 'र्थो'; wrong.
(११२) P. has 'र्थः'.
(११३) P. reads correct.
(११४) P. reads 'प्रतीयंते०'; correct.
(११५) P. reads व्यक्तावेव व्यवहारगोचरत्वेन; correct.
(११६) P. reads 'जातौ'; correct.
(११७) P. reads 'काक्तु०'; wrong.
(११८) P. has 'निवाह०'; wrong.
(११९) P. has 'न'; wrong.
(१२०) P. has 'क्त'; wrong.

नात्[१२२] । तत्र व्यक्तौ संकेतौ(तो) व्यभिचरति । बालगोपिण्डे कृतः संकेतस्तरुणगोपिण्डे व्यभिचरति । तरुणगोपिण्डे कृतसंकेतो वृद्धगोपिण्डे व्यभिचरतीति । व्यभिचार इत्यर्थः । असंकेतितव्यक्तावपि प्रतीतिदर्शनेन व्यभिचारः सिद्धः । कर्तुमिति ज्ञापयितुमित्यर्थः ।

[१२]अन्ये इत्थं योजयन्ति—ननु सर्वासु व्यक्तिषु संकेतः कतिपयासु वा । तत्राद्यं निराचष्टे आनन्त्यादिति । द्वितीयम् निराचष्टे व्यभिचारादि { ती } ति । गौ (गौः)शुक्लश्चलति डित्थ इति दूषणान्तरमपि । यदि व्यक्तौ संकेतः क्रियते तदा गोत्वशुक्लत्व[१२३]चलत्वविशिष्ट एव गोपिण्डे संकेतोऽतो[१२४] गौः शुक्लश्चलतीत्यादीनां विषयविभागो न स्यात् । विषयः प्रवृत्तिनिमित्तं तदभेदे पर्यायत्वायु (यु) गपदप्रयोगापत्तेः इत्यर्थः । **विषयविभाग** इति । एको द्रव्यशब्दोऽन्यो गुणशब्दः शुक्लादिरित्या[१२५]दिको विभागो न स्यादित्यन्ये[१२६]योजयन्ति । कथमित्याह अव्युत्पन्नव्युत्पत्त्यर्थं[१२७] हि संकेतः क्रियते । ज्ञातार्थानां तु प्रयोगानर्हत्वादत एव व्यक्तौ संकेताभाव इत्यर्थः । **तदुपाधावेवेति** । तेषां जात्यादीनां शब्दानामुप(पा[१२८])धादे(वे)व विशेषण एव । जातावेव[१२९]संकेत उचित इत्यर्थः । उपाधिं विना द्रव्यादिवाचकानां विभाग एव न भवतीति उपाधौ विशेषणे संकेतः कर्तुं युज्यते न तु व्यक्तौ ।

---

Readings: (१२१) P. has 'र्थ'. Visarga is missing. Wrong.
(१२२) This is written twice in P.; wrong.
(१२३) 'शुक्लत्व' is missing in P.; wrong.
(१२४) 'ऽतो' is missing in p.; wrong.
(१२५) 'रित्या' is missing in P.; wrong.
(१२६) P. has 'दित्यवयोजयंति'; wrong.
(१२७) P. has 'र्थः'.
(१२८) P. has 'पा'; correct.
(१२९) 'वे' is missing in P.; wrong.

**उपाधिश्च द्विविधः । वस्तुधर्मो वक्तृयदृच्छासंनिवेशितश्च । वस्तुधर्मोऽपि द्विविधः । सिद्धः साध्यश्च । सिद्धोऽपि द्विविधः । पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च । तत्राद्यो जातिः ।**

---

उपाधिर्द्विविधः वस्तुधर्मो यदृच्छासन्निवेशितश्च । वस्तुधर्मस्यापि द्वौ भेदौ सिद्धसाध्यभेदात् । सिद्धस्यापि द्वौ भेदौ पदार्थप्राणप्रदविशेषाधानहेतुभेदात् । क्रियापदं[24] हि क्रियमाणतानिर्देशः, तद(द्)विषयः । अत एव क्रियत इति क्रिया साध्यमुच्यत, इत्युक्तं साध्यसाधनापेक्षः क्रियारूपः । अत एव इह हि साधनायत्तोदयं सर्वमत(तं) { र } तदधीन(नं)या[24A] (यत्) सिद्धमपि क्रियात्वेनावभासत इत्युक्तम् । धातुप्रतिपाद्यायाश्च तस्याः क्रियायां(या) अवस्थाद्वयम् । साध्यता सिद्धता च; आख्यातकृत्प्रत्ययगम्ये, क्रियान्तरनिराकाङ्क्षत्व-रूपे । अत एव पचतीत्यत्र पाके क्रियान्तरस्य नान्वयः । पाकः क्रियते, पाचको [१३०]गच्छतीत्यत्र कृतिगमनाभ्यां स्यादेव विषयत्वेनावच्छे[१३१]दकत्वेनात्रे[१३२]ति, एतन्मु-(न्मू[१३३])लकमेव क्रियाप्राधान्य(प्रधान)माख्यातमिति । वा(पा)[१३४]चनं(न)सजातीया { न } न्तरमनपेक्ष्य[१३५]स्याऽन्वयबोधकत्वमेव प्राधान्यम् । तेनाख्यातयोगे क्रियायाः साध्यतया साधनापेक्षा । यथा काष्ठैः स्थाल्यामोदनं पचतीत्य(ति।अ)त्र कृद्योगे तु न तथेति काष्ठैः पाक इत्यादिप्रयोगो न स्यात् । साधनापेक्षास्वरूपयोग्यत्वेन कृद्योगेऽपि क्रियात्वं तेन पाकादिपदानां क्रियाशब्दत्वम् । पदार्थस्य [१३६]पदोद्देश्यस्योपधेयस्याविनाभावेन पदप्रतिपा[१३७]द्यस्य वा । प्राणनं प्राणे व्यव-

---

Readings: (१३०) P. has 'गछति'; wrong.
(१३१) P. has 'छे' for 'च्छे'; wrong.
(१३२) P. has 'तत्रेति'; wrong.
(१३३) P· has 'न्मू'; correct.
(१३४) P. reads K.P. text between the lines.
(१३५) P. has 'क्षा' for 'क्ष्य'; wrong.
(१३६) P. has **पदादेश्य**पदोद्देश्य**स्यापधे**यस्याविना० etc.; wrong.
(१३७) For 'द्य', P. has 'द'; wrong. And also it has 'दा' for वा; wrong.

**उक्तं हि वाक्यपदीये "न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाभिसंबंधात्तु गौः" इति ।**

हारयोग्यता । तत्प्रदस्तन्निर्वाहकः । आधानं प्रत्ययः । आद्यः प्राणप्रदो जाति-साध्यस्यैक एव भेदः क्रियारूपः । एतावता वस्तुधर्मो व्याख्यातः ।

अथ वक्तृयदृच्छासन्निवेशित[१३८] उपाधिभेदः व्याख्यायते । डित्थादीति[१३९] । या इच्छा यदृच्छा । पुंसः स्वतन्त्रेच्छा । तया सन्निवेशितो[१४०] वाच्यवाचक-[१४१] सम्बन्धेन धर्मिणि स्थापितः संज्ञारूपः । स च डित्थादिः[१४२] । न चैकत्वेनानन्त्य-व्यभिचाराभावात् । कथमुपाधिचिन्ता [१४३]पदनिर्विकल्पकत्वापत्तेः । तस्य च[१४४] वाच्यवाचकसम्बन्धेन धर्मिणि [१४५]वृत्तेरुपाधित्वं विशेषणत्वम् । अत्राऽयं स्पष्टार्थो यथा उपाधिशब्देन विशेषणं च वस्तुधर्मो[१४६] वस्तुनो नैसर्गिको[१४७] धर्मः, स्वाभाविकधर्म इति यावत् । वक्त्रा स्वेच्छया आरोपितो धर्मः[१४८] । वस्तु-धर्ममपि विभजते **सिद्धोऽपीति** । आद्यः पदार्थस्य प्राणप्रद इव । प्राणप्रदो(दः) । जातिं विना वस्तुतः[१४९] स्वरूपमेव [१५०]न सिध्येत् । प्राणप्रदो वस्तुधर्मो जाति(तिः) सामान्यम् । अत्र भर्तृहरिसंम्मतिमाह[१५१]—**उक्तं हीति** । वाक्यपदोयो नाम ग्रन्थ-भेदः । स्वरूपेण पिण्डमात्रेण गौर्गौरिति व्यवहर्तुं न शक्यते । तथाच स्वरू-

Readings:(१३८) 'न्नि' is missing in P.; wrong.
(१३९) P. reads 'त' for 'ति'; wrong.
(१४०) 'न्नि' is missing in P.; wrong.
(१४१) P. reads 'कः'; wrong.
(१४२) P. reads–द्वित्वादिना चैकत्वेनानंत्यव्यभिचारात् भावात् etc.
(१४३) P. has 'लि'; wrong.
(१४४) P. has 'स्व' for 'च'; wrong.
(१४५) P. has 'कृ' for 'वृ'; wrong.
(१४६) P. has 'र्म्मा' for 'र्मो'; wrong.
(१४७) P. has 'का' for 'को'; wrong.
(१४८) विसर्ग is missing in P.; wrong.
(१४९) P. has 'नः'.
(१५०) 'मेव न' is missing in P.; wrong.
(१५१) P. has भर्तृहरिस्मति'; wrong.

द्वितीयो गुणः । शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते । साध्यः पूर्वापरीभूतावयवः क्रियारूपः ।

डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन संनिवेश्यत इति सोऽयं संज्ञारूपो यदृच्छात्मक इति ।

---

पेणोपाधिरहितव्यक्तिमात्रेण गौर्गौ(गो) व्यवहारहेतुः । तदा घटोऽपि गौः स्यात् । नाप्यगौर्गौरिति भेदव्यवहारप्रयोजकः स्यात् अगोव्यावृत्तत्वात् । अतो गोत्वजातियोगादेव पदार्थस्वरूपलाभ इत्यर्थः । अगौरित्यत्र टच् न भवति । तत(नञ्[१५२])स्तत्पुरुषादिति निषेधात् । **द्वितीयो** विशेषाधानहेतुः; **गुण** इति । शुक्लादेर्गुणस्य विशेषाधानहेतुत्वं[१५३] कथयति । **शुक्लादिना** हीति । अनेनोत्पन्नस्य द्रव्यस्य पश्चाद् गुणेन विशेषणमिति दर्शितम् । अतो जातिगुणयोर्महान् भेदः ।

साध्यस्य लक्षणमाह—**साध्य** इत्यादिना । पूर्वापरीभूता अधिश्रयणा[१५४]दयोऽवयवा यस्याः प[१५५]चनादिक्रिया यावद्रूप इत्यर्थः । **वक्तृयदृच्छे[१५६]त्यादि**नोक्तं चतुर्थमुपाधिं विशदयति । **डित्थादी**ति । [१५७]स्वरूपं वर्णात्मकं संज्ञाशब्दादि स्वप्रत्यक्ष्या(क्षा)नन्तरं स्वविशिष्टान् धर्मिणः प्रत्याययन्ति । तेनान्त्या स्वजन्या या विशिष्टबुद्धिस्तदग्राह्यम् । नैवं गता(वा)दि पदानि, तैर्जात्यादिवैशिष्ट्येनैव बोधनात् । अथवा अन्त्यबुद्धिर्विशिष्टबु[१५८]द्धिरयं, डित्थ इत्यादिविशिष्टबुद्धिस्तया निग्रा(ग्रा)ह्योऽन्त्यबुद्धिविषय इत्यर्थः । ननु विशिष्टबुद्धेरन्त्य[१५९]त्वं कथमिति चेत् निर्विकल्प

---

Readings:(१५२) P. reads 'नञ'; correct.
(१५३) P. reads 'तु' for 'तुत्वं'; wrong.
(१५४) P. has 'श्रवणा०' for 'श्रयणा०' wrong.
(१५५) P. has 'व' for 'च'; wrong.
(१५६) For 'दृच्छे०', P. has 'देछे'; wrong.
(१५७) P. reads 'स्वारूपं'; wrong.
(१५८) P. reads 'वि'; wrong.
(१५९) 'न्त्य' is missing in P.; wrong.

**"गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः" इति महाभाष्यकारः। परमाण्वादीनां तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम्। गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद्भेद इव लक्ष्यते। यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात्।**

कानन्तरं या बुद्धिः सान्त्यबुद्धिः। निर्विकल्प[१६०]बुद्ध्या(द्ध्य)पेक्षयान्त्यत्वम्। **संहृतेति**[१६१]। संहृतो दूरीकृतः क्रमो नानाव्यक्तिषु, क्रमोऽयं गौरयं गौरित्यादिक्रमः, स दूरीकृतो डित्थादि(दिः)स एकव्यक्तिरेवेत्यर्थः। यदि वा संहृतः पितृपितामहादिक्रमेण यः क्रमः स आनीतः। पितामहस्य यन्नाम तत् पित्रा पुत्रस्याऽपि स्थाप्यत इति क्रमस्वरूपं डित्थादीति। एकस्यैव कस्यापि नामेत्यर्थः। अथवा अन्त्यया स्मर्यमाणानुभूयमानवर्णसमूहग्राहिकया बुद्ध्या निर्ग्राह्य[१६२] अन्त्यबुद्धिनिर्ग्राह्यः[१६३]। क्रमवृत्तित्वात्। शब्दो न एकदेशकालावच्छेदलक्षणः समुदायः सम्भवति। तथाहि न खलु डित्थशब्दोच्चारणकाले वा डित्थश[१६४]ब्दोऽस्ति तथोच्चै[१६५]रस्मर्यमाणानुभूयमानवर्णसमूहः। अत एव संहृतक्रमं[१६६] उपसंहृतपरिपाटीकम्। **यदृच्छयेति**। तत्तत् सञ्जातविषयाभिधानशक्त्याऽभिव्यक्तिद्वारेण डित्थ इत्यसंदिग्धार्थेष्विति संज्ञिषु। **उपाधित्वेनेति**। विशेषणत्वेन। तस्माच्छब्दप्रवृत्तिनिमित्तस्य चातुर्वि[१६७]ध्यात् शब्दार्थश्चतुर्विध इति, स्वोक्तस्य महाभाष्यकारोक्ते[न]सह संवादं दर्शयति। **गौरिति**। गौः शुक्लश्चलति डित्थ इति महाभाष्य(ष्यं) फणिभाष्यं पाणिनिमुनेर्व्या[१६८]करणसूत्रस्य विवरणम्।

Readings: (१६०) P reads ल for 'ल्प'; wrong. It further reads –०बुद्धयादपक्षयान्त्यत्वं, etc.; wrong.

(१६१) P. has 'संहृता'.

(१६२) P. has 'ह्यं'; wrong.

(१६३) P. reads 'ह्यं'.

(१६४) P. has 'ब्दा'; wrong.

(१६५) P. has 'उच्चार्यमाणानुभूयमान०'.

(१६६) P. reads संहृतंक्रमं उपसंहृत्य परिपाटिकं यदृच्छयति....etc. Faulty.

(१६७) P. has 'धा'; wrong.

[१६९]ननूक्ते त्वनन्तःपाणिनां (न्तपरिमाणानां?) परमाणूनामपि सम्भवे कथं शब्दानां चातुर्विध्यं, तथाहि—परमाणुत्वे[१७०] न जातिः घटजलपरमाण्वोः[१७१] परस्परपरिहारेण[१७२] वर्तमानयोः, पृथिवीत्वपरमाणुत्वयोः, पृथिवीपरमाणौ समादेशेन जातिसङ्करप्रसङ्गात् । न तावद्गुणः[१७३] चतुर्विंशतावपाठात् । सिद्धत्वादनेकव्यक्तिकत्वाच्च । न च क्रियाद्रव्ये । इत्याह **परमाण्वादीनामिति** । आदिशब्दात् परममहत्त्वादिग्रहणम् । तदुक्तं अणुमहद्दीर्घह्रस्वं च परिमाणानीति[१७४]। परिमाणद्वारैव गुणमध्यभाव इति तेषां तद्भेदकत्वात् । ननु परमाणुशब्दस्य परिमाणवाचकत्वे परमाणुशब्देन द्रव्यं कथमित्यतः आह-**गुणेति**[१७५]। ननु भवत्परिभाषाया अविषयत्वेन गुणमध्यपाठोऽप्यकिञ्चित्कर एवेत्याह—[१७६]**पारिभाषिकमित्यादि** । परमाणुत्वस्य महत्त्वव्यावर्त्तकत्वेनाऽस्मत्परिभाषयाऽपि सिद्धमित्यर्थः । द्रव्ये तु परमाणुशब्द उपचारात् प्रवर्तते[१७७] । मुख्यस्तु गुणवाचक एवेत्यर्थः । **अथ** जातिरेव सङ्केतविषयो भवतु लाघवादिति समर्थयितुमाह—**गुणेति** । गुण-

---

Readings: (१६८) P. has 'व्या'. 'र्' is missing. Wrong. After विवरणम्, P. reads some portion of the K.P. text.

(१६९) The text is currupt. P. also gives faulty reading: ननूक्तेत्वेंनतंपाणिनीनां परमाणूनामपि संभवे... etc.

(१७०) P. reads 'त्व' for 'त्वे'. could it be 'त्वं'?

(१७१) Visarga is missing in P.; wrong.

(१७२) P. has 'र' for 'रे'; wrong.

(१७३) Visarga is missing in P.

(१७४) P. has 'नि'; wrong.

(१७५) P. reads गुणेति । It is missing in B.

(१७६) P. has 'का' for 'क'; wrong.

(१७७) P. has 'त' for 'ते'; wrong.

हिमपयः शङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्लः इत्याद्यभिन्नाधानप्रत्ययोत्पत्तिस्तत् शुक्लत्वादि सामान्यम् । गुडतण्डुलादिपाकादिष्वेवमेव पाकत्वादि । बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये । तद्वान् अपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च न दर्शितम् ।

---

क्रियायदृच्छाशब्दानां जातिनिबन्धन एव सङ्केत[१७८]इत्यर्थः । आश्रयभेदाद् भिन्न इव प्रतीयते परमार्थतस्तु एक एव शुक्लादिर्गुणः सर्वत्रेत्यर्थः[२०] । तदुक्तम्--

कर्मैकं जातिरप्येका जगत्येकः सितो गुणः । इति ।

एकस्योपाधिवशादनेकविधत्वप्रतीतौ दृष्टान्तमाह--**यथेति** । **आश्रयेति** । हिमाद्याश्रयभेदो लक्ष्यते न तु वस्तुगम्ये[१७९]त्यर्थः (म्य इत्यर्थः)। **एकस्येति** स्वच्छद्रव्याहतं चक्षुः प्रतिनिवृत्त्य बिम्बमवलोकयति तत्र यद्दीर्घवर्तुलत्वादिकं तत् स्वच्छद्रव्यगतमेव तद्व[१८०]त्रापीत्यर्थः । खड्गेन दीर्घत्वं, मुकुरे गणभेदेनाखण्डमहद्रूपं तैले स्निग्धत्वम् । **आलम्बनं** प्रतिबिम्बाश्रयः । जातिरेव पदार्थ इति व्याचष्टे । **हिमेत्यादि** । बालशुकाद्युच्चारणभेदेन भिन्नेषु डित्थशब्देषु[१८१] डित्थशब्दत्वं सामान्यमस्ति । तदेव पिण्डे आरोपिते सति डित्थशब्दाभिधेयमित्यर्थः । अर्थेऽपि जातिमाह । **प्रतिक्षण**मिति । स्थूलकालोपलक्षणमेतत् । परमार्थं तं(र्थतः)[१८२]इति । सत्येव धर्मिण्याविर्भावतिरोभावदर्शनेनाबाधितता[१८३]रत-

---

Readings:(१७८) P. has 'ते'त्यर्थः; wrong.
(१७९) For 'म्ये', P. has 'मे'; wrong.
(१८०) 'द' is missing in P.; wrong.
(१८१) 'षु' is missing in P.
(१८२) P. reads 'परमार्थतः'; correct.
(१८३) P. has बाधितारम्यप्रतीते०--Letters are missing. Wrong.

म्यप्रतीतेः शुक्लनीलादिष्वनुगतप्रतीते जातिविषयत्वमित्याह **यद्वशेनेत्यादि** । अभिन्नमेकाकारं अभिधानं शब्दः, विषयभेदात्तदेकरूपता न स्यात् । पटः शुक्ल इत्यादि प्रयोगस्तु मतुब् लोपात् लक्षणया वा सिद्धं(द्धः) क्रियावाचकेष्वपि गुडतन्दू(न्दु)लादिपाकेष्वप्येकमेवं जातिरूपमेव पदार्थः । तथा च सर्वत्र जातिरेव पदार्थ इति सिद्धम् । गुडतन्दुलादिवैधर्म्यप्रदर्शनं[१८४][त्] गुडपाके रूपपरावृत्तेस्तन्दुलपाकेऽथैकध्वंसादपरोत्पत्तिरिति नैकता । एकमेवाभिधानप्रत्ययाभ्यां पाचकादि तु वाक्यमेव । तदुक्तम्—

पाकं तु पचिरेवाह कर्तारं[१८५] प्रत्ययोऽप्यर्पकः ।
वाक्युक्तः[१८६] पुनः कर्ता, वाच्यो नैकस्य कस्यचित् ।। इति

तथा च सर्वत्र जातिरेव पदार्थ इति सिद्धम् ।

ननु डित्थादिशब्देषु क्रियावाचकेष्वपि जातिरेव सर्वत्र प्रवृत्तिनिमित्त(त्तं)[१८७] तथा बालवृद्धाद्युदीरितेषु डित्थादिशब्देष्वपि एकं डित्थादित्वजातिरेव प्रवृत्तिनिमित्तमित्यर्थः । **डित्थादिशब्देषु** चेत्यत्र चमत्कारः (च[१८८]कारः) पूर्वोक्तसमुच्चयार्थः । कारिकास्थो[१८९] वा(च?)कारोऽदूय(नूद्य)तेऽत्रेत्याह, चेति, एव(वं) परिमाणभेदात् डित्थाद्यर्थे[१९०] डित्थत्वं जातिरस्ति । यतः परिमाणभेदात् द्रव्यभेदो[१९१]ऽत एव

Readings: (१८४) P. has 'प्रदर्शनाय'.
(१८५) P. has 'कर्त्तरि प्रत्ययो[ऽ]प्येकः ।'.
(१८६) P. has 'पाकयुक्तो'.
(१८७) P. reads the अनुस्वार; correct.
(१८८) P.has 'चत्कारः'; also faulty;
(१८९) P. reads: कारिकास्था(स्थो) चा(च)कारो[ऽ]नूद्यतेऽत्रेत्याह- etc. I have corrected P. also, as seen above. P. seems to present better reading.
(१९०) P. has simply 'डित्थादि'; wrong.
(१९१) P. has 'दा' for 'दो'; wrong.

(सू० ११) स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥८॥

**स इति साक्षात्संकेतितः । अस्येति शब्दस्य ॥**

---

जातिरत्रापि प्रवृत्तिनिमित्तमस्तीति[१९२] भावः । **इत्यन्य** इति । जातिरेव निमित्त-[१९३]मस्तीति भावः । इत्यन्य इति । जातिरेवेत्यस्य कारिकास्थपदस्य व्याख्यानमित्यर्थः । एतावता न्यायमते जातिमान् जातिविशिष्टः पदार्थः शब्दार्थः, अन्ये इति मीमांसकाः । आकाशपदात् तु निर्विकल्पकस्वरूपमात्रोपस्थितेः[१९४] पदात् सविकल्पकं तूत्सर्ग एव । एकव्यक्तिकत्वाच्च नानन्त्यव्यभिचारौ । न च शब्दाश्रयत्वेन शक्तिराकाशं शब्दाश्रय इति प्रयोगानुपपत्तेः । **तद्वान्** जातिमानित्यर्थः । न चानन्त्यसामान्यलक्षणप्रत्यासत्त्योपस्थितासु सर्वासु व्यक्तिषु शक्तेः सुग्रहत्वादिति नैयायिकाः ।

बौद्धमतेऽपोहोऽतद्व्यावृत्तिः । यथा गौरिति अश्वाद् भिन्नोऽयमेवापोहः शब्दार्थ इत्याह बौद्धाः क्षणभङ्गा(ग)वादिनः । तन्मते स्थिरस्य सामान्यस्याभावादपोहमात्रेणानुगतव्यवहार इति तत्रैव शक्तिः । **ग्रन्थ** इति । गौरवं बाहुल्यम् । तर्हि जात्यादयोऽपि न वक्तव्या इत्याह—**प्रकृत** इति । उपाधिशक्तिवादे उप(पा)धेयस्य व्यङ्ग्यत्वं स्यादिति तन्मतानुवादः प्रकृतोपयोगी । उपहितशक्तिस्तु प्रतिकूलप्रायेते(ति) न तदनुवाद इत्यर्थः[26] । **स** इति वाचकशब्दः । तद्वाच्योऽर्थो मुख्योऽर्थः । तत्प्रतिपत्तिहेतुर्व्यापारोऽभिधा । यथा घटमानयेति शब्दात् घटस्य प्रतीतिः कुतो न जायते, तत्र वाच्यवाचकसम्बन्धरूपाभिधा[भा]वादेव न जायते इत्यर्थः[27] । शब्दो वाचकः । अर्थो वाच्योऽनयोर्यः { शब्दः }

---

(१९२) P. has प्रवृत्तिनिमित्तमिति भावः ।

(१९३) Letters beginning with 'निमित्त'......upto 'वेत्य' are missing in P.

(१९४) Between 'मा' & 'त्रो', P. reads some portion from the K. P. text: सर्वेषां शब्दानां.... लक्षणारोपित(ता) क्रिया ।

(सू० १२) मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥९॥

[संबंधः]सोऽभिधोच्यते इत्यभिधावृत्तिलक्षणं ज्ञेयम् । तथा हि मुख्येऽर्थे शब्दस्य मुख्यो व्यापारोऽभिधेति लक्षणं वा । नानार्थव्यञ्जनायामतिव्याप्तिवारणाय मुख्य इति । मुखे आदौ साधुर्मुख्यः प्रथम इत्यायका (प्रत्यायकः[28] ?) । सा च [नानार्थ] व्यञ्जनात् [न] तथा अभिधया व्यवधानात् । व्यापारस्तत्र बोध्यबोधकाख्यः सम्बन्धः । अपभ्रंशे वारणाय तत्रेति । तत्र साक्षात् सङ्केतिताभ(भा)वस्य दर्शितत्वात् । अत्र यद् ज्ञानात् सम्बन्धस्मरणं ततः सम्बन्धिनोऽर्थस्योपस्थितिव्यापारीभूतज्ञानविषयत्वेन सम्बन्धस्य व्यापारता । करणज्ञानविषयत्वेन पदस्य करणतावदिति पदार्थोपस्थितिहेतुत्वेनैव व्यापारस्य सिद्धे संबन्धिस्मरणस्य संबन्धज्ञानसाध्यत्वात् ।

अथ लक्षणामवतारयति–**मुख्यार्थे**ति । मुख्यार्थबाधे मुख्यार्थान्वयानुपपत्तौ सत्यां, मुख्यार्थयोगे च सति, लक्षणा भवति । एकत्रैव मुख्यार्थबाधोऽथ च मुख्यार्थयोगोऽपि । एतस्मिन् द्वये सति एका रूढितो लक्षणा भवति अन्या प्रयोजनाद् भवति । अयमर्थः । लक्षणायां त्रयं नियामकं, यथा–१ मुख्यार्थबाधो २ मुख्यार्थयोगः ३ रूढिप्रयोजनाभ्यामन्यतरत्, इति त्रयमेकत्र वर्तते । यथा गङ्गायां घोष इत्यत्र मुख्यार्थबाधोऽस्ति, मुख्यार्थयोगोऽप्यस्ति २ प्रयोजनो[भूत]शैत्यपावनत्वादिबोधोऽपीति त्रयमस्ति । एवं कर्मणि कुशल इत्यत्र मुख्यार्थबाधः । कर्मणि कुशग्रहणकर्तृत्वं नास्ति । तद्योगो वर्तते यथा गङ्गायाः प्रवाहेण सह तटस्य संयोगलक्षणसम्बन्धस्तथाऽत्राऽपि विवेकलक्षणः सम्बन्धोऽस्ति । यथा कुशा विवेकेन गृह्यन्ते तथा कर्मा { ऽ } पि विवेकेन क्रियते इति विवेकयोगोऽस्ति । कुशग्रहणकर्मणोः रूढिरपि सर्वैरुच्यते । अयं कर्मणि कुशलोऽनादिपरम्परारूढिरिति ज्ञेयम् । रूढित इत्यस्यैव व्याख्यानम् । प्रसिद्धेरित्यर्थः । तदुक्तं भट्टकौ(कु)मारिलेन[29]–

निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।

क्रियते साम्प्रतं काश्चित् काश्चिन्नैवास्ति शक्तितः ॥१॥

निरूढा भ्रष्टोपचारप्रतीतयः इत्यर्थः । यथा राजेत्यादिका । राजशब्दो हि शूद्रे प्रयोगदर्शनात् क्षत्रिये मुख्यया वृत्त्या प्रयुक्तः सन् अन्यत्र शूद्रादौ क्षत्रियगतजनपरिपालनसदृशजनपदपुरपालनयोगे, लक्षणापूर्वकतया गौणवृत्त्या प्रयुज्यते । न चाऽत्र झगित्येव गौणत्वस्यावगतिर्विचारणा व्यवस्थाप्यत्वात् । तेनात्र गौणत्वं झगित्येव प्रतीयमानत्वात् भ्रष्टं इति भ्रष्टौ(ष्टो)पचारप्रतीतिकत्वं लक्षणाया इति लक्षणे व्यावृत्तिः, यथा मुख्यार्थबाध इत्यादौ । आरोपित(ता) क्रिया, लक्षणक्रिया । शब्दव्यापारः । आरोपिता मुख्यार्थप्रतीतिव्यवहिता(त)प्रतीतिकार्थनिष्ठा। शब्दव्यञ्जनानिर(रा)साय मुख्यार्थबाध इति । तात्पर्य्यविषयान्वये मुख्यार्थतावच्छेदकप्रत्ययादौ छत्रिगमनस्यानुपपत्त्याभावात् । किन्तु छत्रितदितरमते विवक्षिते छत्रित्वेन छत्रिणो(ऽ)नुप्रवेशादेकसार्थवाहित्वेनैवान्वयित्वात् असम्बन्धिलक्षणेऽतिप्रसङ्गात् तद्योग इति सम्प्रदायः । तत्र विचारासहत्वात् । तथा हि तात्पर्यो(र्यानु)पपत्तौ लक्षणाया आवश्यकत्वेन यथा कथञ्चित् सम्बन्धस्य सुवचत्वात् । तदभावे तु मुख्यार्थबाधविरहेणैव लक्षणाया अप्रसङ्गात् । वस्तुतस्तु[२२A] योगपदं प्रमाणान्तरानुत्थापक सम्बन्धपरम् । तेन धूमपदाद् व्याप्तिसम्बन्धेन वह्निस्मरणे न प्रसङ्ग(ङ्गः) । तस्यानुमानोत्थापकत्वात् । हेतुं विना लक्षणे[ऽ]तिप्रसङ्ग इति । रूढित इति । अथ शब्दो विकल्पे । रूढिः प्रसिद्धिप्रयोगप्रवाहः । प्रयोजनाति(त्) प्रयोजनमुद्दिश्य । ल्यब् लोपे पञ्चमी । नत्वै(त्वे)वं हेतुद्वे(द्वै)धेन(ना)नुगम इत्यत्र **मिश्रा** अन्यतरत्वेनानुगममाहुस्तत्र इतरभेदसाधने वैयर्थ्यापत्तेरिति कृतं विस्तरेण ।

लक्षणापदप्रयोगं दर्शयति—**अन्योऽर्थ** इत्यादि । लक्ष्यत इतीन(त्यना)न्तात् कु(क)र्माख्यातम् । यदिति क्रियाविशेषणम् । इनर्थो हेतुव्यापारः । हेतुश्च शब्द एवेति । अन्यार्थप्रतीतिहेतुः शब्दव्यापारः । स एवारोपिता क्रिया लक्षणेत्यर्थः । वृत्तिस्मरणं क्रिया सैव व्यापारस्तत्रैव पदं करणं क्रियया अयोगव्यवच्छेदेन, सम्बन्धिनः करणत्वात् ।

**'कर्मणि कुशलः' इत्यादौ दर्भग्रहणाद्ययोगात् 'गङ्गायां घोषः' इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासंभवात् मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च संबन्धे रूढितः प्रसिद्धेः तथा गङ्गातटे घोष इत्यादेः प्रयोगात् येषां न तथा प्रतिपत्तिः तेषां पावनत्वादीनां धर्माणां तथाप्रतिपादनात्मनः प्रयोजनाच्च मुख्येन अमुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा ।**

---

अथ रूढिप्रयोजनयोः क्रमेणोदाहरणमाह—**कर्मणी**त्यादि । **गङ्गायामि**त्यादि च । गङ्गातटे घोष इत्युच्यमाने घोषपावित्र्यबुद्धिर्न र्जा(जा)यते । { गङ्गायां घोष इत्युच्यमाने राज्ञः पावित्र्यबुद्धिर्जायते } यतः एव यथा वाराणसीनिकटवास्तव्या इत्युच्यमाने पावित्र्यबुद्धिर्न जायते । यथा च गङ्गायामित्युच्यमाने स्वनिष्ट(ष्ठ)शैत्यपावनत्वादिप्रतिपत्ति { राज्ञो } जा(र्जा)यते । तदेव प्रयोजनम् । तस्मात् अन्योऽर्थस्तटरूपो व(ल)क्ष्यते सा लक्षणलक्षणा, लक्ष्यलक्षकसम्बन्धः, शक्यसम्बन्धस्तटस्य, गङ्गापदस्य शक्यतट(टे) { ते } न सम्बन्धो लक्षणा । अत एव लक्षणं शक्यसम्बन्ध इति । आरोपितः **सान्तरार्थनिष्टो**(ष्ठो) मुख्यार्थप्रतीतिव्यवहितः । अभिधायां तु मुख्यार्थप्रतीतिर्जायते । अथ मुख्यार्थप्रतीतिव्यवहिताऽन्यार्थप्रतीतिर्जायते सा लक्षणा ज्ञेयेत्यर्थः । आरोपिते हेतुमाह—**अन्तरार्थनिष्ट**(ष्ठ) इति । अन्तरं व्यवधानं तेन सह वर्तते व्यवहितस्तीरादिः । स हि मुख्येन व्यवधीयते अतस्तीरादिविषयो व्यापारो मुख्यार्थगत एव । न तु निवृत्त(रुक्त)व्यापार[ता]गङ्गादिशब्दगतो(ता)ऽतः शब्दे न सम्भवतीति तत्रारोप्य इत्यर्थः ।

विभागा [भावाद्] रूढिलक्षणामुत्प्रे(पे)क्ष्य प्रयोजनलक्षाणा (णां) विभजते[30] । **स्वसिद्धय** इत्यादि । **टीकान्तरे**[31] व्याख्यानं यथा रूढिप्रयोजनयोः क्रमेण लक्ष्यद्वयमाह—**कर्मणी**त्यादि । **गङ्गायामि**त्यादि च । कुशं दर्भं लाति गृह्णाति इति आतः कः इति । यौगिकोऽर्थो मुख्यः । विवक्षितदक्षान्वयेन यौगि[क]त्वविरहात् मुख्यार्थबाधः । एवं सर्वत्रावधेयम् । गङ्गादीनामित्यादि ।

निर्विशेषं न सामान्यमिति यावद्विशेषाणां सामान्यनिर्वाहकतया अधिकरणत्वासम्भवबाधयोर्हेतुमद्भावः । कुशग्राहिणः सतो ग्रहणमसतः परित्याग इति विवेचनीयम् । सामि(मी)प्यादावित्येव पाठः । आदिपदाभावे च सामीप्य(प्यं) इत्युपलक्षणम् ।

ननु दक्षपदप्रयोगक्षमत्वे कथं लाक्षणिकप्रयोग इत्याह—**रूढित** इत्यादि । प्रसिद्धिः प्रयोगप्रवाहः । तेन मुख्यवत् प्रसिद्धस्य प्रयोगपर्य्यनुयोगायोगात् । **तथे**त्यादि । तथेति लक्षणसमन्वयेन क्रियामहितस्य समुच्चये । तथा प्रतिपादनात्मन इति । अन्यत्राऽन्यशब्दप्रयोगस्तद्धर्मप्राप्त्यर्थ इति । गङ्गागतशैत्यपावनत्वादिप्रतिपत्तये गङ्गापदप्रयोगः । सा च लक्षणान्तरालिकप्रयोजनीभूतगङ्गातटतादात्म्यप्रतीतिः साध्येति शैत्यपावनत्वादिलक्षणायाः प्रयोजनम् । मुख्य(ख्या)मुख्यं(ख्य)प्रयोगं(ग)[स्]तु भेदावगमेनैव(वे) { मि } त्यर्थः । मुख्येन बाधप्रतियोगे(गि)मुख्यार्थोपस्थापनद्वाराऽमुख्यो(ख्यस्य) व्यवधानेन प्रत्ययः । क्रियापदार्थः शब्दव्यापार इति । एतेन लक्षणाया अर्थनिष्ठत्वमपास्तम् । व्यवधानेन प्रत्येयत्वं सान्तरत्वम् । केचित् तु कुशलपदे कथं लक्षणा । दक्षत्वस्य प्रवृत्तिनिमित्तत्वात्, व्याकरणव्युत्पत्तेस्तु साधुत्वार्थकत्वात् पङ्कजमण्डपतैलपदेष्वतिव्याप्त्यसम्भवाव्याप्तिसम्भव(वात्) { न } योगस्याप्रयोजकत्वा[त्]। अत एव प्रत्यक्षेण विसंवादो यत्रार्थस्य विलोक्यते, स्वरसंस्कारसिद्ध्यर्था(र्थं) तत्र व्याकरणस्मृतिरित्युक्तम् । अन्यथा गौः शेत इत्यत्र गोपदे लक्षणाप्रसङ्गात् । गमेर्डोप्रत्ययेन गमनकर्तरि व्युत्पादनात् शयनकाले तद्बन्धत्वै(त्वे)न । कलिङ्गः साहसिक इत्युदाहार्य्यमित्याहुः[३२]। अन्ये तु कुशलमण्डपादिपदेषु न लक्षणा । मुख्यार्थबाधानुसन्धानं विनैव रूढ्या झटिति रक्षाद्युपस्थितेरिति वदन्ति । तत्र एवं निरूढि(ढ)लक्षणाया निर्विषयत्वापत्तेः । किन्तु प्रसिद्धिवशाद् द्रागेव मुख्यार्थबाधादेरवतारः । धूमादिदर्शनाद् वह्न्याद्यनुमितौ व्युत्पत्तिबलाद् व्याप्त्यादेरिवेति कृतं विस्तरेण ।

व्यङ्ग्यस्य गूढाऽगूढत्वविवेकहेतुकलक्षणाविवेकमाह—**स्वसिद्धये** [इ]त्यादि ।

(सू०१३) स्वसिद्धये पराक्षेपः परार्थे स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥१०॥

'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते। तत उपादानेनेयं लक्षणा ।

---

स्वस्यात्मोयस्यार्थस्य शक्यस्वसिद्धये अन्वयप्रतियोगित्वाय परस्य शब्दान्तर-वाच्यस्याक्षेप(पः) तद्वाचकशब्दं विना तदुपस्थानं आक्षेपस्य तथैव प्रसिद्धेः। तेन लक्ष्यवाचकशब्दात् तदुपस्थितौ वाग्न्या (च्या ?) विषये कुन्ताः प्रविश-न्तीत्यत्र कुन्तपदेन कुन्तोपस्थापनात् । एवं विवक्षायाः फलं वक्ष्यामः । लक्षणाभेदा यथा शुद्धा लक्षणा द्वेधा। एका उपादानलक्षणा द्वितीया लक्षण-लक्षणा। उपादानलक्षणा यथा कुन्ताः प्रविशन्तीत्यादिस्थले। लक्षणलक्षणा यथा गङ्गायां घोष इत्यादिस्थले। एतेन प्रयोजनलक्षणा द्विधा, शुद्धा गौणी च। शुद्धा उपादानलक्षणा लक्षणलक्षणा चेति द्विविधा प्रोक्ता। स्वसिद्धये पराक्षेप इत्युपादा-न[लक्षणा]। परार्थे स्वसमर्पणमिति [लक्षण] लक्षणम्। यथा परार्थमिति। परार्थं परप्रतीतये स्वस्यात्मीयस्य समर्पणमुपस्थापनमात्रम्। नाऽन्वयप्रवेशः। प्रयोज-नापरपर्य्यायेण स्व एव न फलत्वावगतिः। परता(वा)चकशद्वानुपादान एव पर-प्रतीतौ स्वसमर्पणफलत्वमुपादानं स्वार्थापरित्यागः । लक्षणमुपलक्षणम्। इतर-परिचायकत्वमात्रम्। इमे अजहत्स्वार्थजहत्स्वार्थरूपौ इति । हेतौ परार्थे स्वसमर्पण[म्] । इयं लक्षणा आक्षेपार्थाभ्यां स्वरूपनिरूपणात् द्विधा। न तु भेदान्तरवती। ननु शुद्धाशुद्धभेदेन चातुर्विध्यं, कथं द्वैविध्यमित्याह-शुद्धैवेति। उपादानलक्षणामुदाहरणमुखेन व्याकरोति कुन्ता इति । कुन्तादिभिरिति। आदि-शब्देन यष्ट्यादिपरिग्रहः । कुन्तादिभिः शब्दैः प्रवेशसिद्ध्यर्थं प्रवेशान्वयबोधक-त्वाय { स्य } शक्यस्य कुन्तस्य संयोगिनः इति शक्यसम्बन्धकथनं आक्षिप्यत इति वाचकशब्दप्रयोगविरहेणैव प्रत्याद्यन्ते(य्यते)। ततो हेतोः स्वस्याऽपि ग्रहणेन।

"गौरनुबन्ध्यः" इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते न तु शब्देनोच्यते "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति न्यायादित्युपादानलक्षणा तु नोदाहर्तव्या। न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते। यथा क्रियतामित्यत्र कर्ता। कुर्वित्यत्र कर्म। प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च।

---

अयमर्थः। कुन्तानामचेतनत्वेन प्रवेशक्रियाया असम्भवात् { प्रवेशः लक्षणस्य } मुख्यस्यार्थस्य बाधे सति कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं **स्वसंयोगिनः** पुरुषाः आक्षिप्यन्तेऽनुमाप्यन्ते इत्युपादानलक्षणा। अत्र प्रयोजनं बाहुल्यप्रतीतिः। कुन्तिनः प्रविशन्तीत्युक्ते कुन्तानां बाहुल्यप्रतीतिर्न स्यात्। केचित् तु गौरनुबन्ध्य इत्यादिकमुपादानलक्षणाया उदाहरणमाहुस्तन्मतं दूषयितुमनुवदति **गौरनुबन्ध्य** इति। यतः श्रुतिचोदितमनुबन्धनं गोत्वस्य कथं स्यात्, गोत्वस्यामूर्त्तत्वात् इति कृत्वा गोत्वस्याऽनुबन्धनान्वयसिद्ध्यर्थं गोत्वेन गोत्वविशिष्टव्यक्तेरुपादानं क्रियते। व्यक्तिर्लक्ष्यत इत्यर्थः। न तु अभिधयोच्यते।

अयमर्थः। गौरिति श्रुतिः प्रभुसस्मि(म्मि)ततया बन्धनस्यावश्यकर्तव्यतां दर्शयति। **श्रुती**ति। स्वबन्धनसिद्ध्यर्थं जात्या व्यक्तिराक्षिप्यत इत्यर्थः। ननु किं लक्षणया व्यक्तिरेवाधीयतामत आह—**नत्वि**ति। **उच्यत** इति। अभिधया प्रत्याय्यते। अत्र हेतुमाह—**विशेष्यमि**ति। अभिधेति कर्तृपदं वाचकशब्दव्यापारोऽभिधाविशेष्यं व्यवच्छेद्यं न गच्छेत् न व्याप्रियते, विशेषणे व्यवच्छेदके जातौ क्षीणशक्तिः क्षीणा शक्तिर्यस्याः सा। तेषां मते विशेषणे जातावेव शक्तिर्नतु विशेष्ये व्यक्तौ इत्यर्थः। एतत्पर्य्यन्त(न्तं) **मण्डनमिश्रै**रुपादानलक्षणाया उदाहरणं कथ्यते।

अथ **मण्डनादिमतं** दूषयति। **इत्युपादाने**ति। नोदाहर्तव्याऽलक्ष्यतया न दर्शयितव्या। **अ(न)ही**ति। अत्र योजना(न)स्यानुपलब्धिबाधादभावः। न चान्वयबोधस्तथा उपपादकविरहेण तदभावात्। तथा हि प्रथममभिधा(ध)या

**‘पीनो देवदत्तः दिवा न भुङ्क्ते’ इत्यत्र च रात्रिभोजनं न लक्ष्यते श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात् ।**

---

जातेरुपस्थितिस्ततस्तद्बाधादिज्ञानं, ततो लक्षणया व्यक्तेरिति व्यक्तिज्ञानदशायां जातेरज्ञानात् कथं विशिष्टे क्रियाद्यन्वयः । एवमेव युगपदुभयवृत्तिर्विरोधः । एवं च प्रयोजनाभावमुखेनोपादानलक्षणोक्तस्थले इति । **न वेत्यादि** । देवदत्तादिष्वाधुनिकसंज्ञापदेषु रूढ्यभावेन लक्षणाया अप्रवृत्तेर्व्यक्तिमात्रे न लक्षणेवि-(ति)भावः । उक्तस्थले दूषणान्तरमाह—**व्यक्तीत्यादि** । अविनाभावो व्याप्तिर्जत्या हेतुभावेनाक्षिप्यते अनुमाप्यते यथा जातिर्व्यक्त्याश्रिता:(ता) जातित्वादित्यनुमितायां व्यक्तावन्यलक्षणलभ्यत्वेन तत्र श्रुतिवाक्ये लक्षणेत्यर्थः । तुकारो दोषसमुच्चयार्थः । आक्षेपे दृष्टान्तमाह—**क्रियतामिति** । य वा(र्थां[33A])कृतिः साश्रया गुणत्वात् सविषयाकृतित्वात् इत्याक्षेपेण कर्तृकर्मलाभ इति । **गु**[33B]**रुमते**नार्थाक्षेपः । **भट्टमते** शब्दाक्षेपमाह—**प्रविश पिण्डीमित्यादौ** वक्ष्यमाणेषु चोदाहरणेषु लक्षणा विनैवाक्षेप इत्यर्थः । **क्रियतामित्यादौ** कर्ता आक्षिप्यतेऽनुमीयते न तु लक्षणात्र कल्प्या । यथा **प्रविश पिण्डीं** गृहं भक्षयेति प्रविश गृहं पिण्डीं भक्षयेत्याक्षेपा(प) इति प्रत्येकं योजना; इत्यादिस्थले लक्षणा नास्ति । रूढिप्रयोजनाभावात् अनुमानादेव प्रतीतिरित्यर्थः । ‘पीनो देवदत्तो दिवा न भुङ्क्ते’ इत्यत्राऽपि रात्रिभोजनमर्थापत्त्या जायते, न तु लक्षणया । गौर[नु]-बं(ब)न्ध्य इत्यारभ्य उदाहरणानि लक्षणागर्भितानि न भवन्तीति ज्ञेयः(यम्) । अथवा कर्ता सन्मुखीनः । कर्मप्राकरणिक(कं) कटादीति । तैरप्युक्तत्वादिति । अन्यलभ्ये न लक्षणेन्य(त्य)त्र दृष्टान्तमाह **पीन** इत्यादि । अत्र यद्यपि पीनत्व दिवाभोजनाभावयोरन्वयेन बाधस्तथाऽपि रात्रिभोजनतात्पर्य्यानुपपत्त्या लक्षणाप्रसक्तेति भावः । दिवा भोजनाभावतः पीनत्वं रात्रिभोजनं विनाऽनुपपन्नमित्यनुपपत्त्या रात्रिभोजनं कल्प्यत इत्यत्र च **भट्टमते** रात्रौ भुङ्क्ते इति शब्दः कल्प्यते । **गुरुमते** रात्रिभोजनमर्थमात्रमित्याह—**श्रुतार्थापत्ते**रित्यादि । श्रुतेनाश्रुतार्थस्यापत्तिः श्रुतार्थापत्तिः । तस्य रात्रिभोजनस्य ।

**'गङ्गायां घोषः' इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयति इत्येवमादौ लक्षणेनैषा लक्षणा । उभयरूपा चेयं शुद्धा । उपचारेणामिश्रितत्वात् ।**

**अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम् । तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः । गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः ।**

---

उपादानलक्षणामुक्त्वा लक्षणलक्षणामाह—**गङ्गायामि**त्यादि । सूत्रस्थं[34] परार्थमित्येतद् व्याकरोति **तटस्ये**ति । स्वसमर्पणमित्येतद् व्याकरोति **गङ्गाशब्द** इति । स्वसमर्पणं नाम जहत्स्वार्थत्वम् । लक्षणेन स्वार्थसमर्पणेन उपलक्षिता लक्षणलक्षणेत्यर्थः । अयमर्थः । स्वार्थं शक्यं अर्पयति लक्षणेन उपलक्षणेन इतरपरिचायकत्वेन । यथो तृए त्वस्य[35] काक इति स्पष्टार्थः । शुद्धैवेति । व्याचष्टे **उभयरूपे**त्यादि । उपादानलक्षणा(ण)भेदात् द्विधा । गङ्गायां घोषः, कर्मणि कुशल इत्यादौ च सादृश्यं नास्तीति शुद्धा लक्षणा । शुद्धत्वे हेतुमाह—**उपचारेणे**ति । भिन्नत्वेन प्रतीयमानयोरैक्यारोपणमुपचारः । सारोपसाध्यवसानयोरुपचारेण मिश्रितत्वमेव ताटस्थ्यं वर्तते । **लक्ष्यस्य** तटादे**र्लक्षकस्य** गङ्गादेस्तटस्थत्वं भेदाऽभेदौदासीन्यम् । कुन्ताः पुरुषा इत्यत्र कुन्तपुरुषयोर्भेदप्रतीतिः भेदोपस्थापकविभक्त्यभावात् नाप्यभेदस्य योग्यताविरहात् उपादानलक्षणयोस्ताटस्थ्यं नास्तीति कृत्वा भेदः । ताटस्थ्यं नामाभेदज्ञानाभावः । यथा गौर्वाहीक इत्यत्राभेदप्रतीतिः । गौरेवायमिति वा भेदप्रतिपत्तिर्नास्तीति कृत्वा न ताटस्थ्यम् । अयमर्थः । अनयोरुपादानलक्षणयोः सारोपसाध्यवसानाभ्यां लक्ष्यस्य तटस्य लक्षकस्य प्रवाहस्य च यत् ताटस्थ्यं न भेदरूपमिति ग्रन्थयोजना । अत्रेदं तात्पर्यम् । यत् कैश्चिदुच्यते लक्षस्य लक्षकस्य च यत् ताटस्थ्यं भेदज्ञानाभावं अभेदज्ञानं तदेव सारोपाया(सा)ध्यवसानाभ्यामुपादानलक्षणयोर्व्यावर्तकमिति । तन्न । भेदरूपं व्याव-

र्तकं कुतः इत्यत आह–**तटादीनां** । गङ्गादिशब्दैर्बाधितत्वाप्रतिपत्तौ, तटे गङ्गात्वप्रतिपत्तौ प्रतिपिपादयिषितुः पुरुषस्य शैत्यपावनत्वादिप्रयोजनसम्प्रत्ययो भवति । अथ(त्र) भेदप्रतिपत्तिर्नास्ति किन्तु गङ्गासम्बन्धमात्रप्रतिपत्तिस्तदा गङ्गातटे घोष इति मुख्याद् वाक्यात् गङ्गायां घोष एतस्य को भेदः स्यात् । तस्मात् ताटस्थ्यं न भेदकम् । किन्तूपचारेणामिश्रितत्वमेव भेदकमिति सिद्धम् ।

**टीकान्तरे**[36] यथा उभयरूपा चेत्यशुद्धेति उपादानलक्षणरूपा इत्यर्थः । यथा गौर्वाहीक इत्यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्य्यते न तथाऽत्रेति भावः । अत्र भेदप्रतिपत्तिपूर्वा(र्वं)मेव(वा)भेदस्तत्र भेदपूर्वं, एतदेव द्रढयति **अनयोरिति** । उपादानलक्षणयोरित्यर्थः । तटादीनां लक्ष्याणां प्रतिपादने भेदात्मकं न ताटस्थ्यं किन्तु कुन्ततत्पुरुषयोर्गङ्गातटयोश्चाभेद एवेति । [37]यदन्यैस्ताटस्थ्ये लक्षणा शुद्धेत्युक्तं तद्दूषितमित्याह– **तत्त्वप्रतिपत्तौ हीति** । भेदे तु गङ्गासम्बन्धमात्रप्रतीतिर्लक्षणेति । अभेदज्ञानमुपादानलक्षणयोर्भेदज्ञानं तु सारोपसाध्यवसानयोरिति भावः। उपचारो नाम गुणयोगः । तदमिश्रत्वं शुद्धत्वमत एव वक्ष्यमाणौ गौर्वाहीको गौरयमिति च सारोपाध्यवसानभेदो(दौ) जाडयमान्द्यादिना गुणेन मिश्र(श्रि)[त]त्वात् । अनयोर्लक्षणलक्षणोपादानव्यतिरेकेण भेदकान्तरमस्तीति कश्चिद् वदति तन्मतं दूषयति । **अनयोरित्यादि** । [38]गङ्गायां घोष इत्यत्र लक्ष्यकं ताटस्थ्यं लक्ष्याणां कुन्तिनां ताटस्थ्यं नाम लक्षकस्य श्रो(स्रो)तसो गङ्गाशब्दबोध्यकोटिनिवेशाभावः । कुन्ता प्रविशन्तीत्यत्र लक्ष्यं ताटस्थ्यं लक्ष्याणां कुन्तिनां ताटस्थ्यं नाम कुन्तशब्दबोध्यकोटिनिवेशाभावः । एतत् ताटस्थ्यं नाम अनयोर्भेदरूपं भेदकं न भवतीत्यर्थः । अत्र हेतुमाह–**तटादीनामिति** । [39]प्रतिपादने कर्तव्ये प्रयोजनसिद्ध्यर्थं तादात्म्यप्रतीतिरङ्गीकर्तव्या । तथा च ताटस्थ्यं नास्तीत्यर्थः । तादात्म्यप्रतिपत्तौ प्रयोजनसिद्धिरित्यन्वयमाह–**तत्र(त्त्व)प्रतिपत्तौ हीति** । व्यतिरेकमाह–**गङ्गेति**। सम्बध्यते इति सम्बन्धं तीरं कर्मणि [40]घञ् तन्मात्रप्रतीतावित्यर्थः । नन्वस्मिन् पक्षे जहत्स्वार्था(र्थ)रूपस्य

(सू० १४)—सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा ॥

आरोप्यमाणः आरोपविषयश्च यत्रापह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ॥

(सू० १५)—विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥११॥

विषयिणारोप्यमाणेनान्तःकृते निगीर्णे अन्यस्मिन्नारोपविषये सति साध्यवसाना स्यात् ॥

(सू० १६)— भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा । गौणौ शुद्धौ च विज्ञेयौ

इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ 'गौर्वाहीकः' इत्यत्र 'गौरयम्' इत्यत्र च ।

---

लक्षणस्य तुल्यत्वात् लक्षणलक्षणासाध्यवसानयोः को भेद इति चे[41]दयं भावः । गौणे साध्यवसाने [सा]दृश्यनिबन्धनत्वं, लक्षणभेदे तु तदभावः । शुद्धेऽपि साध्यवसाने आयुर(रे)वेदमित्यादौ आरोप्यमाणगतस्य पा(जी)वनत्वादेः फलरूपत्वमित्यर्थः इत्यलं विस्तरेण । प्रकृतं प्रस्तूयते ।

शुद्धां लक्षणां द्विप्रकारामुक्त्वा इदानीमुपचारमिश्रां चतुर्भेदां निरूपयति, **सारोपे**ति । शुद्धातोऽन्या सारोपा पूर्वभेदद्वयादन्या । भेदकमाह—**यत्रे**ति । समति(भि)व्याहारे । **विषयी** आरोप्यमाणः । **विषय** आरोपाधिकरणम् । यथा विषयो गवादिर्विषयो वाहीकादिरारोप्यमाणो, { गवादिरारोपविषयश्च } वाहीकादिप्रकृतस्याप्रकृततादात्म्यप्रतीति सा(रा)रोपस्तौ नापह्नुतभेदो(दौ) न निगीर्णस्वरूपौ सामानाधिकरण्येन निर्दिश्य(श्ये)ते । सो सारोपलक्षणेत्यर्थः । इयं च लक्षणाभेदप्राधान्ये आरोपे आरोपविषयानपह्नवे रूपकमिति, रूपकालङ्कारस्य बीजम् । साध्यवसानामाह-**विषय्यतः(न्तः)कृत** इति । यत्रारोपविषयस्य वाहीकादेः आरोप्यमाणगवाद्यन्तर्लीनतयाऽविवक्षितत्वात् स्वरूपापह्नवः क्रियते तत्राऽध्यवसानता । प्रकृतवैधर्म्येणोपस्थितस्य, प्रकृतस्याऽप्रकृततादात्म्यप्रतीतित्वेन सह वर्तत इति

साध्यवसानिका । इयं च लक्षणा[ऽ] ध्यवसिति प्राधान्येनातिशयोक्तिरेवेत्यतिशयोक्त्यलङ्कारस्य बीजरूपास्ति । अस्मिन्नारोपविषय इति प्रकरणबलादन्यपदेनारोपविषयाभिधानं सा साध्यबसानेत्यर्थः । अयमर्थः । आरोप्यमाणेन विषयिणा आरोपविषये निगीर्णे सति द्विभावात्, सारोपा तु आरोप्यमाणे विषयिणि तन्मात्रनिष्ठो यो धर्मः आरोपविषयमात्रनिष्ठश्च यो धर्मस्तयोर्धर्मयोर्यत्र सामानाधिकरण्येन प्रतीति(तिः) सा सारोपा १ । यत्रारोप्यमाणवृत्तिधर्मेण आरोपविषया(य)वृत्तिधर्मस्य व्यापकत्वप्रतोतिः सा साध्यवसानिका२ । इह पूर्वमुदाहरणं शुद्धायाः । सारोपाया यथा आयुर्घृतम् । अत्र समानविभक्तकयोः पदयोरभेदप्रतीतिरत्र घृतमारोप्यविषयं आरोप्यमाणमायुः । अनयोरेतद्वृत्तिधर्मयोरायुत्वघृतत्वयोः सामानाधिकरण्यप्रतीतिः सा सारोपा १ । द्वितोयायाः शुद्धसाध्यवसानिकाया उदाहरणं यथा आयुरेवेदम् । आरोप्यमाणो विषयी आयुरूपस्तद्वृत्तिधर्म आयुष्ट्वं तस्मिन्नायुष्ट्वे आरोपविषयवृत्तिः धर्मो घृतत्वं इदंत्वं वा तस्य व्यापकत्वम् २ । एतावता यत्र २ घृतत्वं तत्र तत्रायुष्ट्वम् । आयुष्ट्वं व्यापकं, घृतत्वं व्याप्यम् । केन सम्बन्धेन, स्वाश्रययोः कार्यकारणभावसम्बन्धेन व्याप्यव्यापकसम्बन्ध एवार्थस्तेन विषयिणा आरोपविषयो घृतं निगीर्णमाच्छादितमितीयं द्वितीया २ । अयमर्थः । यथा आरोप्यमाणविषयि आयुः आरोपविषयो घृतं निगीर्णमाच्छादितं, अथवा लक्षणमुभयोर्यथा आरोप्यमाणारोपविषययोर्यत्राभेदप्रतीतिः सा सारोपा १ । यत्र तयोरेवात्यन्ताभेदप्रतीतिः सा साध्यवसायि(नि)का २ ।

अथ सारोपाऽपि द्विविधा । शुद्धा गौणी च । साध्यवसानिकेति । सा शुद्धसाध्यवसायि(नि)का शुद्धा । सादृश्यसम्बन्धेनाभेदप्रतीतिः सा गौणसारोपा । एवं यत्र सादृश्याद भवतः शुद्धौ च सम्बन्धान्तरतो भवत इत्यर्थः । अथ गौर्वाहीक इत्यत्र गौणसारोपा लक्षणा । गौरेवायमित्यत्र गौणसाध्यवसाना लक्षणेति । तत्र किं लक्ष्यं किं लक्षकमित्याह—**अत्र** हीति । अत्र हि वाहीकादौ गवादित्वशब्दप्रवृत्तिनिमित्ते वादिनां विप्रतिपत्तिं दर्शयति । **अत्र** हीति । **टीकान्तरे**[42] अत्र गोशब्देन स्वार्थसहचारिणो गोसहचारिणौ (णो) जाडयमान्द्यादयो

**अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिवृत्तित्वमुपयान्ति इति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयते इत्यन्ये। साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यते इत्यपरे।**

---

गुणास्ते लक्ष्यन्ते। प्रथममते गोवृत्तिगुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने वाहीकार्थाभिधाने प्रवृत्तिनिमित्तमुपयान्तीति। **अयमर्थः।** यथा गङ्गाशब्दस्य स्वार्थसम्बन्धिनि तटे लक्षणा तथा गोशब्दस्य स्वार्थसम्बन्धिनि जाड्चमान्द्यादौ गुणे लक्षणा। यद्रूपगुणयोगतो गोशब्दो वाहीकरूपमर्थमभिदधातीति। गौणसारोपा। तथा चायमर्थो योगत जाड्चमान्द्यादि विशिष्ट एव युक्तः इति प्रथममतम्। अत्र [43]**टीकान्तरे**ऽर्थो यथा—**स्वार्थे**ति। स्वस्य गोशब्दस्यार्थो गोत्वम्। पिण्डाकृतीवा(तिर्वा)। तत्सहचारिणो(णा) गोशब्देन लक्ष्यमाणः पदार्थो वाहीकादिर्गोशब्दो वाहीकशब्देन सहानुपपद्यमानसामानाधिकरण्यत्वेन बाधितमुख्यार्थः सन् स्वाभिधानपुरःसरं स्वार्थसहचारिजाड्यादिगुणान् लक्षयित्वा तानेव निमित्तीकृत्य तत्सदृशवाहीके उपचारितस्तमभिधत्त इत्यर्थः। अस्मिन् पक्षे प्रवृत्तिनिमित्तस्य लक्ष्यमाणत्वम्। व्यधिकरणत्वम्। गोशब्दस्यासङ्केतितवाहीकार्थावि(भि)धायकत्वं चेति त्रितयमयुक्तमित्यरुच्या पे(प)क्षान्तरमाह—**स्वार्थसहचारी**ति। अत्र प्रथममते आशङ्का यथा ननु गोगता जाडयमान्द्यादयो गुणा विवर्तन्ते वाहीके तु ते न सन्ति तथा चाऽन्यनिष्ठा जाडयमान्द्यादयो गुणाः कथं वाहीके गोपदं प्रवर्तयन्तीत्यस्वरसादाह—द्वितीयं पक्षं **स्वार्थसहचारी**ति। अस्यार्थो यथा जाडयमान्द्यादयो गुणा गवि वाहीके च वर्तन्ते तथा च गोशब्देन स्वार्थसहचारिगुणा भेदसम्बन्धेन वाहीकगता गुणा एव लक्षितास्ते तु वाहीकेऽपि तिष्ठन्त्येवेति। तथाच वाहीकगतजाड्यमान्द्यादिगुणयोगतो गोशब्दो वाहीके प्रवर्तते। इत्यन्यनिष्ठा न भवन्तीति। गोशब्द(ब्दं)वाहीके प्रवर्तयन्तीत्येव। द्वितीयपदार्थः २। द्वितीयपक्षे [44]लक्षकस्य गोशब्दार्थस्य लक्ष्यस्य वाहीकगतजाडयादेश्च सम्बन्धो न सम्भवति। गुणैक्यं सम्बन्ध इति चेन्न। विक-

**उक्तं चान्यत्र—"अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।**
**लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥ " इति**

**अविनाभावोऽत्र संबन्धमात्रं न तु नान्तरीयकत्वम् । तत्त्वे हि 'मञ्चाः क्रोशन्ति' इत्यादौ न लक्षणा स्यात् । अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम् ।**

---

ल्पासहत्वात् । तत् किं तुल्यगुणत्वमतुल्यकगुणत्वं च । नाद्यः लक्षकस्य गवादेःप्रयत्नेन (द्रव्यत्वेन) गुणत्वाभावात्, नाऽपि द्वितीयः, लक्ष्यस्य जाड्यादेर्गुणत्वेन गुणवत्त्वाभावात् । किञ्च जाड्यादिगुणमात्रप्रतीतौ गौर्जाड्या(ड्य)मिति प्रयोगप्रसङ्ग इत्यरुच्या स्वाभिमतमदुष्टं पक्षमाह—**साधारणे**ति । इति **टीकान्तरे**[45] । अत्राप्यस्वरसो यथा ननु यदि गोशब्देन वाहीकगता जाड्यमान्द्यादयो गुणा लक्षितास्तर्हि तैर्गुणैः सह वाहीकस्याभेदान्वयो न स्यात् । न हि जाड्यमान्द्यादिगुणैः सह वाहीकस्याभेदः न च वाहीकस्य तैः सह भेदेनैवाऽन्वयो भविष्यतीति वाच्यं समानविभक्तिकयोरभेदेनैवाऽन्वयस्य व्युत्पन्नत्वादित्यस्वरसात् तृतीयं पक्षमाह—इत्यपि **टीकान्तरे**[46] । **साधारणे**ति । ते जाड्यमान्द्यादयो गुणा यतः साधारणा अतो गोशब्देन वाहीक एवं जाड्यमान्द्यादिगुणवान् लक्ष्यते । न तु गुणाः । तथा चायमर्थः । गौर्वाहीक इत्यत्र गोशब्देन साधारणगुणवान् जाड्यमान्द्यादिगुणविशिष्टो लक्षितः । स च वाहीक एवेत्यर्थः सम्पन्नः इति । तृतीयं मतं समीचीनम् ।

अत्रार्थे **दण्डिनः**[47] सम्मतिमाह—**उक्तं चे**ति । मुख्यार्थो गङ्गाशब्दस्य प्रवाहस्तस्य परिग्रहे प्रत्यक्षादिप्रमाणविरोधा(धः) । आह—**अभिधेये**ति । अनेन प्रथमदलेन मुख्यार्थबाध उक्तो, द्वितीयेन दलेन मुख्यार्थसम्बन्ध उक्तः । तद्योग उक्तो यथाभिधेयाविनाभूतप्रतीतिरित्यनेन { तद्योग उक्तः } । अभिधेयेन वाच्येन सह सम्बन्धं(न्धः), तस्मिन् या प्रतीतिः सा लक्षणोच्यते इत्यर्थः ।

अथ गौणोलक्षणामाह **लक्ष्यमाणे**ति। यत्र स्वाह(र्थे)सहचरितगुणवान् लक्ष्यते तत्र गो(गौ)णीलक्षणाः(णा)। गुणैर्योगा(त्) गौणोत्यर्थः। अथ स्पष्टोऽर्थो लिख्यते। अभिधेयात् मुख्यादर्थादविनाभूता मुख्यार्थसम्बद्धैव वाच्याऽर्थान्तरप्रतीति(तिः) सा लक्षणा शुद्धोच्यते। तु पुनः। लक्ष्यमाणैर्जाड्यादिभिर्गुणैर्योगात् सम्बन्धात् या ग(गो)शब्दानां (Or यत्र शब्दानां ?) प्रवृत्तिः सव्यवधानार्थनिष्ठः शब्दव्यापार; सा गौणी लक्षणा इत्यर्थः। ननु अभिधेयाविनाभूतप्रतीतिर्यदि लक्षणा तथा व्याप्तानुमानेनैव बोधो भविष्यति, किमर्थं लक्षणेत्यत आह—**अविनाभावोऽत्रे**ति। अत्राविनाभावः सम्बन्धमात्रं न तु नान्तरीयकत्वं, व्याप्तिः। नान्तरमविना तत्र भवं नान्तरीयकम्। गे(ग)हादित्वाच्छ[प्रत्ययः]। स्वार्थे कः। **तत्त्वेही**ति। व्याप्तित्वे इत्यर्थः। मञ्चा इति। यत्र २ मञ्चास्तत्र तत्र मञ्चस्थाः पुरुषा इति व्याप्त्यैव बोधो न भविष्यति मञ्चपुरुषयोरविनाभावा-[भावा]त्। अत्राऽपि लक्षणा न स्यादित्यर्थः। इष्टापत्तिश्चेत्। तदा व्याप्तिबोधं विनाऽपि मञ्चाः क्रोशन्तीत्यादौ मुख्यार्थबो(बा)धात् मञ्चस्थपुरुषाणां बोधो जायत एवेति न व्याप्तिः। [48]**टीकान्तरे** योजना यथा—गुण संयोजनादियं गौणी वृत्तिरविनाभावस्यानुमानोत्थापकत्वेन तस्य लक्षणाहेतुत्वमित्याह **अविनाभावोऽत्रे**ति[49]। सम्बन्धमात्रमविनाभावो, यथा भावे भावः, सत्त्वे सत्त्वं व्याप्तिः। सत्त्वे सत्त्वं व्यतिरेके व्यतिरेकः। विना व्यतिरेके(को)भावस्य सत्त्वस्याभाव इति व्युत्पत्तिलभ्यः। तत्त्वे इति नान्तरीयकत्वे। लक्षणा न स्यात्। पुरुषमञ्चयोः परस्परमन्वयव्यतिरेकाननुविधानात् न तु क्रोशनकाले व्याप्तिरस्त्येवेत्याह—**अविनाभावे चे**त्यादि। आक्षेपोऽनुमानम्। अन्यलभ्यत्वेन लक्षणानुपयोग इति भावः। **उक्त**मिति। व्यक्तिलक्षणावादिम[49A]ण्डनमतखण्डने व्यक्त्यविनाभावित्वाच्च जात्या व्यक्तिराक्षिप्यत इत्यनेनेत्यर्थ इति। पूर्वं गौणसारोपाया गौर्वाहीक इत्यादिनोदाहरणं दर्शितम्। गौणसाध्यवसानाया अपि गौरेवायमित्याद्युदाहरणं दर्शितम्। सम्प्रति शुद्धसारोपायाः शुद्धसाध्यवसानायाश्चोदाहरणमाह-**आयुरि**ति। सारोपसाध्यवसानयोर्लक्षणयोः सम्बन्धान्तरतः कार्यकारणभावलक्षणात् सम्बन्ध-

‘आयुर्घृतम्’ ‘आयुरेवेदम्’ इत्यादौ च सादृश्यादन्यत् कार्यकारणभावादि सम्बन्धान्तरम्। एवमादौ च कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने। अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनम्। शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि। क्वचित् तादर्थ्यादुपचारः। यथा इन्द्रार्था स्थूणा इन्द्रः। क्वचित् स्वस्वामिभावात्। यथा राजकीयः पुरुषो राजा। क्वचित् अवयवावयविभावात्। यथा अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः। क्वचित् तात्कर्म्यात्। यथा अतक्षा तक्षा।

---

विशेषात् शुद्धौ भेदौ भवतः यथा—आयुर्घृतं आयुरेवेदमित्यादौ। आयुर्घृतमित्यत्र लक्षणकार्यनिलीनतया कारणभूतस्य प्रतीतेरध्यवसानमियं साध्यवसाना शुद्धा लक्षणा। अयमर्थः। आयुर्घृतमियं शुद्धसारोपा। आयुरेवेदमियं शुद्धसाध्यवसानिका। अत्र सादृश्याद्यतिरिक्तं कार्यकारणभावादिसम्बन्धान्तरमस्तीति। कारण(णं) घृतं कार्यमायुरिति तयोः सम्बन्ध इत्यर्थः। अत्रेति। अत्र लक्षणास्थले गौणभेदयोर्गौणसारोपगौणसाध्यवसानयोर्भेदेऽपि सारोपसाध्यवसानयोरेकत्र सारोपायां ताद्रूप्यप्रतीतिः प्रयोजनमपरत्र साध्यवसानायां सर्वथाऽभेदं(द)प्रत्ययः प्रयोजनमिति। शुद्धसारोपस्थले तु अन्यवैलक्षण्येन कारणभावो यथा घृतं(त)मन्यवैलक्षण्येनायुषः साधनमित्येकत्रार्थः। शुद्धसाध्यवसानिकायां तु अव्यभिचारेणाऽऽयुः साधनं घृतमेवेति भेदः। एवमादाविति। आयुर्घृतमायुरेवेदमित्यादाविव कार्यकारणादिसम्बन्धनिमित्तिकाया लक्षणायाः पूर्वमारोपाध्यवसाने इति।

यथा सम्बन्धान्तरतः शुद्धसारोपा शुद्धसाध्यवसानिकं(का) चेत्युक्तं, तत्र लक्षणायोग्यान् कतिचित् सम्बन्धानाह—क्वचिदिति। अथवा सादृश्येतरसम्बन्धप्रपञ्चमाह—क्वचिदिति। इन्द्रार्था स्थूणा इन्द्र इति। इन्द्रार्थाः(र्था) इन्द्रपूजाप्रयोजनिका। स्थूणा स्तम्भा(म्भ) इत्यर्थः। उपचारो व्यवहार इत्यर्थः। अत्रेष्टार्थप्रदायकत्वं व्याप्यम्। इयं शुद्धसारोपा। अत्रारोप्यमाणस्थूणायां विषयी-

**(सू० १७) लक्षणा तेन षड्विधा ॥१२॥**
**आद्यभेदाभ्यां सह ॥**

---

(य) इन्द्रः । इन्द्रश्चारोपं(प)विषयः । स्थूण(णा)शब्द इन्द्रे उपचरितः । आरोपितविशेषणमिन्द्रः । इयं तादर्थ्यसम्बन्धाल्लक्षणा । यदुक्तमेकशतं षष्टचर्था इति । सम्बन्धानामनेकत्वात् । यदाह—[50]चरणस्थानतादर्थ्यवृत्तमानध(धा)रणसामीप्ययोगसाधनाधि[प]त्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्न पुरुषेश्वतद्भावेऽपि तद्वदुपचार इति । क्वचित् पुनः स्वसामिभावादुपचारः । यथाऽयं राजकीयपुरुषो राजेत्यत्रानुल्लङ्घ्यशासनत्वादिकं व्यङ्ग्यम् । राजकीयः पुरुषो राजा इयं शुद्धसारोपा । राजा एवाऽयं शुद्धसाध्यवसानिका । अग्रे हस्त इति हस्तावयवेन हस्तव्यापारं विदधातीति सामर्थ्यादिव्यङ्ग्यम् । **अग्रहस्त** इति । कर्मधारयसमासवादिमते । यन्मते तु हस्त्यायं (हस्ताग्रं ?) इति विग्रहस्तन्मते पीता कार्पटिकैर्गङ्गेत्युदाहार्यम् । क्वचित्तात्कर्म्यादुपचार इति । तत्कर्मकारित्वं यथा **अतक्षे**ति । अत्र सूत्रधारकर्मकारित्वादतक्षा कथ्यते । अतक्षागोपालादिरन्यस्त(स्तु) गृहकर्मा । तक्षा जातिवै(वि)शेष इत्यर्थः । अतक्षा इति आरोपविषयो विशेष्य(ष्यः) । तक्षा इत्यारोप्यमाणं विशेषणम् । तक्षेत्यत्र कर्मनिपुणत्वादि व्यङ्ग्यम् ।

सुखावबोधार्थमुक्तभेदान् परिगणयति **लक्षणे**ति । लक्षणा प्रयोजनलक्षणेत्यर्थः । इदानीमुपसंहरति । **आद्यं(द्य)भेदाभ्या**मिति । उपादानलक्षणालक्षणलक्षणाभ्यां सह सारोपासाध्यवसानयोश्च गौणशुद्धभेदात् प्रत्येकं द्वैविध्यमिति । सङ्कल[ने]न लक्षणा षट्प्रकारा भवति । यदाह—उपादानात् लक्षणाच्च शुद्धा सा द्विविधा मता । आरोपाध्यवसानाभ्यां शुद्धगौणोपचारयोः प्रत्येकं भिद्यमानत्वादुपचारश्चतुर्विध इति । लक्षणायाः प्रयोजनलक्षणाया रूढिलक्षणायाश्च विशेषमाह—**सा चे**ति । या लक्षणा व्यङ्ग्येन रहिता सा रूढितो लक्षणा । यथा कर्मणि कुशल इत्यादौ । रूढिलक्षणायां व्यङ्ग्यं नास्ति । व्यङ्ग्यसहिता प्रयोजनवती । प्रयोजनं व्यञ्जनाव्यापारेण गम्यम् । तच्च प्रयोजनं व्यञ्ज-

सा च

(सू० १८) व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ॥

(सू० १९) तच्च गूढमगूढं वा ।

तच्चेति व्यङ्ग्यम् । गूढं यथा

मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥९॥

---

नव्यापारसहायव्यापारान्तरेण नाऽवगम्यत इत्यर्थः । लक्षणाभेदानाह—षड्विधेति । ते च षड्भेदा यथा उपादानलक्षणाः(णा)१ लक्षणलक्षणा २ गौणसारोपा ३ गौणसाध्यवसाना ४ शुद्धसारोपा ५ शुद्धसाध्यवसाना ६ । व्यङ्ग्यरहिता रूढं(ढि)लक्षणा एका ७ । उक्तषड्विधप्रयोजनलक्षणा गूढाऽगूढव्यङ्ग्येन द्वादशविधा । एवं त्रयोदशविधत्वं दर्शयति । सा चेत्यादिना ।

ननु लक्षणायाः प्रयोजनवत्वे व्यङ्ग्यवत्वं कुतो लब्धमित्याह—प्रयोजनं हीति । हिर्हेतौ । व्यञ्जनव्यापारगम्यत्वादित्यर्थः । अथवा प्रयोजनलक्षणाया नियमेन व्यङ्ग्यसहितत्वे(त्वं) प्रतिपादयन्ति(ति) प्रयोजनं हीति[51] । लक्षणा[याः] प्रा(प्र)कृतत्वात् तच्चेत्यसङ्गतमित्याशङ्क्याह—तच्चेति । तद्वयङ्ग्यं गूढकाव्यार्थपरिभावनापरिपक्वबुद्धिविभवमात्रवेद्य[म्] । अगूढमनत्यन्तसहृदयैरपि झटिति ग्राह्यम् । ननु प्रयोजने किं गूढत्वमगूढत्वं चेत्याह—तच्चेति । व्यङ्ग्यमिति । व्यञ्जनसामर्थ्या एव सूक्ष्मत्वस्थूला(ल)[त्वा]भ्यां व्यङ्ग्यस्यैव द्वैविध्यमिति भावः । गूढव्यङ्ग्यमुदाहरति गूढं यथेति । कश्चिद् युवा काञ्चिद्यो(द्यु)[व]तिमालोक्याह— मुखमिति । बत इत्याश्चर्ये । इन्दुवदनाततौ(नौ) चन्द्रमुखीशरीरे । तरुणिमोद्गमस्तारुण्यप्रादुर्भावो । मोदते वृद्धिं यातीत्यन्वयः । तमेव मोदनप्रकारमाह—मुखमित्यादिना । किं भूतं मुखं, विकसितं(त)स्मितं; विकसितं

च स्मितं च विकसितस्मितम् । विकाशो(सो) हि कुसुमधर्मः । स च स्मितेऽनुपपन्न इति बाधितमुख्यार्थः सन् सच्छायत्वसादृश्यात् स्मितं लक्षयन् हृद्यत्वसुरभित्वादिप्रयोजनसहस्त्रं व्यनक्ति । प्रेक्षितं कथम्भूतं च(व)शितवक्रिम वशित(तं) स्वाधीनीकृतं च(व)क्रत्वं येन तत् । वशीकरणं हि चेत्(त)नधर्मः । स च वक्रिमण्यनुपपन्नः । यो हि यस्य वश्यो भवति स यस्याऽप्यायत्तो भवतीति वशितशब्दोऽसम्भवन् वशितरूपस्वार्थमायत्तत्वादिसादृश्यात् वक्रिमाण(णं) लक्षयन् तदनुसरणत्वादिप्रयोजनसहस्त्रं व्यनक्ति । पुनर्गतिः किम्भूता । समुच्छलितविभ्रमा । समुच्छलिता उद्गता विभ्रमा यस्या सा समुच्छलितविभ्रमा । अत्र च समुच्छलनं जलादेर्धर्मः । स च विभ्रमेऽनुपपन्नः । यस्तु समुच्छलति स चोत्कल्लोलो भवति इति समुच्छलितशब्दो बाधितमुख्यार्थः सन् उत्कल्लोलादिसादृश्याद् विभ्रम[मं] लक्षयन् प्रौढतरसर्वजनाभिलषणीयत्वादिप्रयोजनसहस्त्रं व्यनक्ति । किं विशिष्टा मतिः । अपास्तसंस्थेति । अपास्ता मुक्ता संस्था मर्यादा यया साऽत्राऽपास्तसंस्था । अत्रापासनं हि सचेतनधर्मः । स चाऽमूर्तायां मतावनुपपन्नः । यो हि येनाऽपास्यते स तस्य न भवतीति बाधितमुख्यार्थोऽपास्तशब्दः तत्त्वनिवृत्तिसादृश्यात् संस्थानं लक्षयन् पुनरस्वीकारादिप्रयोजनसहस्त्रं व्यनक्ति । पुनः किं विशिष्टमुरो(रः) । मुकुलितस्तनम् । मुकुलितौ किञ्चिदुद्भिन्नौ स्तनौ यस्य तत् मुकुलितस्तनम् । अत्र मुकुलितत्वं हि कोरकधर्मः । स चोरसि अनुपपन्नः । यो हि मुकुलितो भवति स च किञ्चिदुद्भिन्नो भवतीति मुकुलितशब्दो बाधितः । कोरकमुख्यार्थः सन्नभिनवोद्भेदसादृश्यात् स्तनयुग्मं लक्षयन् स्पृहणीयत्वादिप्रयोजनसहस्त्रं व्यनक्ति । किं विशिष्टं जघनमंसबन्धोद्धुरम् । स्कन्धबन्धनार्थमुद्यतम् । जघनेन [अं]स { म } बन्धोद्धुरत्वं नास्ति । जघनस्याचेतनत्वाद् । बन्धकरणे समर्थो यो हि उद्धुरो भवति स किञ्चिदुच्चैर्भवतीति मु(उ)द्धुरशब्दो बाधितमुख्यार्थः सन(न्) { स तथैव } सादृश्यात् अ(अं)स { म } बन्धत्र(त्वं) जघनत्वे लक्षयन् स्पृहणीयत्वादिप्रयोजनसहस्त्रं व्यनक्ति ।

अगूढं यथा

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥१०॥

अत्रोपदिशतीति ॥

---

**इन्दुवदने**ति । इन्दुर्वदनं यस्याः सा इत्युपचारो यदा तदा इन्दुशब्दो बाधितमुख्यार्थः सन् नवोद्भेदसाम्यात् जगजी(ज्जी)विता(त)[त्वे]न च तापोयशोत्याहि (तापोपशान्त्यादि ?) प्रयोजनं व्यनक्ति । उ { दु } द्गम इति उद्गमो हि अङ्कुरादेर्धर्मः । स च तरुणिमनि अनुपपत्तेः यो हि उद्गच्छति स किञ्चिदुद्भिन्नो भवति इत्युद्गतशब्दो बाधितोदयमुख्यार्थः सन् अभिनवोद्भेदसादृश्यात् तारुण्यं लक्षयत(न्) हृद्यत्वादिप्रयोजनं व्यनक्ति । मोदते । मोदनं हि चेतनधर्मः । स चोद्गमो(मे)ऽनुपपन्नः । यो हि मोदते स सप्रसरो भवति इति मोदनशब्दो बाधितहर्षरूपमुख्यार्थः सा(स)न् प्रसरणसादृश्यात् वल्गनं लक्षयन् स्पृहणीयत्वादि प्रयोजनं व्यनक्ति । अथ काव्ये क्रमेण लक्ष्यामि(णि) यथा मुखं विकसितमित्यत्र प्रकाशो लक्ष्यः । वक्रिमा इत्यत्र स्वाधीनत्व(त्वं) लक्ष्यम् । समुच्छलित्(त)विभ्रमा इत्यत्र बहुलविषयत्वं लक्ष्यम् । अपास्तसंस्था इत्यत्र ते[षु] स्थानेषु सञ्चारित्वं लक्ष्यम् । मुकुलितस्तनमित्यत्रोद्भिन्नत्वे(त्वं) लक्ष्यम् । अ(अं) स { म } बन्धोद्धुरमित्यत्र शक्तिमात्रयोग्यता । उद्गम इत्यत्रोद्‌जृम्भणं प्रकटता लक्ष्यं(क्ष्ये) । अथ एतेषामवि(ति)शयाः पृथक् २ व्यङ्ग्याः । एतानि क्रमेण लक्ष्याणि । एतेषां य इति(अति)शयास्ते { षां } व्यङ्ग्या इति गूढव्यङ्ग्यम् ।

अगूढं व्यङ्ग्यमुदाहरति । **श्रीपरिचयाद्**इति । लक्ष्या(क्ष्म्या) अतिशयितसम्बन्धात् प्रथमसम्बन्धात् मदोऽहङ्कार उत्साहो वा ललितानि सञ्चरणदर्शनवचनहसितगतभङ्गिविशेषात्(न्) मूर्खा अपि चतुरचा(च)रित्राणां ज्ञातारः चतुरव्यापारान् विदन्ति । कर्मणि षष्ठी । अर्थान्तरन्यासेन साधयति **उपदिशतीति** । कामिनीनां तारुण्यमद एव विलासान् शिक्षयति । एवं श्रीपरिचयो-

(सू० २०) तदेषा कथिता त्रिधा ॥१३॥

अव्यङ्ग्या गूढव्यङ्ग्या अगूढव्यङ्ग्या च ॥

(सू० २१) तद्भूर्लाक्षणिकः ।

शब्द इति संबध्यते । तद्भूस्तदाश्रयः ॥

(सू० २२) तत्र व्यापारो व्यञ्जनात्मकः ।

कुत इत्याह ।

(सू० २३) यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥१४॥

---

ऽपि चातुर्य्यं शिक्षयतीत्यर्थः । अत्रोपदिशतीति अगूढव्यङ्ग्यमिति शेषः । वाचा कर्मणि प्रवर्त्तना उपदेशः । स चासम्भवत्प्रकारं लक्षयति । प्रकाशेऽन्यनिरपेक्षत्वं प्रयोजनम् । अभिधेयवत् सर्वजनसंवेद्यमित्यगूढ(ढः)स्पष्टोऽर्थो—यथा, उपदेशनं हि चेतनधर्मः । स च यो(यौ)वनमदेऽनुपपन्न(न्नः) । यो हि यस्योपदिशति स तस्य ज्ञापको भवति इति ज्ञापकसादृश्यात् यो(यौ)वनमदं लक्षयता उपदेशशब्देन शिक्षादानं ध्वन्यते । उपदिशतीत्यत्र उपदेशशब्देनैव शिक्षादानप्रकटनात् शिक्षारूपव्यङ्ग्यस्य वाच्यायमानत्वेनाचमत्कारित्वादगूढेत्यर्थः[53] । तदेषेति । एषा लक्षणा लक्षणामूलत्वाल्लाक्षणिकस्येति पूर्वोक्तप्रकारेण लक्षणा(णां) निरूप्य तदाश्रयं लाक्षणिकं शब्दमाह—तद्भूरिति । तस्य(स्या) लक्षणाया भूस्तदाश्रयः ।

ननु लक्षणाव्यापारात् अन्यो(न्यो) यः प्रयोजनं(न)व्यञ्जनात्माव्यापारः सोऽपि लक्षणव्यापार एवास्तु । कथमुक्तं प्रयोजनं व्यञ्जनव्यापारगम्यमेवेत्याह-तत्रेति[54] । अथवा व्यञ्जकशब्दे निरूपयितव्ये तदुपाधौ व्यञ्जनायां वादिप्रतिपत्तिनिरासायाह—तत्रेति । अथवा वाचकलाक्षणिकशब्दौ लक्षयित्वा व्यञ्जनास्वरूपमाह-तत्रेति । तत्र पावनत्वादौ प्रयोजन(ने) विषये इत्यर्थः । तत्र प्रयोजनादौ व्यङ्ग्ये व्यञ्जनाव्यापारो, व्यङ्ग्यज्ञाने व्यापारो व्यञ्जनात्मकः, शब्दव्यापार इत्यर्थः । उत्तरसूत्रं हेतुत्वेनावतारयति कुत इति । यस्य प्रयोजनस्य ज्ञानार्थं लक्षणा[ऽऽ]-श्रीयते । अत्रेति । तस्मिन्[55] प्रयोजने शब्दादेवैकस्था(स्मा)द् ज्ञेये । अन्यथा लक्षणाया मूलहानिरेव स्यात् । यस्येति । यथा गङ्गातटे घोष इदं परित्या(त्य)ज्य गङ्गायां घोष इति वक्त्रा वाक्यं किमर्थमुच्चार्य्यते, तत् किञ्चित् प्रयोजनं ज्ञापयितुम् ।

फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतीतिरपि तु तस्मादेव शब्दात् ।

न चात्र व्यञ्जनादृतेऽन्यो व्यापारः ॥

तथाहि

(सू० २४) अभिधा समयाभावात् ।

गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः संकेतिताः ।

(सू० २५) हेत्वभावान्न लक्षणा ॥१५॥

मुख्यार्थबाधादित्रयं हेतुः ॥

तथा च

(सू० २६) लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥१६॥

---

तत् प्रयोजनं किं, यथा गङ्गायां घोष इत्युच्यमाने घोषे यथा पावित्र्यबुद्धिर्जायते तथा गङ्गातटे घोष इत्युच्यमाने न जायते इति प्रयोजनं प्रतिपादयितुम् । गङ्गाशब्द इति लाक्षणिकशब्द इति । लाक्षणिकशब्दस्थले प्रयोजनज्ञानार्थं प्रतिपत्तिः प्रयोजनज्ञानम् । तद्व्यञ्जना एवाऽन्यस्य व्यापारस्य तत्राभावात् । एतदेवाह—**फल** इति । अत्र लाक्षणिकशब्दस्थले फले प्रयोजने शब्दैकगम्ये सति व्यञ्जनात् व्यञ्जनाव्यापारात् नाऽन्या क्रिया व्यापार इत्यर्थः । व्यञ्जनाव्यापारं (रः)। शक्तिलक्षणे तत्र न स्तस्तथाह—**तथा ही**ति ।अथवा अन्वयव्यतिरेकाभ्यां तत्र प्रयोजने शब्दस्य शक्तिरवधार्य्यते सा च व्यञ्जनयैवेत्याह—**न चात्रे**ति । कुतो नाऽन्यो व्यापार इत्याह—**तथा ही**ति । { योज } **नाभिधे**ति । गङ्गाशब्दः पावनत्वादिप्रयोजनार्थे न वर्तते किन्तु प्रवहज्जलराशिवाचकः । प्रयोजनार्थवाचकः कुतो नास्तीत्यत आह **समयाभावादि**ति । इदं पदमस्यार्थस्याभिधायकमिति सङ्केत(तः) { न } समयः । शब्दार्थयोर्ज्ञाप्यज्ञापकत्वाद्यः । स्वरूपसम्बन्धविशे-

**यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वत् यदि तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत् । न च तटं मुख्योऽर्थः । नाप्यत्र बाधः । न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्ध । नापि प्रयोजने लक्ष्ये किंचित् प्रयोजनम् । नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः ॥**

**(सू०२७) एवमप्यनवस्था स्याद् या मूलक्षयकारिणी ।**

---

षाभिधा । गङ्गाशब्दस्य पावित्र्यार्थे समयाभावान्नाभिधाव्यापारो; गङ्गाशब्दस्य पावित्र्यार्थेऽभिधाव्यापारो नास्तीत्यर्थः ।

ननु तर्हि तत्र पावनत्वादौ लक्षणाव्यापारो भविष्यतीत्यत आह—**न लक्षणेति** । ननु मुख्यार्थबाधादित्रयहेतुः कथं नास्तीत्यत आह—**लक्ष्यमिति** । शक्यार्थबाधो वर्तत इतिकृत्वा तट(टे)लक्षणाङ्गीक्रियते तद्वत् तट(टं) यदि शक्यं स्यात् तटस्यापि चेद् बाधः स्यात् तदा प्रयोजने लक्षणाङ्गीकर्तव्या । तथा च तदलक्ष्यम् । न मुख्यमपि । शक्यमपि तटं न भवति । बाधो नास्ति । तटस्य घोषाधारत्वं(त्वे)न बाधो नास्ति । { तटस्य घोषाधारत्वेन बाधो नास्ति । } योग(गः) { कः } फलेन वो (नो) । लक्षणास्थले प्रयोजनं वर्तते । पावनत्वादेः(दिः) । प्रयोजनान्तरमन्येऽ(न्य)त्रास्तीति न लक्ष्यं तत् । अत्र प्रयोजनं(ने) पावित्र्यादौ प्रयोजनान्तरं नास्ति । यत्र च लक्षणा भवति तत्र प्रयोजनं तिष्ठति । प्रयोजनेन सह सम्बन्धोऽपि तिष्ठति । लक्ष्यं न मुख्यम् । नाऽप्यत्र बाधा(ध) इत्यनेन मुख्यार्थबाधो नास्तीत्युक्तम् । अथ मुख्यार्थयोगोऽपि नास्तीत्याह । **योगः फलेन** । ततो प्रयोजनेन तटस्य सम्बन्धोऽपि नास्ति । यथा तटस्य प्रवाहसम्बन्धस्तिष्ठति तद्वत् तटस्य पावित्र्यादिसम्बन्धोऽपि नास्ति । अनेन मुख्यार्थसम्बन्धोऽपि नास्तीत्युक्तम् । **न प्रयोजनमिति** । प्रयोजने बोधनीये न प्रयोजनान्तरमस्ति । लक्षणादिस्थलतटे बोधनीये प्रयोजनं तिष्ठति । तद्वत् प्रयोजने बोधनीयेऽन्यत् प्रयोजनान्तरं नास्ति । एतावतोक्तप्रयोजने प्रयोजनं नास्तीति । **न वे(चे)** ति । लक्षणायां गङ्गादिपदं स्खलद्गति भवति । तत्र व्यङ्ग्येन प्रयो-

एवमपि प्रयोजनं चेल्लक्ष्यते तत् प्रयोजनान्तरेण तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृत् अनवस्था भवेत् ॥

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते । 'गङ्गायास्तटे घोषः' इत्यतोऽधिकस्यार्थस्य प्रतीतिश्च प्रयोजनमिति विशिष्टे लक्षणा तत्किं व्यञ्जनयेत्याह ।

(सू० २८) प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥१७॥

कुत इत्याह

(सू० २९) ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।
प्रत्यक्षादेर्नीलादिर्विषयः । फलं तु प्रकटता संविित्तिर्वा ॥

(सू० ३०) विशिष्टे लक्षणा नैवं
व्याख्यातम् ॥

(सू० ३१) विशेषाः स्युस्तु लक्षिते ॥१८॥

---

जनेन शब्दस्य स्खलद्गतित्वम् । स्खलन्ती बाधकेन विधुरीक्रियमाणा गतिरेव बोधनशक्तिर्यस्य स(सः) । स्खलद्गतिर्न । तथा प्रयोजनप्रतिपत्त्यर्थमेव तस्य तथा प्रवर्ति[त]त्वात् लक्षणायां हि गङ्गादिपदं स्खलद्गतिर्भवति । यथा गङ्गापदं प्रवाहं बोधयित्वा तटं बोधयति, तद्वत् तटस्यानुपपत्तिं बोधयित्वा गङ्गाशब्दः प्रयोजनं बोधयति । तथाऽत्र नेत्यर्थः । ननु प्रयोजने लक्ष्ये प्रयोजनान्तरं तिष्ठत्येव । तथाच पावित्र्ये लक्ष्ये प्रयोजनान्तरं लक्ष्यं भविष्यतीत्यत आह—**एवमिति** । तत्राऽपि प्रयोजनान्तरमस्तीत्यनवस्था स्यात् । ननु भवत्वनवस्थे(स्थे)त्यत आह—**मूलक्षयकारिणी**ति । तथा च कस्यापि प्रयोजनस्य ज्ञानं न स्यादित्यर्थः । ननु तटत्वविशिष्टतटे यथालक्षणा तथा पावनत्वविशिष्टे तटेऽपि लक्षणा भवत्वत आह—**गङ्गाया** इति । यथा गङ्गायास्तटे घोष इत्यस्माद् वाक्यात् अधिका प्रतिपत्तिरत्र(तः) गङ्गायां घोष इत्यत्र शीतत्वपावनत्वादिबाधस्तथा च शीतत्वपावनत्वादिविशिष्टतटे लक्षणास्तु । किं व्यञ्जनप्रे(ये)त्यत आह—**प्रयोजनेन सहितमिति** । प्रयोजनेन शैत्यपावनत्वादिना विशिष्टे तटे लक्षणा नास्ति । किन्तु तटमात्रे एव लक्षणा । कुतो न विशिष्टे तटे लक्षणेत्यत आह—**ज्ञान**-

स्येति । अथवा प्रकारान्तरेण योजना, यथा—प्रयोजनेन सहितं लक्षणीयं न व्यज्यते इत्येतस्य दृष्टं तत्त्वेन दर्शयन्नाह **ज्ञानस्येति** । [56]यथा ज्ञानस्य विषयः सम्बन्धी । यस्य पदार्थस्य ज्ञानं स विषयः कथ्यते । ज्ञानस्य फलमन्यत् ज्ञान(त)ताख्यमुक्तम् । यथा प्रत्यक्षादेर्ज्ञानस्य नीलरूपादिर्विषयः, फलं ज्ञाततासंवित्तिर्व्यवहार इति वा । यथा भाट्टमते प्रकटता फलं प्राभाकरमते संवित्तिरिति, तद्वदत्रापि गङ्गायां घोष इति शब्दस्य विषयस्तटं फलं च शैत्यपावनत्वादिज्ञानम् । तथा च विषयफलयोर्भेदाद् विशिष्टे लक्षणा नास्ति किन्तु तटमात्रे । तेन लक्षणाप्रयोजनं व्यञ्जनाव्यापारगम्यम् । अतः परं व्यञ्जनाव्यापारमुपसंहरति **विशेषा** इति । लक्षिते लक्षणीये तटादौ सति(न्ति) ये विशेषाः पावनत्वादयस्ते व्यापारान्तरेण व्यञ्जनाव्यापारेण गम्याः स्युः । ते च व्यापारा अभिधादयश्चत्वारस्तथाऽपि पावनत्वादयो(या) धर्मा व्यञ्जनाये(**नयै**)व गम्या इत्यर्थः । **तत्त्वे(च्चे)**ति । तद् व्यापारान्तरं व्यञ्जनाध्वननादिशब्दवाच्यम् । व्यञ्जनाव्यापारस्य व्यञ्जनाध्वनना (ने) { इ } ति पर्यायाः । एवं मुखं विकशि(सि)तस्मितमित्यादिस्थले या व्यञ्जना सा लक्षणामूलिका । गङ्गायां घोष इत्यादिस्थले प्रयोजनप्रतिपत्तौ या व्यञ्जना साऽपि लक्षणामूला । अयमर्थः **टीकान्तरे**[56A] ।

इदानीमर्थस्य लक्षणामूलं व्यञ्जकत्वमुक्त्वा अभिधामूलं व्यञ्जकत्वमाह—**अनेकार्थस्य शब्दस्य** संयोगाद्यैर्वाचकत्वेऽभिधायां नियन्त्रितायामवाच्यार्थज्ञानजनका(को)व्यापारा(रो) व्यञ्जना । यथा भोजनप्रकरणेन सैन्धव { त्वात् } शब्दस्याऽभिधा लवणे नियन्त्रिता । नियमः कृतः । तद्वत् संयोगादिभिरभिधायां नियन्त्रितायामवाच्यार्थज्ञानजनको व्यापारो व्यञ्जना । अयमर्थः । [57]अनेकार्थस्य अनेकेऽर्था वाच्यत्वेन यस्य स तस्य शब्दस्य । संयोगाद्यैर्वाचकत्वे वाचिकायां शक्तौ नियमिते सति । अवाच्यस्य व्यङ्ग्यस्यार्थस्य ज्ञानकृद् यो व्यापारः । सा शब्दगता व्यञ्जना । संयोगादीनां वाचकत्वे सम्मतिमाह—**संयोग** इत्यादि । संयोगः सम्यग् योगः । प्रसिद्धसम्बन्धः । विप्रयोगः प्रसिद्धयोगविरहो । विभागः ।

तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम् ॥

एवं लक्षणामूलं व्यञ्जकत्वमुक्तम् ॥

अभिधामूलं त्वाह ।

(सू० ३२) अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥१९॥

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ।"

इत्युक्तदिशा

सशङ्खचक्रो हरिः अशङ्खचक्रो हरिरित्युच्यते । रामलक्ष्मणाविति दाशरथौ ।

---

साहचर्य्यमेकस्मिन् कार्ये परस्परसापेक्षत्वम् । विरा(रो)धिता वध्यघातकत्वं सहानवस्थानं च । अर्थः फलमनन्यसाध्यम् । वक्तुः प्रतिपाद्यस्य च बुद्धिसान्निध्यं र[प्रकणम]। लिङ्गमसाधारणो धर्मः । शब्दस्याव्यभिचरितस्यसन्निधिः सामानाधिकरण्यम् । [साम]र्थ्यं तत्करणनियमः । औचिती योग्यता । देशकालौ तद्विशेषौ । व्यक्ति(क्तिः)स्त्रीत्वपुंस्त्वादि(दिः) । स्वरा उदात्तादयः । अर्थविशेषस्यावधारणे हेतव इत्यर्थः । संयोगादिरित्यस्य विवरणं यथा एते संयोगादयोऽभिधानियन्त्रणेऽभिधानियमकरणे हेतव इति । तद्दर्शयति **सशङ्खचक्रे(क्र)** इत्यादिना । [58]**टीकान्तरे**ऽर्थो यथाऽवश्यं सर्वप्रयत्नेन लाक्षणिकमात्रस्य व्यञ्जकत्वमिति शङ्कां निरस्यति **एवमिति** । अवाच्योऽभिधया बोधयितुमशक्यः । लक्षणावारणायाऽनेकार्थस्य संयोगाद्यैर्वाचकत्वे नियन्त्रित इति । अनेकार्थस्याऽनेकत्र गृहीतशक्तिकस्य । वाचकत्वेऽभिधायाम् । संयोगाद्यैस्तात्पर्य्यग्राहकैर्नियन्त्रिते । शेषप्रसरणं निरुध्य यत्र कुत्रचित् प्राप्तविषयानुभवक्षमत्वे । तत्र मुख्यार्थबाधविरहात् न

**रामार्जुनगतिस्तयोरिति भार्गवकार्तवीर्ययोः । स्थाणुं भज भवच्छिदे इति हरे । सर्वं जानाति देव इति युष्मदर्थे ।**

---

लक्षणावसरः । अयमर्थः । एकस्य वर्णसमूहात्मनः पदस्याऽनेकत्राऽनेकैव शक्तिः। शक्यतावच्छेदकभेदेन तद्भेदात् । ततश्च यस्मिन्नर्थे तात्पर्य्यग्राहकं प्रकरणादिकमवतरति तद्बुद्ध्या तद्गोचरः । शक्त्या तदर्थोपस्थापनमन्यस्या(स्य)श्च(च) निरोधनम् । तथा निरुद्धया बोधयितुमशक्यस्यार्थस्य बोधने प्रभवन्ती वृत्तिर्व्यञ्जना नाम । ननु अभिधानिरोधे कथं तद्विषयार्थप्रतीतिरिति चेदनुभवं पृच्छ । { नाऽस्मात् } अनुभवस्य वारयितुमशक्यत्वादिति कृतं विस्तरेण । अथ संयोगादीनाममिधाने नियन्त्रणे यथाक्रमेण हेतुत्वं दर्शयति । **सशङ्खचक्र** इति । अथ स(श)ङ्खादिसंयोगेन विष्णुर्निर्धार्यते सूर्यस्याऽप्युपस्थितिर्व्यञ्जनया । एवं सप्ताश्वसंयोगात् सूर्ये हरिशब्दस्याभिधा नियन्त्रिता । विष्णोरुपस्थितिर्व्यञ्जनया । एवं विप्रयोगोऽप्यूह्यः । विप्रयोगस्योदाहरणं **अशङ्खचक्रो हरिरिति** । प्रसक्तिपूर्वकत्वात् प्रतिषेधस्य विष्णोरन्यत्र प्रसक्त्यभावाद् विष्णुरेवोच्यते । हरिशब्दस्यानेकार्थत्वेऽपि शङ्खचक्रयोः संयोगादसंयोगाच्च हरिशब्देनाच्युत एवोच्यत इत्यर्थः । साहचर्य्यस्योदाहरणम् । रामशब्दः परशुरामेऽप्यस्ति दाशरथावप्यस्ति । पर(रं) लक्ष(क्ष्म)णसाहचर्य्यात् रामो दाशरथिरवधार्य्यतां(ते) । वध्यघातकविरोधितायां रामो भार्गवोऽर्जुनः कार्त्तवीर्यः । अयमर्थः । विरोधितायां वाच्यायां रामार्जुनशब्दाभ्यां परशुरामसहस्रार्जुनयोरुपस्थितिरभिधया । रामपाण्डवयोरुपस्थितयोर्गतिः, शरणं, तयोः कयोश्चित् प्रकृतयो(योः) कलिप्रवृत्तौ राज्ञोः । रामार्जुनयोः यथा गतिर्विरोधेन, यथा तौ मृतौ, तद्वद् राज्ञोः कलिरित्यर्थः । **स्थाणुमिति** । अत्र स्थाणुशब्दस्यानेकार्थत्वेऽपि परं भवच्छेदरूपादर्थात् प्रयोजनात् शम्भुरेवोच्यते स्थाणुशब्देन । न तु शङ्कुः । अत्रार्थः । प्रयोजनं भवच्छेदरूपम् । तेन स्थाणुशब्दो महादेवेऽभिधया नियन्त्रितः। स्तम्भादौ व्यञ्जनयोः(या) । **देव इति** शब्देनोपक्रान्तस्त्वं जानासीत्यर्थः । राजानं सम्बोध्य दूतकथाप्रवृत्तौ । { राजपदं सम्बोध्य राजपदं } तदाह—**युष्मदर्थ** इति । अत्र युष्मदर्थेनाभिधा नियन्त्रिता । राजत्वस्वर्गित्वयोः शक्यतावच्छेदकत्वेनाऽनेकार्थत्वात् ।

**कुपितो मकरध्वज इति कामे । देवस्य पुराराते‌रिति शंभौ । मधुना मत्तः कोकिल इति वसन्ते । पातु वो दयितामुखमिति सांमुख्ये । भात्यत्र परमेश्वर इति राजधानीरूपात् देशाद्राजनि । चित्रभानुर्विभातीति दिने रवौ रात्रौ वह्नौ ।**

---

तदेव शब्दस्य तदुक्तम्—राजा भट्टारको देव इति । **मकरध्वज** इति । मकराकारो ध्वजो मकर एव वा ध्वजः । मकरध्वजशब्दः । कामेऽभिधा कोपरूपलिङ्गेन नियन्त्रिता । समुद्रे तु व्यञ्जनया । कोपस्याचेतनत्वेन समुद्रे बाधात् । **देवस्य पुराराते‌रिति** । पुरा[ऽ]रातिरूपशब्दस्य सान्निध्याद् देवशब्दस्य शम्भावभिधा नियन्त्रिता । राज्ञः प्रतीतिस्तु व्यञ्जनयेत्यर्थः । **मधुनी (ने)** ति । वसन्त एव कोकिलस्य मद इति । कोकिला(ल)मदे वसन्तस्यैव सामर्थ्यम् । न त्तु(तु) मद्यादेरिति । मधुशब्दस्याभिधा वसन्ते सामर्थ्येन नियन्त्रिता । मद्यं तु व्यञ्जनयोपतिष्ठते । सा(सां)मुख्यमिति । दयितामुखमित्यत्र मुखशब्देन सा(सां)मुख्यमाभिमुख्यं औचित्येन तत्रैवाभिधा नियन्त्रिता । मुखं तु व्यञ्जनयोच्यते इत्यर्थः। अयमर्थः । मुखशब्देन सा(सां)मुख्यम् । न तु वदनं, कामत्रार्ण(ण)योग्यत्वात् । यद्यपि चुम्बनादिना वदनमपि कामत्राय(ण)कं तथापि सान्मु(म्मु)ख्यमेतद्योग्यम् । असति तस्मिन्न(न्)[तत्]सर्व(र्वं) वैरस्यावे(ये)ति । तस्यैवौचित्यं पातु दयितामुखमित्यत्र । पातं(नं)हि रक्षण { मा } मुच्यते[59] । तथा(च्चा)ऽनेकप्रकारं तद्वा (सद्) दयितामुखमपेक्ष्य औचित्यात् सा(सां)मुखं(ख्यं) नियम्यते । अत्रेति । राजधान्याम् । परमेश्वरो राजा एव राजधानीरूपदेशात् राजाऽभिधया, परमेश्वरो व्यञ्जनयेति भावः । कालस्य नियन्त्रणाद्रात्रौ चित्रभानुरग्नौ, दिने यदि तदा सूर्योऽभिधया-ऽत्यरत्तु(अपरस्तु?) व्यञ्जनया । अयमर्थः । चित्रभानुशब्दस्यानेकार्थत्वेऽपि दिने रवौ प्रयोगात्, सूर्यवह्न्योर्निश्चय(यः) । व्यक्तेः पुंनपुंसकादेरभिधानियन्त्रणं, **मित्रमिति** । मित्रशब्दस्याऽनेकार्थत्वेऽपि[59A] सुहृद्वाचकत्वे नपुंसकलिङ्गं, सूर्यवाचकत्वे पुल्लिङ्ग[म्] । [स्वरस्योदात्तादेः इन्द्रशत्रुरिति[59B] ।] यत्र (अत्र) स्वरो वेद एव विशेषप्रतीतिं कुरुते, न काव्ये । यथा इन्द्रशत्रुरित्यादौ । वृत्रेण इन्द्रश्चेति[60] । मन्त्रकुहित सूत्राद्योदात्ते........दात्तः प्रयुक्त इति इन्द्र एव त..........

मित्रं भातीति सुहृदि। मित्रो भातीति रवौ। इन्द्रशत्रुरित्यादौ वेदे एव न काव्ये स्वरो विशेषप्रतीतिकृत्।

आदिग्रहणात्

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं।

एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं ॥११॥

---

एव। समासस्येति। सामान्यसूत्रेण आद्योदात्तत्वं इन्द्रः शत्रुर्यस्येति बहुव्रीहौ प्रकृत्या(त्याः) पूर्वपदमिति। विशेषसूत्रं पूर्वपदप्रश्लेषादयंत (च?) इन्द्रशब्दस्यान्त्योदात्तत्वम्। तथाऽयं मन्त्रो हीन(नो)स्वरो(र)[तो]वर्णनो(तो) वा, मिथ्याप्रयुक्तो,न तमर्थमाह-स वाग्वज्रो यजमानं निहन्ति यथेन्द्रशत्रू(त्रुः) स्वरतो[ऽ]पराधा(धा)त(त)। आदिशब्दाच्चेष्टाभिनयादयोऽपि गृह्यन्ते। **टीकान्तरे**[61] यथा { इन्द्रे } इन्द्रः शक्रः शातयिता यस्य। इन्द्रोऽस्य शातयितेति वा षष्ठ समासे। समासा(स)[स्या]न्तो(न्त्यो)दात्त[त्वे] सूचिते। इन्द्रस्य शातयितेत्यर्थः। बहुव्रीहौ पूर्वपदोदात्त[त्व]सूचिते। इन्द्रः शातयिता यस्येति प्रतीयते। काव्येष्वमीषां नानार्थविशेषनियामकता। तदा ह्यनुक्रमस्वरेणार्थविशेषावगतौ श्लेषभङ्गप्रसङ्गादित्याह-**वेद एव**। काव्येष्विति। अतएव श्लेष भङ्गप्रस्तावे वक्ष्यति। काव्यमार्गा(र्गे) स्वरो न गण्यत इति। मुनेः पाठगुणोपदेशेन रसविशेषनियामकं तु स्यादेव। तदुक्तम्—वीरबीभत्सरौद्रेषु स्वरितोदात्तमुत्पादयेदित्यादि काको(क्वो)रपि व्यञ्जकत्वं वक्ष्यति।

**आदिशब्देन संगृहीतमर्थमाह—एद्दहमित्त**त्यादि[61A]। एतावन्मात्रस्तनी। एद्दहमेत्तेहिं। अच्छिवत्तेहिं। एतावन्मात्राभ्यामक्षिपत्राभ्यामुपलक्षितेत्यर्थः। एद्दहमेत्तावत्था। एतावन्मात्रावस्था। एद्दहमेत्तेहिं दियएहिम्। एतावन्मात्रैर्दिवसैः। अ[णु]महदाद्यते[62](ने)चा(का)र्थाभिधायकत्वेऽपि एतावन्मात्रशब्दस्याऽत्र प्रसारिततर्जनी[क] शिरश्चालनेनाभिनयेन दुर्वा(र्ब)[ला]वस्थात्वं गम्यते। बद्धमुष्टिभुज[द्वय]वलयीकरणेन स्थौल्यं गम्यते। मुकुलीकृताङ्गुलीकरद्वयस्य तिर्यक्चालनेन दिवसानां कतिपयत्वम्। प्रसारिताङ्गुलीकरयुगचालनेन बहुत्वं गम्यते। अतोऽभिनयोऽप्यनेकार्थस्य नियामक इति। एतावच्छब्देन परिमाणविशेषो अभिधया गम्यते। पद्म-

[एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥]

इत्यादावभिनयादयः ।

इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत् क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा, नियमनात्तस्याः । न च लक्षणा मुख्यार्थबाधाद्यभावात् । अपि त्वञ्जनं व्यञ्जनमेव व्यापारः । यथा

भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥१२॥

(सू० ३३) तद्युक्तः व्यञ्जकः शब्दः ।

तद्युक्तो व्यञ्जनयुक्तः ॥

(सू० ३४) यत्सोऽर्थान्तरयुक् तथा ।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥२०॥

तथेति व्यञ्जकः ॥

इति काव्यप्रकाशे शब्दार्थस्वरूपनिर्णयो नाम द्वितीय उल्लासः ॥२॥

---

कोशाकारत्वं तु व्यञ्जनयाऽभिधीयत इति । विशेषो ज्ञेयः । एतावन्मात्रेत्यत्र परिमाणे दघ्न[चू]प्रत्ययः। अत्र हस्तानुकारविशेषेण स्तनादीनां पद्मकोशाद्याकारत्वं प्रतीयते । सर्वनाम्नो बुद्धिस्थतावच्छेदकप्रकारेण शक्तौ नानार्थता । आदिपदात् इतः स दैत्य(त्यः)प्राप्तश्रीर्नेत एवार्हति क्षयमित्यत्रात्मनिर्देशौ(शो)हृदयनिह(हि)तस्ते(त्वे)न प्रतीयते । नाऽयमभिनयोऽनुकरणाभावात् । एवमञ्जलिना सूर्यमुपतिष्ठते।पयः पिबति, लाजान् जुहोतीत्यादौ अञ्जलेः पुटीभावेनोद्‌र्ध्वशिखत्वं, अङ्गुलिनिबिडसंयोगेनोदूर्ध्वाग्राधौ मूलत्वं ऊदूर्ध्वमूलोऽधौ(धो)ऽग्रत्वमिति सन्निवेशविशेषः । त्रयोऽग्नयस्त्रया व(वे)दा इत्यत्र संख्याविशेषा(षे)नाऽत्र त्रयीपरत्वमिति कृतं विस्तरेण । प्रकृतं प्रस्तूयते। इत्थमिति इत्थं पूर्वोक्तप्रकारेण संयोगादिभिरेकत्र नियमितायामभिधाया(यां) याऽर्थान्तरे प्रतीतिः सा अभिधालक्षणादिव्यापारान्तरविषयतामपहाय यो(व्यं)जनाव्यापारादेव भवतीत्यर्थः । यथा संयोगादिविभावभिधा (संयोगाद्याविर्भावेनाभिधा) नियन्त्रिताऽन्यत्र निवारिता इत्यर्थः । अपरार्थे तर्हि लक्षणा

भवतु, किमर्थं व्यञ्जनेत्यत आह—**न लक्षणेति**। मुख्यार्थबाधाभावादित्यर्थः। ततोऽभिधा नियन्त्रितार्थप्रतीतिर्व्यञ्जनयैवेति भावः। शब्दगतव्यञ्जक[त्व]मुदाहरति **यथेति**। राजा कश्चिद्[०३] वर्ण्यते। यस्य हस्तः सततं दानोदकसेकसुन्दरोऽभूत्। कीदृशस्य भद्रात्मनः। कुशलात्मनः। अनाक्रमणीयमूर्त्तेः। विस्तीर्णे वंशे कुले उन्नतिरभ्युदयो यस्य। कृतशरसङ्ग्रहस्याऽनुपद्रुता गतिर्यस्य। वैरिवारणस्य। प्रतिमुखो वाच्योऽर्थः। इदानीं व्यङ्ग्योऽर्थः कथ्यते। यस्य परं बाणस्य प्रकृष्टहस्तिना हस्तः शुण्डो मदोदकसुभगोऽभूदित्यन्वयः। किंविशिष्टस्य **भद्रात्मनो** भद्रजातेः। पुनः किं अनाक्रमणीयस्य। पुनः किं विशाल(ला)वंशस्य उन्नति(तिः) यस्मिन्न (न्) स। तस्य पुनः किम्। कृतभ्रमरं(र)सङ्ग्रहस्याऽनुपप्लुतगतेः मनोहरगतेः, एवंविधस्य हस्तिनः इति हस्तिवर्णनमपि। राजवर्णनप्रकरणाद् राजवर्णनमभिधया नियन्त्रितं गजवर्णनप्रतीतिर्व्यञ्जनया भवतीत्यर्थः स्पष्टः। अत्राभिधया प्रकृतराजान्वयः। रा(ग)जान्वयस्तु तात्पर्य्यविषयोऽपि तद्ग्राहकप्रमाणाद्यभावाद् व्यङ्ग्य एव। एतन्मूलो(ल)को नृपतिगजयोरुपमेयो[पमानयो]रुपमाऽलङ्कारोऽपि व्यङ्ग्यः अत्राऽभिधामूलव्यञ्जनया। इत्यभिधान्तरविषयार्थान्तरस्यैव व्यञ्जनम्। संसर्गभूतस्य तस्य स्वरूपसतो नियामकत्वात्। उक्तव्यञ्जनाद्वारा व्यञ्जकशब्दं लक्षयति। **तद्युक्त** इति व्यञ्जनायुक्त इत्यर्थः। शब्दस्य व्यञ्जकत्व[म]र्थस्याऽपि कथं व्यञ्जकतेत्यत आह **यत्** स इति। यत् यस्मात् कारणात् शब्दोऽर्थान्तरयुक्तोऽर्थविशेषयुक्तस्तथा व्यञ्जको भवति अतस्तत्रार्थोऽपि सहकारित्वेन व्यञ्जको मतः। अन्यथा अर्थस्यासहकारित्वं(त्वे) यस्य कस्यचिदर्थस्य यं कञ्चिदर्थं प्रति व्यञ्जकत्वं स्यादित्यर्थः। **अर्थोऽपीति**। यथा शब्दो व्यञ्जकस्तथाऽर्थोऽपि व्यञ्जको, य(अ)त्र, व्यञ्जना { भि } सहकारितया इति कथ(ल्प)ना। यदि अर्थस्य सहकारिता तदाऽर्थस्य प्रमणान्तरता स्यात् अतः आह, **सहकारितयेत**। तेन प्रमाणं शब्दस्य, सहकारितया व्यञ्जयति (व्यनक्ति) न तु प्रमाणत्वेन। तथा च शब्द एव प्रमाणमर्थस्तु सहकारीत्यर्थ(र्थः)। सूत्रस्थं तथापदं व्याचष्टे। **तथा इति**। [व्यञ्जकः]। [इति]।

**इति श्रीकाव्यप्रकाशटीकायां सारदीपिकायां वाचनाचार्यकृतायां द्वितीय उल्लासः।**

# अथ तृतीयः उल्लासः ॥

(सू० ३५) अर्थाः प्रोक्ताः पुरा तेषाम्

अर्थाः वाच्यलक्ष्यव्यङ्ग्याः ।

तेषां वाचकलाक्षणिकव्यञ्जकानाम् ॥

(सू० ३६) अर्थव्यञ्जकतोच्यते ।

कीदृशीत्याह

(सू० ३७) वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ॥२१॥

प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥२२॥

बोद्धव्यः प्रतिपाद्यः । काकुर्ध्वनेर्विकारः । प्रस्तावः प्रकरणम् ।

अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मनः ।

क्रमेणोदाहरणानि ।

---

अथ शब्दस्वरूपनिरूपणानन्तरमर्थस्वरूपशिष्यजिज्ञासाविषये उत्तरकारिकामाह—**अर्थ** इति । पूर्वं शब्दगता व्यञ्जना निरूपिता, साम्प्रतमर्थगतव्यञ्जनानिरूपणावसर इत्यर्थः । पुरा वाच्यादयस्तदर्थाः स्युरित्यनेनाऽभिधाव्यापारविषयत्वमभिधेयत्वादिकमिति लक्ष्यपर्यालोचनेनैव लक्षणलाभान्न पृथगभिधानमित्यर्थः । अधुनाऽर्थानां व्यञ्जकतोच्यते । तथा च त्रयोऽप्यर्थाः पूर्वोक्ता वाच्यलक्ष्यव्यङ्ग्यरूपा व्यञ्जका भवन्तीति भावार्थः । अर्थानां कीदृशी व्यञ्जकता स्यादित्याह । **अर्थव्यञ्जकतोच्यत** इति । ननु साऽपि प्रागुक्ते(क्तै)व सर्वेषां प्रायशोऽर्थानामित्यनेनेत्याह—**कीदृशी** { स } ति । प्रतिभाजुषां विचारकाणामन्यार्थधीहेतुर्व्यङ्ग्यार्थधीहेतुरर्थो वाच्यादेरर्थस्य व्यापारो व्यक्तिरेव । सा व्यञ्जनैव । साभिधादिस्तस्य व्यापारस्यान्यार्थधीहेतुत्व(त्वे) हेतून् दर्शयति **वक्त्रि**त्यादिना । कचिद् वक्तुर्वैशिष्ट्यादर्थो व्यञ्जको भवति । तथा चाऽन्वयो यथा वक्तृवैशिष्ट्यात् वाक्यवैशिष्ट्यात् [बोद्ध]व्यवैशिष्ट्यात, काकुवैशिष्ट्यात्, वाच्यवैशिष्ट्यात,

अइपिहुलं जलकुंभं घेत्तूण समागदह्मि सहि तुरिअम् ।
समसेअसलिलणीसासणीसहा वीसमामि खणम् ॥१३॥
[अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम् ।
श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥]

अत्र चौर्यरतगोपनं गम्यते ।

ओण्णिद्दं दोब्बल्लं चिंता अलसत्तणं सणीससिअम् ।
मह मंदभाइणीए केरं सहि तुह वि अहह परिहवइ ॥१४॥
[औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते सखि त्वामपि अहह परिभवति ॥]

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ।

---

अन्यसन्निधिवैशिष्ट्यात्, देशवैशिष्ट्यात्, कालवैशिष्ट्यात् अर्थस्य प्रतिभाजुषां यो व्यापारो(र)इत्यर्थधीहेतुः, सा व्यक्तिरित्यर्थः । यथा चक्षू(क्षु)दूरस्थे देशे पर्वतज्ञानजनकं विषयवैशिष्ट्याद् दूरस्था(स्थ)पर्वतस्तेन गृह्यते परं घटो न गृह्यतेऽथ विषयवैशिष्ट्यात् तद्वदर्थोऽपि वक्त्रादिवैशिष्ट्यादर्थान्तरस्य व्यञ्जक { मि } [इ]त्यर्थः । वक्ता यः परप्रतिपत्तये वाक्यमुच्चारयति । कविस्तद्वैशिष्ट्यात् तत्प्रकर्षात् । बोद्धव्यः । स बोधोऽन्यथाऽर्थस्यैव तत्त्वात् । काकुर्ध्वनेर्विकारः । शोकभीत्यादिभिर्ध्वनिः । कवि (विः) प्रकृतादर्थान्तरे लौल्यं करोतीति, काकुस्तत्प्रकर्षात् । साकाङ्क्षाणां पदानां समूहो वाक्यम् । शब्देन मुख्यं लाक्षणिकं वाऽर्थमभिधाव्यापारमाश्रित्य । अन्यो वक्तृबोद्धव्यं(व्य)[भिन्नः] । ततो वाक्यवाच्यसहितोऽन्यसन्निधिरिति विग्रहः । प्रस्तावः प्रकरणम् । देशो विजनादिः । कालो वसन्तादिः । वैशिष्ट्यस्य सहकारित्वानपायात् । एवंकारेण व्यापारान्तरप्रमाणान्तरव्यवच्छेदः । सङ्केताद्यभावेन नाभिधादिः । अनुमानं त्वग्रे निरस्यति । एषां च सङ्करे यस्योद्भटता तन्मूलको व्यवहारः । **क्रमेणे**ति । सौत्रेणेत्यर्थः । वक्तुर्वैशिष्ट्याद् वाच्यस्य व्यञ्जकत्वमुदाहरति । **अइपिहुलमि**ति । काचित् कृतोपपतिसम्भोगा तच्चित्ता(ह्ना)पह्नवाय सखीं प्रत्याह,—सहि हे सखि, अइपिहुलं अतिपृथुलं, जलकुम्भं, घेत्तूण गृहीत्वा, तुरियं त्वरितं, समागदम्हि समागतास्मि । सम सेअणी सासणीं सहा ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥३५॥

अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काक्वा प्रकाश्यते । न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम् । प्रश्नमात्रेणापि काकोर्विश्रान्तेः ।

---

अतः श्रमखेदसलिलनिःश्वासनिस्सहा । खणं क्षणम् । वीससामि विश्राम्यामि । अत्र व्यङ्ग्यं किमित्याह—अत्र चौर्यरतेति । अत्र व्यभिचारिणी वदतीति वक्तृवैशिष्ट्यम् । अत्र पृथुलजलकुम्भवहनजन्योऽयं श्रमो मान्यथा शङ्किष्टा इति रतगोपनं वक्त्र्याः पुंश्चलीत्ववैशिष्ट्यं कुलवधूक्तावेवमप्रतीतेः इति वक्तृवैशिष्ट्यमत्र, चाऽन्यत्र प्रमाणान्तरेणाऽसतीत्वावगमे सति प्रतिभावतस्तटस्थस्य व्यङ्ग्यप्रतीतिर्भवतीति द्रष्टव्यम् । तच्च रतगोपनं व्यङ्ग्यमेव सङ्केताद्यविषयत्वेन वृत्त्यन्तराविषयत्वात् । सा च शब्दान्वयव्यतिरेकाननुविधानादर्थस्यैवं वृत्तिः एवमुत्तरत्राऽपि ज्ञेयम् । अथ बोद्धव्यवैशिष्ट्याद् व्यञ्जकत्वमुदाहरति उण्णिद्दमित्यादि । काचिन्नायिका स्वां दूतीं निजप्रियोपभुक्तां ज्ञात्वा कथयति । सहि हे सखि ! मह मम । मंदभाइणीए मन्दभाग्यायाः । केरं कृते । ओणिद्दं औन्निद्र्यम् । दोब्बलं दौर्बल्यम् । चिन्ता आलसत्तणं अलसत्वम् । सणीससियं सतिः(निः) श्वसितम् । तुहवि त्वामपि । अहेत्याश्चर्ये, खेदे वापि । परित्तवति परिभवति । तवापि, कर्मणि षष्ठी, परिभवस्य हिंसार्थत्वात् । अत्र यथा दयितविरहे औन्निद्र्यादिकं मां बाधते तथा त्वामपि परिभवति । अत्र या सम्बोद्धव्या सा दुःशीला दासीति, तद्वैशिष्ट्यात् तद्योगात् तद्विषयकरं(र)तं व्यङ्ग्यम् । इहापराधत्वलक्षणबोद्धव्याया दूत्या वैशिष्ट्यम् । अथ काकुवैशिष्ट्याद् व्यञ्जकत्वमुदाहरति, तथाभूतामिति । वेणीसंहरणनाटके[3] पद्यमिदम् । अत्र भीमः सन्धिं कुर्वता युधिष्ठिरेण प्रेषितं सहदेवं प्रति कथयति । नृपसदसि द्रुपदस्य तनयां द्रौपदीं तथाभूतां दुःशासनेन विवसनां स्त्रीधर्मिणी(र्णी), दुःशीलेनाकृष्टकेशां[4] दृष्ट्वा, वल्कलधारि[भि]रस्माभिर्वने वनचरैः सह बहुकालं वने

स्थितं दृष्ट्वा, तदनन्तरं विराटस्य गृहे अनुचितारम्भनिभृतं यथा स्यात् तथा, परगृहनिवासा(सं)मरणादपि, गुरुरित्यनुचितारम्भनिभृतमिति ज्ञेयम् । अयोग्य-सूपकारादिव्यापारकरणेन प्रच्छन्नं यथा भवति तथास्थितम् । एवं खिन्ने मयि गुरुर्युधिष्ठिरः खेदं कोपं भजते । कौरवेषु खेदं नाद्याऽपि भजते इति पद्यार्थः । अत्र काकुवैशिष्ट्याद्यादनौचित्यं व्यङ्ग्यम् । अत्र मयि न योग्यः खेदः कुरुषु तु खेदो योग्य इति ।

ननु इदं गुणीभूतं(त)व्यङ्ग्यमध्ये प्रविष्टमित्याशङ्क्य निराकरोति **न चेति** । अत्र यथा कथञ्चिदक्षरार्थलापनं परं निष्कर्षोऽग्रे भविष्यति । अत्र काकु-र्वाच्यसिद्ध्यङ्गमिति कृत्वा गुणीभूतव्यङ्ग्यत्वमिति न वाच्यम् । अत्र काकुशब्देन काकुव्यङ्ग्यमनौचित्यं ग्राह्यम् । तद्वाच्यो वाक्यार्थः । गुरु(रुः)खेदं खिन्न(न्ने) मपि (यि) भजति इत्यत्र पर्य्यवसानो(सन्नो) वाक्यार्थः । यतः पूर्वोक्तप्रकारेण खिन्ने भीमसेने ख्या(त्य)पकर्षखेदज्ञानप्रतिबन्धकः खेदज्ञानजनकः इह तु वैप-रीत्यमित्यपर्यवसन्नो वाक्यार्थः, काक्वा इदमनौचित्यं व्यज्यते । यदि काक्वा-नौचित्यं व्यज्यते तदाऽनौचित्यं व्यङ्ग्यमादाय पर्यवसन्नौ(न्नो) वाक्यार्थस्तथा चायमर्थः । गुरुः खिन्ने मयि खेदं भजति कुरुषु तु भे(खे)दं न भजति इत्यनुचि-तमिति पर्य्यवसन्नो वाक्यार्थः । अत्र निष्कर्षेण व्याख्या यथा न तु काकुव्यङ्ग्य-मनौचित्यं, तद्वैशिष्ट्यात् मयि खेदो न कार्यः कुरुषु तु खेदः कार्यः इत्यर्थान्तरं व्यज्यत, इति काकुव्यङ्ग्यवैशिष्ट्यादर्थस्य व्यञ्जकता[ऽऽ] गता । न तु काकु-वैशिष्ट्यादित्याशङ्क्य निराकरोति **न चेति** । अत्र काकुर्नाद्याऽपि कुरुषु इतिरूपो । नञ(ञि) काकु(कुः)। वाच्यसिद्ध्यङ्गं यद्व्यङ्ग्यं तस्य व्यञ्जकस्तथा च का-कुव्यङ्ग्यवैशिष्ट्यादर्थस्यार्थान्तरव्यजकताऽगता । न तु काकुवैशिष्ट्यात् । तथा च गुणीभूतव्यङ्ग्यत्वमेवागतम् । अयमर्थो—गुणीभूतव्यङ्ग्यमध्य एवैतस्य प्रवेशः कर्तव्यो, न तु काकुवैशिष्ट्यादर्थस्यार्थान्तरव्यञ्जकमध्ये प्रवेश इति शङ्क्यं, न चेत्यनेन योज्यम् । **अत्रोत्तरमाह—प्रश्नेति** । काकोः प्रश्नमात्रेण विश्रान्तिरस्ति । तथा हि अयमाशयः । अत्र काकुर्वै(वै)शिष्ट्यादर्थस्यार्थान्तरव्यञ्जकता न विव-

तइआ मह गंडत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एण्हिं सच्चेअ अहं ते अ कवाला ण सा दिट्ठी ॥१६॥
[तदा मम गण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र ।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥]

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत् चलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं ते इति व्यज्यते ।

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।

---

क्षिता । किन्तु काकुव्यङ्ग्यवैशिष्ट्याचादर्थस्यार्थान्तरव्यञ्जकता विवक्षिता । यथा वक्तृवैशिष्ट्याचादर्थस्यार्थान्तरव्यञ्जकता तद्वत् प्रकृते काकुवैशिष्ट्याचादर्थस्या[र्था]न्तरव्यञ्जकत्वाभावेऽपि काकुव्यङ्ग्यवैशिष्ट्याचादर्थान्तरव्यञ्जकमध्ये प्रवेशो भवत्येवेति भावः । तथा च काकुवैशिष्ट्यं काकुव्यङ्ग्यवैशिष्ट्यमित्यागतम्[6] ।

अथ **टीकान्तरे** व्याख्या-यथा, एवं खिन्न(न्ने)मपि(यि) गुरुर्युधिष्ठिरः खेदं कोपं भजते, कौरवेषु खेदं नाऽद्यापि भजतीति वाक्यार्थः । अत्र व्यङ्ग्यमाह—**अत्र मयीति**। न तु कुपितोद्धतनायकप्रयुक्तस्य वाक्यस्य केवलानुवादकत्वायोगाद्विधौ पर्यवसानं वक्तव्यम् । तच्च काकुद्यो[ति]तार्थेन विना न सिध्यतीति वाच्यसिद्ध्यङ्गं काकुः, अतो गुणीभूतव्यङ्ग्यत्वमित्याशङ्क्य परिहरति न चेति। अनुल्लङ्घ्यत्वेन गुरुं प्रति कोपस्याऽसम्भवात् प्रश्नमात्रेणाऽपि वाक्यार्थघटनात् काकोरपि प्रश्नमात्रेण विश्रान्तिः । तथाऽयमपि न युक्तः, कुरू(रु)षु न(तु) युक्तः कोप, इत्यस्य प्रकाशनात् । ननु काकुर्वाच्याङ्गमित्यभिप्रेत्य हेतुमाह—**प्रश्नमात्रेणेत्यादि** । मथ्नाति(मि) कौरवशतमित्यत्र भीमे न मथ्नामीत्यसम्भवात् काकुर्मथ्नाम्येवेति व्यङ्ग्यविश्रान्तिद्वारा काव्यार्थमुपपादयति गुणीभूतं व्यङ्ग्यत्वात् । इह तु व्यङ्ग्यविश्रान्तिं विनैव प्रश्नमात्रविश्रान्तिद्वारा काव्यार्थमुपपादयतीति गुणीभूतव्यङ्ग्यत्वम् । तस्माच्छब्दशक्तिरेव स्वार्थाभिधेयसामर्थ्याभिधेयसामर्थ्याक्षिप्तकाकुसहाय(या) सती व्यङ्ग्यार्थप्रतीतिहेतुरित्यर्थः। कृतं विस्तरेण । यदि काकुमात्रवैशिष्ट्यमुच्यते तदा

किं चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥१७॥

अत्र रतार्थं प्रविशेति व्यङ्ग्यम् ।

णोल्लेइ अणोल्लमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥
[नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि संध्यायां भवति न वा भवति विश्रामः ॥]

अत्र संध्या संकेतकाल इति तटस्थं प्रति कयाचिद्द्योत्यते ।

---

गुणीभूतव्यङ्ग्यं भवति । परं काकुर्वाच्यसिद्ध्यङ्गं नास्ति । प्रश्नमात्रेणैव काकोर्विश्रान्तिर्व्यङ्ग्यमेव । **वाच्यसिद्ध्यङ्गमि**ति । व्यङ्ग्यवैशिष्ट्यात् गुणीभूतव्यङ्ग्यं न भवतीति स्पष्टोऽर्थः ।

वाक्यवैशिष्ट्या[द्] व्यञ्जकत्वमाह—**तइया महे**त्यादि । अत्र काचिन्नायिका निजसख्यामनुरक्तं स्वप्रियमीर्ष्यया कथयति तइया० । तइया तदा । मम गंडत्थलणिम्मियं कपोलस्थलनिर्मिताम् । दिट्ठिं दृष्टिम् । ण नोस न अनैषीः । अन्नतो अन्यतः । इन्हि इदानीम् । तच्चेय सैव । अहं ते अ तावेव कपोलौ । ण सा दिट्ठि न सा दृष्टिरिति । अत्र वाक्यसामर्थ्यादेव प्रच्छन्नकामुकत्वमेव व्यङ्ग्यम् । अत्र तदानीमन्येत्येवं प्रकारस्य वाक्यस्य वैशिष्ट्याद् व्यङ्ग्यप्रतीतिरुक्तरूपेत्यर्थः । विशेषार्थो यथा-तदा मम गण्डस्थलनिमग्नां दृष्टिं तनयस्यन्यत्र । इदानीं से(सै)वाह(हं) तौ च कपोलौ, न सा दृष्टिः । निमग्नां न तु स्थिताम् । अत्रेति । मद्भयाद् बिम्बदर्शनं अन्यस्निग्धं निमेषाभावरूपात्त्वन्या, उत्कर्षान्नोद्विग्नरूपा जातेति । दृष्टो जन्मान्तरे । अहो इति इयत्कालं गोपनेन गमितमित्याश्चर्यम् । वाच्यवैशिष्ट्याद् व्यञ्जकत्वमुदाहरति **उद्देश** इत्यादि । कश्चित् कामी कामिनीं प्रतिवदति हे तन्वि ! नर्मदायाः उद्देशः उद्र्ध्वं प्रदेशः । कीदृशः । सार्द्रकदलीनां पङ्क्तीनां शोभया अतिशयेन रमणीयः । कुञ्जानामाधिक्यताङ्कुरितो वर्द्धितो रमणीनां विभ्रमौ (मो)

सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमे अ कित्ति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥१९॥
[श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत् सखि सज्जय करणीयम् ।]
अत्रोपपत्तिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते ।
अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥२०॥

---

येन एवंविधोऽयं नर्मदायाः प्रदेशः । किञ्च एतस्मिन् प्रदेशे सुरताभिलाषोद्दीपका वायवो वान्ति । तेषामग्रे पुरस्तात् कलितोऽकाण्डे अनवसरे कोपो येन स कलिताकाण्डकोपो मदनः सरति । मानि[नी]नां मानभङ्गाय कुपित इत्यर्थः । रतार्थमित्यादि।अत्र स्थलादिसामग्री रम्या । त्वमपि युवतीति सुरतार्थमागच्छेति व्यङ्ग्यम् । अत्रोद्दीपनवातादिरूपवाच्यस्य वैशिष्ट्यात् ।

अन्यसन्निधिवशाद् व्यञ्जकतामुदाहरति **णोल्लइ** इत्यादि । संकेतकालप्रश्नाभिलाषिणं कामुकमुद्दिश्य सखीं प्रति काचिद् व्यभिचारिणी वदति । मां सअलम्मि सकले। घरभरम्मि गृहभारो(रः)। अणुलमणा अनाई(र्द्र)मनाः । अत्ता श्वश्रूः । णोल्लेइ प्रेरयति । जइ यदि। संझाइ सन्ध्यायाम् । खणमेत्तं क्षणमात्रम्, वीसामो विश्रामः । णवरं केवलम् । होइ भवति । ण हवइ न वा भवति। अत्र व्यङ्ग्यमाह-**अत्रे**ति । अत्र प्रच्छन्नकामुके क्वापि देशे सान्निध्यभाजि सति सखीं प्रति स्वैरिणीं गाथां पठन्तीं दृष्ट्वा चतुर्थः(रः?) सहचरो व्यङ्ग्यार्थं सन्ध्यायां संकेतकाल इति प्रत्येति ।

अथ प्रस्तावैशिष्ट्याद् व्यङ्ग्यमाह—**सुव्वइ** इति[9] । अत्र काचिदुपपत्तिं प्रति अभिसर्त्तुमुद्यतां सखीं कथयति यथा-हे सखि ! अज अद्य । पहरमित्तेण प्रहरमात्रेण । तुज्झ तव । पिओ प्रियः । समागमिस्सदि समागमयिष्यति । सुव्वइ एव(वं) श्रूयते । एमेव एवमेव । कित्ति किमिति । चिट्ठसि तिष्ठसि । तस्मात् सहि सखि करणिज्जं करणीयम् । सजेसु सजय सम्यक् सम्पादयेति भावः ।

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाभिसार्यतामिति आश्वस्तां प्रति कयाचिन्निवेद्यते ।

गुरुअणपरवस पिअ किं भणामि तुह मंदभाइणी अहकम् ।
अज्जपवासं वच्चसि वच्च सअं जेव्व सुणसि करणिज्जम् ॥२१॥

[ गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिनी अहकम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम् ॥]

अत्राद्य मधुसमये यदि व्रजसि तदाहं तावत् न भवामि तव तु न जानामि गतिमिति व्यज्यते ।

---

अत्र व्यङ्ग्यमाह—भर्तुरागमनप्रस्तावादुपपतिसमीपे न गन्तव्यमिति व्यङ्ग्योऽर्थः । देशवैशिष्ट्याद् व्यङ्ग्यमाह—**अन्यत्रे**ति । **मालतीमाधवे** पद्यम्। अत्र पुष्पावचयं नाटयन्ती मालती सखीः प्रति कथयति । हे सख्यः अ(यू)यं पुष्पावचयं अन्यत्र कुरुध्वम् । भो सख्योऽत्राऽस्मिन् प्रदेशे । अस्मीत्यहमर्थेऽव्ययो(यम्) । [अहं] करोमि । अत्रैवाहं करोमीत्यर्थः । हेतुमाह-**ही**ति । यस्मादहं पूरं गन्तुमसमर्था न शक्ता । अयमञ्जलिर्वो युष्मभ्यं रचितः । प्रसीदत प्रसन्ना भवत व्यङ्ग्यमाह—**अत्र विविक्त** इत्यादि । प्रच्छन्नकामुकोऽयं माधवो विसर्ज्यतामिति विश्वासवर्ती कामन्दकीं प्रति मालत्या व्यज्यते । अत्र देशवैशिष्ट्यादर्थस्यार्थान्तरव्यञ्जकता । विसर्ज्य इति प्रेष्य इत्यर्थः । अत्र विविक्तलक्षणदेशवैशिष्ट्याद् व्यङ्ग्यम् । उद्देशोऽयमित्यत्र वृत्ते समग्रस्यापि वाच्यवैशिष्ट्यमिति(मिह तु)हेतुसंकेतयोग्यप्रदेशमात्रस्येति वाच्यवैशिष्ट्यादस्य भेदः ।

कालवैशिष्ट्याद् व्यञ्जनामुदाहरति **गुरुअणे**ति[II] । प्रतिष्ठासुं प्रियं प्रति काचिन्नायिका कथयति । गुरुअण परव्वसा गुरुजनपरवशा । पिये हे प्रिय । मंदभाइणी मन्दभाग्या । अहं, तुह त्वा, किं भणामि । अज्ज अद्य । पवासं प्रवासम् । वच्चसि व्रजसि । वच्च व्रज । सयं चेव स्वयमेव । हे प्रिय करणिज्जं करणीयम् । मु(सु)णसि जानासि । अत्र वसन्ते यदि त्वं व्रजिष्यसि तदाहं मरिष्यामि । कालवैशिष्ट्यादर्थस्यार्थान्तरव्यञ्जकता ज्ञेया । आदिग्रहणार्थं व्याचष्टे

आदिग्रहणाच्चेष्टादेः । तत्र चेष्टाया यथा
द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसाराश्रया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥२२॥

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते । निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया च पुनः पुनरुदाह्रियते । वक्त्रादीनां मिथःसंयोगे द्विकादिभेदेन । अनेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम् ॥

---

आदीति[12]। चेष्टावैशिष्ट्याद् व्यञ्जकत्वमुदाहरति द्वारो०। कश्चित् कामी नर्मसचिवं प्रति कथयति। द्वारसमीपसन्निहिते मयि तथा सौन्दर्य(र्य)सारलक्ष्म्या ऊरुयुग्मं प्रोल्लास्य प्रसार्य्य मिथः समाश्लिष्टं कृतम् । दूरस्थस्यैव प्रियस्य दूरात् स्वाङ्गैः स्वाङ्गान्येव मेलयित्वा स्पृ(स्प)ष्टकं नामालिङ्गनं क्रियते तदनेन सूचितम् । शिरोंशुकं पुरतः आनीतम् । अनेन गूढमागच्छेति व्यज्यते । तदनन्तरं चञ्चले लोचने अधः क्षिप्ते । इत्यनेन सूर्येऽस्तमिते आगच्छेति । तदनन्तरं वाचः प्रसरणं निवारितः(तं), मुखमुद्रणेनेत्यर्थः । अनेन तूष्णो(ष्णीं)भूते जने आगन्तव्यमिति । अनेन पारवश्यं ध्वन्यत इति केचिदाहुः । ततो भुजलते सङ्कोचिते { सति } अनेनागमनपारितोषिकमालिङ्गनं करोती(मी)ति व्यज्यते । अत्र चेष्टया । व्यङ्ग्यमाह-अत्र चेष्टयेत्यादि । चेष्टया उरुयुगप्रसारणादिरूपया वैशिष्ट्य(ष्ट्यं[10A] म्) { स्य } । व्यङ्ग्योऽर्थो ज्ञेयः । ननु द्वितीयोल्लासे वाच्यादीनामर्थानां व्यञ्जकत्वमुदाहृतम्। तत्र चैकस्मिन्नेवोदाहरणे वक्त्रादिवैशिष्ट्यमप्युदाहर्तुं शक्यते तत् किं पृथगुदाहरणेनेत्याशङ्क्याह-निराकाङ्क्षेति । सामान्येन पूर्वमुदाहृतेऽपि अस्योदाहरणं किं तत्[13] प्रदर्शितमित्याकाङ्क्षायां सत्यां प्रतिपत्तिर्निराकाङ्क्षा न भवतीति तदर्थं वक्त्रादिवैशिष्ट्यादर्थानां पुनः व्यञ्जकत्वमुदाहृतमित्यर्थः ।अनवसरे सङ्कोचोऽपि युज्यते सोऽपि नास्तीत्याह–प्राप्तेति । एवं वाच्यस्य वक्त्राद्ये-

कैकवैशिष्ट्येन व्यञ्जकत्वमुदाहार्यमित्याह — **वक्त्रादीनामि**ति । वक्त्रादीनां मिथःसंयोगे सति द्विकत्रिकादि भेदो भवति । तत्रोदाहार्यमिति सम्बन्धः । वक्तृबोद्धव्यादीनां मिथो द्वयोःसंयोगे द्विकवैशिष्ट्यं इत्यादि ज्ञेयम् । पूर्वं प्रत्येकं वैशिष्ट्ययोग उदाहृतः । साम्प्रतस्तु(मु)भयोर्योगेऽपि वैशिष्ट्यमुदाहृियते । पूर्वं क्रमेणोदाहृतं साम्प्रतं उभयोर्योग(गः) प्राप्तावसरः । यथा वक्तृवैशिष्ट्ययोगात् बोद्धव्यवैशिष्ट्ययोगात् पुनः कथ्यन्ते । लक्ष्यव्यञ्जकयोः [इति] ।[14].... कुत्रचिल्लक्ष्यस्य व्यञ्जकता कुत्रचित् व्यङ्ग्यार्थस्य व्यञ्जकता कुत्रचिल्लक्ष्यव्यङ्ग्ययोर्व्यञ्जकता उदाहार्या[5]। ग्रन्थयोजना यथा **वक्त्रादीनामि**ति । वक्त्रादीनां मिथः संयोगे द्विकादिभेदे द्वयोर्यत्र प्राधान्येनाऽत्राप्यर्थस्य व्यञ्जकत्वमुदाहार्य्यमित्येको ग्रन्थः । **अनेन क्रमेणे**ति । यथा वक्त्रादिवैशिष्ट्ययोगार्थवाक्यार्थस्य व्यञ्जकत्वं, यथा एवं द्विकादिभेदे शक्यार्थस्य व्यञ्जकत्वं यथा उक्तं तद्वत् अनेन प्रकारेण वक्त्रादिवैशिष्ट्ययोगेनाऽपि लक्ष्यव्यङ्ग्ययो { ग्ययो } श्च व्यञ्जकत्वं ज्ञेयम् । एवमनेन प्रकारेण वक्त्रादिवैशिष्ट्ययोगस्तत्र द्विकादिभेदेऽपि लक्ष्यव्यञ्जकत्वमुदाहार्यं इति द्वितीयो ग्रन्थः । तत्र द्वयोर्वैशिष्ट्या[त्] व्यञ्जकस्योदाहरणं-**अत्ता एत्थणुमज्जइ** एत्थ[16] अहं दिवसयं पलोएसु मा पयहिय । रत्ति अंधय सिज्जाए महं णु मज्जिहिसि । काचित् प्रोषितभर्तृका व्यभिचारिणी वसति(तिं) प्रार्थयमानं सञ्जातकामं पथिकं प्रति कथयति । पहिय हे पथिक । अत्ता श्वश्रूः । न माता । तेन गुप्ताभिलाषः पोषणीयः । एत्थ अत्र । णुमज्जइ निषीदति । **टीकान्तरे**[17] दूरे च सा शेते सुप्ता च न जागर्ति । इत्थ अहं,अत्र त्वत्समीपे एवाहम् । दिवसयं दिवसकः(कम्)। साम्प्रतं निधुवनान्तरायकारी कुत्सितो दिवसः तस्मात् । पलोएसु विलोकनविनोदेन दिवसो निर्वाहनीय इत्यर्थः । पहिय पथिक । रत्ति अन्धय रात्रावधिकस्मरावेशात् अन्ध(न्धः)शय्याविभागानभिज्ञ । सिज्जाइ शय्यायाम् । महणु मज्जिहिसि माशयिष्ठाः । किन्तु सकलाऽपि यामिनी निधुवनविलासेनातिवाहनीया । आवयोरर्थे महत इति निपातः। अत्र वक्तृबोद्धव्यवैशिष्ट्या[त्]निषेधरूपवाच्याद्वि { वि } ध(धि)रूपस्य निधुवनाभ्युपगमरूपव्यङ्ग्यस्य प्रतिभाजुष(षः) { स्तट } प्रतीति-

**शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।**
**अर्थस्य व्यञ्जकत्वे तत् शब्दस्य सहकारिता ॥२३॥**

**शब्देति । नहि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः ॥**

**इति काव्यप्रकाशेऽर्थव्यञ्जकतानिर्णयो नाम तृतीय उल्लासः ॥३॥**

---

रिति द्विकादिभेद इति । द्विकत्रिकादिरूपे एवं वक्त्रादीनां परस्परसंयोगात् द्विक-त्रिकादयो भवन्तीत्यर्थः । **अनेनेति** । यथा अनेन वक्त्रादिक्रमेण पूर्वोदाहृतं(त)-साहन्तीत्यथ(त्र) लक्ष्येऽर्थे वक्तृवैशिष्ट्यम् । उअणिब (च्च)त्ते[त्यत्र] । अत्र व्य-ङ्ग्ये वक्तृवैशिष्ट्याद्यु(द्यु)दाहृतां(हार्यम्) । { तथोदाहार्यं } । नत्वेवमर्थस्य प्रमाणान्तरत्वं स्यात् तदसाधारणसहकारेण मनसा व्यङ्ग्यप्रमादकत्वादित्याह— **शब्देति** । तद्बोध्येनैवार्थ्य(र्थ)स्य व्यञ्जकतया तदन्वयव्यतिरेकाभ्यां तस्यै-वाऽर्थस्य प्रमाणान्तरलभ्यत्वेनाव्यञ्जकत्वात् । तदाह **न हीति** । प्रत्यक्षोपस्थि-ते कामिमिथुने तच्चेष्टयानुमितैः(त) { च } रत्यादा { र } वास्वादान्व-यात्[8] । अर्थस्य तत्र प्रधाना शक्तिरिति व्यञ्जन (ना) { ता } यास्तन्मूलकत्व-मिति सर्वमनाकुलम् । अयमेवार्थः स्पष्टतरो लिख्यते । ननु चक्षुरादिकं मनःसह-कृतं घटादिकं ज्ञापयति धूमज्ञानं च मनस्सहकृतं वह्निज्ञानं जनयति । तद्यथा-प्रमाणां (णम् ?) । यदुक्तम्—तदेव प्रमाणं यदसाधारणम् । सहकार्यासाद्यमनो-बहिर्गोचरां प्रमां जनयति तस्यैव प्रमाणत्वमिति[19] । तद्यथा शब्दस्य वाक्यार्थज्ञा-पकत्वेन प्रमाणत्वं एवमर्थस्याऽपि व्यङ्ग्यार्थज्ञापकत्वेन प्रमाणान्तरत्वं स्यादित्या-शङ्क्याह—**शब्देति** । अर्थस्य व्यञ्जकत्वेऽपि शब्दस्य सहकारितेति । कोऽर्थः । शब्दस्यैव प्रमाणत्वं, यतोऽर्थः शब्दस्यासाधारणं सहकारीव्यञ्जकतायामर्थ इत्यर्थोऽपि व्यञ्जक इत्युच्यते । प्रमाणं तु शब्द एव । कुत इत्याशङ्क्याह— शब्दप्रमाणेन वेद्योऽर्थोऽर्थान्तरं व्यनक्ति । शब्दस्यैव प्रमाणत्वं नत्वर्थस्य प्रमाण-त्वमिति कृतं विस्तरेण[20] ।

इति श्रीकाव्यप्रकाशटीकायां **सारदीपिकायां** वाचनाचार्यगुणरत्नकृतायां
तृतीयः उल्लासः सम्पूर्णः ॥३॥

**यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयं तथापि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदान् आह ।**

(सू० ३९) अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ ।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥२४॥

**लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येव अविवक्षितं वाच्यं यत्र स 'ध्वनौ' इत्यनुवादात् ध्वनिरिति ज्ञेयः । तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम् ।**

---

पूर्वं तददोषौ शब्दार्थावित्यादि काव्यलक्षणं कृतमिति काव्यस्य शब्दार्थौ विशेष्यं, दोषादयो विशेषणानि । तत्र विशेष्यनिरूपणानन्तरं विशेषणनिरूपणमुचितमित्याशङ्कानिवारणायाऽऽह—**यद्यपीति** । **अभिधानीय**मभिधातुं योग्यम् । धर्माणां रसस्यापकर्षोत्कर्षस्वरूपाणाम् । अत एव तन्मुखेनैव व्यवतिष्ठमानानाम् । तेषां रसधर्मिनिरूपणाधीनमेव निरूपणमिति । रसध्वनिगुणीभूतव्यङ्ग्ये निरूपयितव्ये । प्रसङ्गादन्येषामपि निरूपणमित्याह—**धर्मिणि(णी)**ति । अथाऽवसरसङ्गत्याह शब्दार्थनिर्णये कृतेऽवसरसङ्गत्या काव्यं धर्मि(र्मी) तद्दर्शनमुखेनैव धर्माणां गुणदोषालङ्काराणां हेयोपादेयतां वक्तुं प्रथमं धर्मिभेदं, काव्यभेदान्, यथाक्रममुल्लासत्रयेण वक्ष्यमाणे(णं) उत्तममध्यमाधमाभिधं प्रदर्शयितुमाह-**अविवक्षिते**ति । ध्वनिशब्देनोत्तमं काव्यमुच्यते । ध्वनिश्च द्विविध(धः) । एकोऽविवक्षितवाच्यो द्वितीयो विवक्षितवाच्यस्तत्राविवक्षितवाच्यो ध्वनिर्व्याख्यायते । वक्तुमिष्टं विवक्षितं, न विवक्षितमविवक्षितं, अविवक्षितं च तद्वाच्यं वे(चे)ति । अविवक्षितमनुपयुज्यमानमनुपपद्यमानं वा वाच्यं यत्र । एवंविधो यो ध्वनिरस्ति, तत्र ध्वनौ, वाच्यं द्विविधम् । अयमर्थो(र्थः) । लक्षणं(णा)मूलं यद् गूढव्यङ्ग्यं तत्प्राधान्ये सति,अविवक्षितो(त)वाच्योऽर्थो यत्र ध्वनिरिति । तस्मिन् ध्वनौ यद् वाच्यमस्ति तद् द्विविधमेकमर्थान्तरे सङ्क्रमितं परिणमितं, विवक्षितान्वयनिर्वाहायाऽनुप्रवेशितम् ।

यथा

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥२३॥

अत्र वचनादि उपदेशादिरूपतया परिणमति।

---

णिग(ज)न्तशब्दोऽयम्। तदार्थान्तरे सहकारिता। { हित } व्यञ्जनाव्यापारेण संक्रान्तिं नितं वाच्यमिति व्याख्येयमन्यथासंक्रान्तमिति। व्याख्याद्वयमग्रे। क्व-चिदर्थान्तरे परिणमितं, क्वचिदर्थान्तरे परिणमिति (?) पाठद्वयप्रदर्शनाद् क्रियते।

भ्रान्तादिवाक्यव्युदासाय विशेषणपूर्वेथ (म) विवक्षितवाच्यपदं व्याचष्टे। **लक्षणामूलेति**। लक्षणा मूलं यस्य, तच्च तद्गूढं च, तच्च तद्व्यङ्ग्यं च, तस्य प्राधान्ये सति। विवक्षितान्यपरव्युदासाय लक्षणामूलेति। अगूढव्यङ्ग्यमध्यमका-व्यपरिहाराय गूढेति। य इति। सामान्याभिधाना[त्] विशेष्या(षा)परिज्ञान-माशङ्क्याऽऽह—**ध्वना वि { नी } ति**। अविवक्षितवाच्ये ध्वनौ लक्षणा भवति। विवक्षितवाच्ये लक्षणा न भवति। अविवक्षितवाच्ये लक्षणाद्वयं, यथा त्वामस्मी-त्यादौ। वचनादिनोपदेशस्योपादानं क्रियते इत्युपादानलक्षणा भवति। उप-कृतमित्यादौ विपरीतार्थे स्व[स]मर्पणं क्रियत इति लक्षणा। अर्थान्तरसङ्क्रमितवा-च्यस्योदाहरणमाह—**यथेति**। अस्मि(स्मी)त्यहमित्यर्थेऽव्ययमस्मच्छब्दानुवादक-श्चायं न तत्पर्याय इति। युष्मत्पर्यायभवच्छब्दप्रयोगे मध्यमपुरुषानुपपत्तिरत्रोत्त-मपुरुषानुपपत्तिः। अहं त्वां वच्मि। अत्र विद्वत्समूहो वर्तते। तत् तस्मादा-त्मीयां मतिमादाय दृढीकृत्याऽत्र तिष्ठेत्यन्वयः। अत्र वचनसामान्यस्य प्रत्य-क्षेणैव गृह्यमाणत्वादनुपयुक्तो मुख्योऽर्थो बाध्यो, वचनविशेषं लक्षयन्ती(ती)ति लक्षणामूलत्वम्। सामान्यविशेषभावश्च सम्बन्धो, वक्तुर्विनयप्रकाशनमाप्तत्वं वा व्यङ्ग्यम्। सर्वो हि स्वां मतिमादायैव तिष्ठतीत्यनुपयुक्तो वाच्योऽर्थः। प्रमाण-परिगृहीतां मतिं लक्षयति। सामान्यविशेषभावः सम्बन्ध(न्धः)। गृहीता मतिर्न त्या-ज्येति व्यङ्ग्यम्। अथ वाच्य हिताहितत्वालङ्घनीय(या)ज्ञत्वादरग्राह्यानि, तद्विशेषा गृह्यन्ते। एवं विदुषामनन्यसाधारणज्ञानवतां समवायः, परस्परसापेक्षता, अशुद्ध-

क्वचिदनुपपद्यमानतया अत्यन्तं तिरस्कृतम् । यथा

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥२४॥

एतद् अपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति ॥

---

विपक्षदूषकत्वं सर्वग्राह्यैकपक्षत्वं च फलम् । या(आ)त्मीयां परा प्रती(ता)र्य्याम्। अदुष्टपक्षोद्भावनफलाम् । स्थितिं सावधानां, त्वद्विपक्षच्छिद्रप्रेक्षित्वं च फलमित्यूहनीयम् । **वचनादीति** । अनुपप्रयुज्यमानार्थं उपदेशादि लक्षयन् व्यङ्ग्यं प्रयोजनरूपमन्यशब्दवाच्यं धर्मान्तरं व्यनक्ति । न हि वचनमात्रमेव । किन्तु त्वमुपदेश्यः अहं चोपदेष्टा इत्याप्ततयैवोपदेशं ददामीत्याद्युपदेशे वाक्यार्थः परिणमितः । अवस्थान्तरं परिणामो, यथा फलस्यामावस्थातः पाक इति ।

द्वितीयं भेद(दं) स(अ)त्यंततिरस्कृतवाक्यार्थं दर्शयति—**उपकृतमिति** । अत्यन्ततिरस्कृतवाच्यत्वे तिरस्कारोऽत्रान्वयाऽप्रतियोगित्वं ज्ञेयम् । कृतापकारं प्रति विपरीतलक्षणया **कश्चिद्** वक्ति-हे सखे ! त्वया बहु यत्र यस्मिन् विषये उपकृतं तत्र किमुच्यते । परं तु अनेनोपकारकरणेन त्व[या] सौजन्यमेव स्थापितम् । तस्मादीदृशमेवोपकारं कुर्वन्न(न्) बहुकालमखण्डितं सुखे(खि)तं यथाभवति तथा आस्व । अत्रो(त्रा)पकारिणि उपकारित्वमयुक्तमित्यनुपपन्नो मुख्योऽर्थो, विरुद्धरूपसम्बन्धेनोपकारित्वं लक्षयति । अपकारकारिण्यपि प्रियमेवोच्यते इति [स्व]साधुत्वं व्यङ्ग्यम् । तादृशकर्मणः पुनरनाचरणं वा व्यङ्ग्यम् । न हि अपकारिण उपकारकारित्वं युक्तमिति । मुख्यस्यासम्भवादविवक्षितवाच्यं सदिदं वाक्यं [साधुत्व]शत्रुत्वयोश्च वैपरीत्यसम्बन्धादनुपकारं लक्षयन् गुप्तासभ्यार्थप्रतीतिरूपं प्रयोजनं व्यनक्ति इत्ययं भावार्थः । **तत** इति उपकारादित्यर्थः ।

ननु कथमत्र लक्षणेत्यत आह **एतदिति** । अपकारित्वं प्रकरणादवसेयम् । वैपरीत्यं शक्यसम्बन्धाभावाऽभावरूपतयोपकारस्य तिरस्कारः, अपकारातिशयश्च व्यङ्ग्यः । वैपरीत्यादपि लक्षणा प्रवर्तते तथा चोक्तम्—

(सू० ४०) विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।
अन्यपरं व्यङ्ग्यनिष्ठम् ॥ एष च

(सू० ४१) कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥२५॥

अलक्ष्येति । न खलु विभावानुभावव्यभिचारिण एव रसः । अपि तु रसस्तैः इत्यस्ति क्रमः । स तु लाघवान्न लक्ष्यते ।

---

अभिधेयेन संयोगात् सामीप्यात् समवायतः ।
वैपरीत्यात् क्रियायोगात् लक्षणा पञ्चधा मता ।

एतावता अविवक्षितवाच्यस्य ध्वनेरर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्वौ भेदावुक्तावथ विवक्षितवाच्यध्वनिमाह-**विवक्षितमिति** । पूर्वोक्तध्वनिर्लक्षणामूलोऽविवक्षितवाच्यो द्विभेद उक्तोऽधुनाऽभिधामूलं विवक्षितान्यपरवाच्यं (च्य)-ध्वनि (निं) द्विप्रकारमोह—**विवक्षितमिति** । वक्तुमिष्टं विवक्षितम् । अन्यपरं व्यङ्ग्यनिष्ठं यत्र वाच्यं भवति स पुनरन्यो विवक्षिताऽन्यपरवाच्यलक्षणो ध्वनिर्द्विविधो भवति । अयमर्थः । अबाध्यत्वाद् वक्तुमिष्टं व्यङ्ग्यार्थोपसर्जनीभूतं वाच्यं यत्र सोऽन्यो विवक्षिताऽन्यपरवाच्यो नाम ध्वनिः । पूर्वस्मिन् अविवक्षितवाच्ये ध्वनौ बाधोऽस्तीति लक्षणामूलत्वम् । अत्र विवक्षितवाच्यान्यपर[वाच्य]ध्वनौ बाधो नास्तीति विशेषो ज्ञेयः । अत्रान्यपरत्वेनैव विच(वैल)क्षणा(ण्या)द् । विवक्षितं चेत् कथमन्यपरमिति विरोधो नाशङ्क्यः । अपरस्तु स विवक्षितान्यपरवाच्य इत्यर्थः । **टीकान्तरे**[२] त्वेवं लापनिका यथा विवक्षितमित्यादि । वाच्यतावच्छेदकत्वेन विवक्षितम् । तेनाऽर्थान्तरसङ्क्रमितम् । वाच्याद् व्यवच्छेदः । तत्र रूपान्तरेणैव वाच्यविवक्षायां न ध्वनिमि(रि)त्याह—**अन्यपरमिति** । तद् विवृणोति । **व्यङ्ग्यं(ङ्ग्य)ति(नि)ष्ठमिति** । तदाक्षेपकत्वेन तत्र विषया(विश्रा)न्तमित्यर्थः । तद्भेदाभिधानाय तमनुकर्षति । **एष चेति** । लक्षणास्थले तु वाच्यापेक्षया व्यङ्ग्यक्रमलक्षणनियमेन भेदान्तराभावान्नात्र तदनुवाद इति । एष च विवक्षितान्यपरवाच्यलक्षणध्वनिर्द्विधा भवतीत्याह—**कोऽप्यलक्ष्यक्रमव्यङ्ग्य** इति । न लक्षयितुं [शक्यः] क्रमो यस्य तदलक्ष(क्ष्य)क्रमम् ।इत्थम्भूतं व्यङ्ग्यं यत्र सोऽलक्ष्यक्रमव्य-

तत्र

(सू०४२) रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥२६॥

आदिग्रहणाद्भावोदयभावसन्धिभावशबलत्वानि । प्रधानतया यत्र स्थितो रसादिस्तत्रालंकार्यः यथोदाहरिष्यते । अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेयऊर्जस्विसमाहितादयोऽलंकाराः । ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते ॥

---

ङ्ग्य(ङ्ग्यः) । अत्र बहुव्रीहिगर्भो बहुव्रीहिः। सोऽलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः। अत्र लक्षणाङ्कुरमात्रमपि नान्वेष्टव्यम् । वाच्यार्थे बाधलेशाभावान्न लक्षणास्पर्शः। पूर्वस्मिन् लक्षणाऽस्तीति महान् भेद इति ज्ञेयम् । तेनाऽयं द्विविधः सम्पन्नस्तेन विवक्षितवाच्यो ध्वनिर्द्विविधा(धः)—तदेवाह—एकोऽलक्ष्यक्रमव्यङ्ग्योऽपरो लक्ष्यक्रमव्यङ्ग्य इति ।

नन्वत्र क्रमः सर्वथैव नास्ति किं वा सन्नपि न ज्ञायत इत्याह—**अलक्ष्येति** । विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति । विभावानुभावव्यभिचारिप्रतीतिपूर्वकत्वाद रसप्रतीतिरिति । न तेषां रसत्वं किन्तु तैः कृत्वा रस इति । पूर्वापरभावित्वेन क्रमोऽस्त्येव परमुत्पलपत्रशतसूचीव्यतिभेदवत् लाघवान्न लक्ष्यते । **विभावानुभाव** इति । व्यभिचारिप्रतीतिसमकालमेव रसप्रतीति(तिः)। क्रमः सन्नप्यसन्निवाभातीत्यर्थः । **टीकान्तरे** व्याख्या यथा—वक्ष्यमाणलक्षणा विभावादयो व्यञ्जकास्तै रसो व्यज्यत इत्यस्ति क्रमः, तथापि सत्त्वप्रतीतउ(तो)त्पलपत्रं(त्र)शतव्यक्ति(ति)भेदवत् स न लक्ष्यत इत्यर्थः । तत्रालक्ष्यक्रमं दर्शयति—तत्रालक्ष्यक्रममध्ये श्रृङ्गारादयो रसाः, रत्यादयो भावा, रसा[भास]भावाभासभावशान्त्यादिश्चादिर्यस्य समुदायस्य स समुदायरूपोऽर्थः अक्रमोऽलक्ष्यक्रमव्यङ्ग्य इत्यर्थः । तथा च **ध्वनिकारः**—

असंलक्ष्यक्रमोद्योतः क्रमेण द्योतितोऽपरः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥

तत्र रसस्वरूपमाह—

(सू०४३) कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥२७॥

---

(ध्वन्या. २.२) मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा । स च वाच्यार्थापेक्षया कश्चिदलक्ष्यक्रमतया प्रकाशने(ते) कश्चित् क्रमेणेति द्विधा मतः । न खल्विति । केवलं विभावानुभावव्यभिचारिण एव रसो न भवति, किन्तु तैर्विभावानुभावव्यभिचारिभिर्मिलित्वा रस इति क्रमोऽस्ति । स यत्र लक्ष्यते न लक्ष्यते चेति द्वेधा ।

पूर्वमलक्ष्यक्रमं दर्शयति । तत्रेति । रस १ भास(व) २ रसाभासा(स) ३ भावाभास ४ भावशान्त्यादिः ५ अक्रमो [अ]लक्ष्यक्रमो भवति । कुत्र रसा (सः) । अलङ्कारान्(द्) भिन्नः सन्, अलङ्कार्यतया प्राधान्येन स्थितो रसादिस्तत्रालक्ष्यक्रमो ध्वनिर्भवति । रतेः स्फुटस्फुटतरस्फुटतमप्रकाशः स रसादिस्तत्र रतेः स्फुटः प्रकाशो विभावेन, स्फुटतरप्रकाशोऽनुभावेन, स्फुटतमः प्रकाशो व्यभिचारिभिर्भवति । तत्र विभावादीनां कुत्रचित् क्रमो लक्ष्यते । कुत्रचिद् वस्तुमाहात्म्यात् क्रमो न लक्ष्यते । यत्र च न लक्ष्यते तादृशं ध्वनिं निरूपयितुमाह-तत्रेति । भिन्नो रसाद्यलङ्कारादित्यस्य विवरणमाह-अन्यत्रेति । मध्यमकाव्यावसरे इत्यर्थः । अन्यत्र रसादौ प्रधाने यत्र रसादिरङ्गं तत्र रसवदलङ्कारः । यत्र च भावोऽङ्गं तत्र प्रेयोऽलङ्कारः । यत्र च रसाभासो[ऽङ्गं] तत्र ऊन(र्ज)स्वी अलङ्कारः । यत्र च भावाभासोऽङ्गं तत्र समाहितोऽलङ्कारः । यथा लो(लौ)किकस्थले कटाक्षालिङ्गनचुम्बनादीनां विद्यमानोऽपि कालक्रमो वस्तुमाहात्म्यान्न लक्ष्यते, तद्वदत्रापि भावानुभावव्यभिचारिणां विद्यमानोऽपि क्रमः आस्वादे { न } न लक्ष्यते । { क्रमो } यत्र च वाक्यार्थ एव प्रधानोऽथवा रसादिरेव [अ]प्रधानस्तत्र प्रधाने वाक्यार्थे रसादिरङ्गभूतो गौणौ(णो) भवति तत्र गुणीभूतव्यङ्ग्ये रसवदादयोऽलङ्कारा भवन्ति । यत्र च एकस्य रसस्य प्राधान्यमपरो रसो यत्राङ्गं, तत्र यदि प्रधानेन रसेन चमत्कारस्तदा

**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥२८॥**

ध्वनिरेव। यदि त्वा(त्व)ङ्गभूतेन गौणेन रसेन चमत्कारस्तदा गुणीभूतं व्यङ्ग्यम् । आद्यं यथा–क्षिप्तो हस्तावलग्न इत्यादौ । द्वितीयं यथा-अयं स रशनो दं-कवी (त्कर्षी)त्यादि । अलंकुर्वन्ती(ती)त्यलङ्कारः। अलं क्रियत इत्यलंकार्यः। न ह्यलङ्कारालङ्कार्ययोरेकरूपता । यदाह–**ध्वनिकारः**–

रसभावस्तदाभासस्तत्प्रशान्त्यादिरक्रमः ।
ध्वनेरात्मा { वि } [ङ्गि]भावेन भासमानो व्यवस्थितः ॥१॥
वाच्यवाचकचातुर्य(रुत्व)हेतूनां विविधात्मनाम् ।
रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥२॥
प्राधान्येऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥३॥

गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यते–**शून्यं वासगृह**मित्यादिनेति दिक् । प्रसङ्गसङ्गत्या **रसस्वरूपमाह–कारणानी**ति। इदं सूत्रं रसविषयं केचिदुत्पत्तिपरत्वेनवर्णयन्ति १ केचिदनुमितिपरत्वेन २ केचिद् भावनापरत्वेन ३ केचिद् व्यक्तिपरत्वेन व्याचक्षते ४ । तत्रोत्पत्तिपक्षमवतारयति **विभावे(वै)**रिति । लोके रत्यादेः स्थायिनोऽनुच्छिन्नप्रवाहस्य, यानि कारणानि, कार्याणि, सहकारीणि च, तानि काव्ये नाट्ये च यदि स्युस्तदा विभावा, अनुभावा, व्यभिचारिणः, कथ्यन्ते। यथासंख्यमित्यन्वयः । सर्वमिदमनुदितम् ।

रसस्य लक्षणमाह–**व्यक्तः स तै**रिति। विभावादिभिर्व्यक्तः स्थायीभावो रस इत्यर्थः । यथा रामसीतादयः परस्परानुरागे परस्परं कारणानि,तदन्वयव्यतिरेकानुविधानात् कटाक्षादयः कार्याणि, अंसरित्यादौ तदभावात् लज्जाहास्यादीनि सहकारीणि, न तत्कार्याणि, तेन विनाऽपि[संभवेन] व्यभिचारात्[न वा कार]णानि तदुत्तरत्वात् नैयत्यात् किंतु स्वसामग्र्यः प्रादुर्भवन्ति, सन्ति रत्यादेरुपचायकानि भवन्ति। सामग्रीसम्पातेन रत्यादिभिः सहचरणात् तानि सहचा-

**उक्तं हि भरतेन "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति । एतद्विवृण्वते । "विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः रत्यादिको भावो जनितः अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसन्धानान्नर्तकेऽपि प्रतीयमानो रसः" इति भट्टलोल्लटप्रभृतयः ।**

---

रीणीत्युच्यते । सहचारीणीति पाठे रत्यादेरेकरूपस्य तत् तद्विचित्रस्मितं हृदि न कार्यं जननायोगेन सामग्रीवैचित्र्यापादकानीत्यर्थः । °**टीकान्तरे** विशेषव्याख्या यथा–**कारणान्यथेति** । रत्यादेश्चित्तवृत्तिविशेषस्य स्थायिनः सन्ततिवाहिनो भावस्य लोकव्यवहारे कारणानि कार्याणि सहकारीणि कथ्यते(न्ते) तानि वे(ए)व यद्य[व]-स्थानुवृत्ति(कृति)र्नाद्यं (ट्यं) तस्मिन्नाद्ये(ट्ये) वादि(चि)कसात्त्विकाङ्गिकाहार्य्यलक्षणानि(भि)नयरूपे; काव्ये च यथासंख्येनैव विभावानुभावव्यभिचारिणश्च कथ्यन्ते । कारणानि विभावाः । कार्याण्यनुभावाः । सहकारीणि व्यभिचारिण इत्यर्थः । तैः कारण कार्यसहकार्य्य (री) शब्दव्यपदेशै(श्यै)र्विभावाद्यैर्व्यक्तः सन् { कार्या } [स्थायी] भावो रसः कथ्यते २ । तथा चोक्तम्[1]–

बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयात्मकाः ।
अनेन यस्मात् तेनाऽयं विभाव इति कीर्तितः ॥१॥
वागङ्गसत्त्व(त्वा)भिनये(यै)र्यस्मादर्थोऽनुभाव्यते ।
वागङ्गोपाङ्गे(ङ्ग)संयुक्तस्त्वनुभाव इति स्मृतः ॥२॥ [8]
तिष्ठत्यस्मिन् रस इति स्थायी तथा चोक्तम्-
विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।
आत्मभावं नयत्र्यात(त्यन्यान्) स स्थायी लवणाकरः ॥३॥[9]
विभावैस्त्वनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वाद्यत्वं स्थायीभावो रसः स्मृतः ॥४॥[10]

अथ भरतसूत्रं व्याख्यायते । विभाव्यन्ते विशिष्टतया ज्ञायन्ते वागाद्यभिनयसहिताः स्थायिव्यभिचारिलक्षणाश्चित्तवृत्तयो यैः, तथा तैर्विभावैर्ललनादि-

**राम एवायम् अयमेव राम इति 'न रामोऽयम्' इत्यौत्तरकालिके बाधे रामोऽयमिति रामः स्याद्वा न वायमिति रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे**

---

भिरालम्बनकारणै रुद्यानादिभि रुद्दीपनकारणै, रत्यादीनामुत्पत्ते(त्तौ) र्ल(ल)लना आलम्बनकारणमुद्दीपनकारणं चोद्यानादि ; कारणभेदेन विभावस्य द्वैविध्यम**नुभावै**रिति । सामाजिकः स्थायिव्यभिचारिलक्षणं चित्तवृत्तिविशेषमनुभवन् अनुभाव्यते यैस्ते तथा तैः अनुभावैः । **व्यभिचारिभिरि**ति । विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः । अथवा व्यभिचरन्तीति व्यभिचारिणस्तैर्व्यभिचारिभिः । तेषु अनुपचितावस्थः स्थायीभावः विभावादिभिरुपचितावस्थस्तु रसः । ननु क रसः प्रतीयत इत्याह—**मुख्येति** । **मुख्य**वृत्त्या रामादावनुकरणीये । **तद्रूपता**नुसन्धानात् रामादिरूपतानुसन्धानात् । अनुकर्तर्य्ये(र्य)ऽपि नटे प्रतीयमानः सामाजिकैरास्वाद्यमानः । न तु प्रागवस्थाभावः स च क्रमेणोपचितः सन् रस इत्युक्तम्। तद् व्यभिचरति कथमित्याह—यतः इष्टजनवियोगाद् विभावादुत्पाद्यमानो महानपि शोकः क्रमेणोपशाम्यति । न तूपचितो भवतीत्यादिव्यभिचार एवेति **लोल(ल्ल)ट**व्याख्यानमसङ्गतम्[11] । अस्मिन्नु { भय } [पेप[11A]][or-त्प?]त्तिपक्षे **रसो** रत्यादिको भावो जनित इति पक्षे आलम्बनभावस्य **रसं** प्रति जनकत्वेऽपि; उद्दीपनस्य उद्दीपकत्वहानि(निः) । नाऽपि पोषकत्वं व्यभिचारिणमि-(णामे?) व । तथा अन्यत्रापि व्यञ्जकत्वमपि । व्यक्ते भट्टलोल(ल्ल)टादिभिरनङ्गीकारा[त्[12]?] { वन च तौ } [न च तैः]स्वतोऽभिव्यक्तिर्नेष्यते । उत्पन्नस्य परत्वादिष्यत इति वाच्यम् ।

अभिव्यक्तेर्ज्ञप्तिपर्यायत्वेनानुभावादीनामेव कार्यत्वात् नापीषदतिशयाधानहेतुत्वमुद्दीपकत्वं जनित(तं) इति पदविरोधादित्यरुच्यानुमितिपक्षमवतारयति । **राम एवायमिति** । अथवा स्वनिष्ठरत्युद्बोधाभावे चमत्कारो न स्यादित्यपरितुष्यन् शङ्कु[क]मतं द्वितीयमाह—**राम एवायमि**ति । **शङ्कुक**नामा कश्चिद् भरतविज्ञोऽनुमानप्रकारविशेषमाह—**रामएवे**त्यादि । विभावादिति । नटे अनुमीयमानोऽनुका-

**'सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिकादृशोः ।**
**मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता' ॥२५॥**
**'दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।**
**अविरलविलोलजलदः कालः समुपागतश्चायम्' ॥२६॥**

---

र्यगतरत्यादिर्भावो रस इति प्रघट्टार्थः । एँकत्र राम उद्देश्य, इदंत्वं विधेयं, द्वितीयपक्षे इदंत्वमुद्देश्यं, रामो विधेयः । राम एवायमित्यादि[अ]योगव्यवच्छेदेन अयमेव राम इत्यन्ययोगव्यवच्छेदेन च सम्यक् प्रतीति(तिः) ।न च वाच्यं नटे रामोऽयमित्यादि प्रतीतिर्भ्रान्तेति । लोके बाधशिरस्काया एव प्रतीतेर्भ्रान्तव्यवहारात् । तद्वैलक्षण्येन सम्यक्त्वाभिधानात् । अयं न राम इति उत्तरकालीनबाधकज्ञाने सति रामोऽयमिति प्रतीतिस्तु मिथ्या । यथा नेदं रजतमिति बाधके सति शुक्तौ रजतप्रतीतिः । रामः स्यान्न वा इत्युभयकोट्यवलम्बनत्वेन संशयः । रामसदृशोऽयमिति सादृश्यप्रतीतिः । एताभ्यः प्रतीतिभ्यो विलक्षणया रामोऽयमिति प्रतिपत्त्या ग्राह्यो(ह्ये) नटे चर्य(र्व्य)माणो रस इत्युत्तरत्र सम्बन्धः ।

अयमेवार्थ सुबोधतरो लिख्यते[14]। यथा—श्रीशङ्कुकमतस्याऽयमर्थः । राम एवायमित्यत्र राम उद्देश्यः इदंत्वं विधेयम् । अयमेव राम इति द्वितीयपक्षे इदंत्वमुद्देश्यं रामो विधेयः । प्रथमपक्षे रामत्वमुद्दिश्य इदंत्वं विधीयते, द्वितीयपक्षे इदंत्वमुद्दिश्य रामत्वं विधीयते । न रामोऽयमित्युत्तरकालिके बाधे सति, रामोऽयमयमेव राम इति, या समा[सम्यक् प्रतीति[15]] { नि } राहार्य्यप्रतीतिरेका, प्रतिबध्यं ज्ञानं (न) [मा][16] हार्य्यप्रतीतिर्यथा प्रतिमायां नारायण इति १ । बाधकप्रतिबध्यं ज्ञानं भ्रमः यथा नेदं रजतमिति ज्ञानम् । तेन रामोऽयमित्याकारकं मिथ्याज्ञानं { तं } द्वितीयम् २ । संशयरूपं रामः स्यान्नवेति रूपम् ३ । चतुर्थी प्रतीति(तिः) रामसदृशोऽयमिति सादृश्यप्रतीतिरेताभ्यश्चतसृभ्यः प्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतीत्या ग्राह्ये नटेऽनुमीयमानो रसोऽनुमितिरूपो(प इ)त्यन्वयः । चित्रतुरगसु(स्तु) भित्त्यादौ लिखितस्तुरगः । यथा तुरगाकारे चित्रे, उक्तरूपचतुष्टयमि(म)तिभिन्ना बालकस्य तुरगोऽयमिति धी (धीः) पूर्वोक्तज्ञानचतुष्टयविलक्षणज्ञानेन गृह्यते तद्वत् । तथा चोक्तम्—

इत्यादि काव्यानुसंधानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथानभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः 'संयोगात्' गम्यगमकभावरूपात् अनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः ।

---

प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः ।
धीरसावयमित्यस्ति नासावेवायमित्यपि ॥१॥

विरुद्धबुद्धिसंभेदादविवेचितविप्लवः ।
युक्त्या पर्यनुयुज्येत स्यु(स्फु)रन्ननुभयः(वः)[११] काव्ये(कये)ति ।

**सेयमित्यादि** । नाटकस्य वचनमिदम् । ममाङ्गेषु सुधारसच्छटा अमृतरससमूहरूपा । दृशोर्निबिडकर्पूर शि(श)लाका । मनसः शरीरिणी मूर्तिमती मनोरथश्रीः । सेयं परिदृश्यमाना प्राणेश्वरी प्रियतमा लोचनमार्गं गता, दृष्ट्वा, (ष्टा) । { अहं } दैवात् च पलायितमेव { या } स्त्रिया [अहं] वियुक्तश्चाभवम् । निबिडा लोला मेघा यस्मिन् । अयं कालश्च समुपागत इत्यादि काव्यद्वयानुसन्धानबलात् । नटः प्रथमश्लोकप्रतिपाद्यमालम्बनरूपं विभावं द्वितीयश्लोकप्रतिपाद्यं उद्दीपनरूपं विभावं प्रकाशयति । तथा शिक्षया उपदेशेन योऽभ्यासः पौन(नः) पुण्ये(न्ये)न प्रवृत्तिस्तेन निर्वर्तितानि, स्वेषां व्यभिचारिणाम(मे)वानुभावलक्षणानि कार्याणि, तेषां प्रकटनेन, कारणभूतान् व्यभिचारिणः प्रकाशयति । कार्यभूतानुभावेन येनाऽनुभावं प्रकाशयति । अत एव प्रकटते(ने)न चेत्यत्र चकारः प्रयुक्तः । अथवाऽभ्यासेन निर्वर्तितं यत् स्वकार्यं कृत्रिमनिजानुभावानुभावार्जनं तत् प्रकटते(ने)न । एवं **नटेनैव** कर्त्रा **प्रकाशितैः** । ननु नाट्यसमये तात्त्विकरामादीनामभावेन रसाभावात् विभावादीनि कृत्रिमाण्येव, तौ कथं सामाजि { कां } - [कग]तां(ता) रसानुमितिरित्यत आह—**कृत्रिमैरपी**ति । नाट्यसमयैः(ये) तात्त्विकरामादीनामभावात् अस्वाभाविकैरपि कृत्रिमत्वेनानवभासमा { नत्वा

व } [नैर]नुमितिर्युक्तेतिभावः । विभावानुभावव्यभिचारिशब्दव्यपदेशत्वं अलौकिकचमत्कारकारित्वात् । एवंविधैः कारणं(ण) कार्यसहकारिभिः कृत्वा गम्यगमकभावात् संयोगात् सम्बन्धात् प्रतीयते । न तु संयोगप्रत्ययनिमित्तं, संयोगस्तु द्रव्ययोरेवेति कथमत्र वैशेषिकशास्त्रप्रतिपादितः संयोग इत्यत आह—**गम्यगमकभावादिति** । संयोगशब्दोऽत्र सम्बन्धमात्रवाचकः । स च गम्यगमकभावरूप इत्यर्थः । विभावादयस्तु गमका रसस्तु गम्यः । साध्यो गमको हेतुस्तु गम्यस्तेन गम्यगमकभावो व्याप्तिरित्यर्थः । नन्वनुमीयमानत्वेन रसस्य वह्न्यादिसादृश्यम् । { स्यान्नित्यादि } । **वस्त्विति** । वस्तुनो रामादेः सौन्दर्यबलाद् रसनीयत्वेनारब्धत्वेन कृत्वाऽन्यान्यनुमीयमानानि वह्न्यादीनि तेभ्यो विसदृशो विलक्षणः । अथवा वस्तुनोऽनुमीयमानरत्यादिपदार्थस्य निरतिशयमनोहरत्वं वस्तुसौन्दर्यं, तस्मात् । ननु त(न)टे स्थायिनो रत्यादेरभावात् कथमनुमीयमानत्वमत आह—**स्थायित्वेनेति** । तत्र भेदे (नटे)अविद्यमानोऽपि तत्प्रकाशितविभावाद्युपायबलात् स्थायित्वेन विद्यमानत्वेन सम्भाव्यमानोऽनुमितिमर्हत्येवेत्यर्थः । चर्व्यमाण(णः)स { चेतत् कारं } साक्षात् क्रियमाणः । ननु सामाजिकानामेव रसानुभव इत्येतत् कथमन्येषामपि तत्सम्भवादिति चेन्न । विकल्पासहत्वात् । अनुकार्यस्य वा तदनुभवः अनुकर्तुर्वा । नाद्यः । तस्य रामादेरतीतत्वात् सम्भोगविप्रलम्भात्मकरत्यादिप्रतीतेर्लौकिकत्वेन दुःखात्मकत्वात् । न द्वितीयः । अभिनय एवाभिनिवेशात् वस्त्वादिसम्पादनपरत्वाच्च । तस्मात् सामाजिकानां चर्च्य(र्व्य)माण इति साधूक्तम् । ननु सूत्रे विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरुक्ता त्वया चाऽनुमानाद् रसनिष्पत्तिरुच्यते इति सूत्रविरोध इत्यत आह **विभावादीति** । तथा च तैर्विभावादिभिर्यः संयोगो गम्यगमकभावरूपै(पः) व्याप्तिस्तयाऽनुमीयमानः । सामाजिकीम (कस्या)नुमानमेतादृशं, तथा अयं रामः सीताविषयकरतिमान् सीताविषयक[क]टाक्षादिमत्त्वात् । ननु अनुमीयमानस्य कथं रसनीयत्वमत आह—**वस्त्विति** । उक्तं प्राय इति । शङ्कुकमतं द्वितीयम् । अस्मिन्नपि पक्षेऽस्वरसो यथा—रत्याद्यनुमितेश्चमत्कारित्वाभावात् । अन्यथा[१०] { चैत्रः कामिनीविषयकसाक्षात्कारतत्त्वादित्याद्यु } [उ]द्रमितैरपिचमत्कारित्वापत्तेरित्य

**न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते इति भट्टनायकः ।**

---

रसादाह-तृतीयं मतं **भट्टनायक** इति । अत्र पूर्वं **भट्टनायको**ऽयमिति पूर्वं विकल्प्य दूषयति । **न ताटस्थ्येने**ति । अत्र पक्षे { रामादिमनरत्यादि[19] } सामाजिकसाक्षात्कारविषयो रसः । तत्र प्रत्यासन्नप्रियो रामो हि नटः सामाजिकश्चेति । किं गतत्वेन रसः प्रतीयताम् । तत्राद्यद्वयगतत्वं **न ताटस्थ्येने**ति । स्वसम्बन्धबहिर्भावेनेत्यर्थः । ताटस्थ्य(स्थ्यं) [नाम स्वव्यक्तिस्का ? श्रयत्वं][20] स(स्व)सम्बद्ध(न्ध) बहिर्भावो वा । एतेनाऽपि रूपेण रसो न प्रतीयते । नाप्यात्मसम्बन्धित्वेन रसः प्रतीयते । तथाभावेऽरसं[21][ऽरसत्वात् । अत्रायमभिप्रायः । रसस्य प्रती]तिः । परं(र)-गतत्वेन स्वगत्वेन वा । नाद्यः । { स } रसनीयत्वां(त्वा) भावेन सर्वदा रसस्य त(न)टे रसोऽस्तीत्येवमाकारेण तटस्थत्वप्रसङ्गात् । न द्वितीयः । अनुमीयमानत्वचर्व्यमाणत्वयोर्विरोधात् । करुणे दुःखित्वप्रसङ्गेन तत्र प्रत्यासत्त्यभावप्रसङ्गाच्चेति । स एवोत्पत्तिपक्षं दूषयति । **नोत्पद्यत इति** दण्डचक्रादीनां निवृत्तौ घटादिवत् विना(भा)वादिकारणतानिवृत्तावपि रसस्याऽवस्थाने प्रसङ्गात् । परगतत्वेन वेत्याद्युक्तदूषणप्रसङ्गाच्चेत्यर्थः । वक्ष्यमाणमभिव्यक्तिपक्षमपि दूषयति । **नाभिव्यज्यत इति** । नाप्यभिव्यज्यते इत्यस्यार्थो नाऽपि रसो लौकिकप्रसत्त्या षड्विधया साक्षात्क्रियते । अपि तु काव्ये नाट्येऽभिधातो द्वितीयेन व्यापारविशेषेण, वाचक(व्यञ्जक)त्वव्यापारेण, नाभिव्यज्यते । अभिव्यञ्जनं हि र[स]-स्य न सम्भवति । पूर्वसिद्धत्वाभावात् । तत्राऽपि च स्वगतः पस्प(रग)तो वेति पूर्ववदेव दोष इति । नाभिव्यज्यत इत्यर्थः । एवमनुमित्युत्पत्त्यभिव्यक्तिपक्षं दुषयित्वा **भट्टनायकः** स्वसिद्धान्तमाह—**अपि त्विति** । अपि तु काव्ये इति । काव्ये दोषाभावगुणालङ्कारमये, नाट्ये चतुर्विधाऽभिनयरूपे, अभिधा { तव्य } [तो द्वितीयेन] इत्ययमर्थः । काव्यात्मनः शब्दस्याभिधा भावना तद्भो-

गीकृतिरूपास्त्रयोंशास्तत्राभिधायकत्वं वाच्यविषयम् । भावकत्वं रसादिविषयम् । भोगीकृतं सहृदयविषयमिति त्रयोंशभूता व्यापारा(राः) । अत एवाभिधातो द्वितीयेनेत्युक्तम् । विभावादीनां नटस्य प्रेक्षकस्य च साधारणीक { न्द } [रणं] आत्मा यस्य स तथा विभावादि साधारणीकरणात्मनः भावकत्वव्यपारेण भावितो रसः भोगेन भोगव्यापारेणानुभवस्मृतिविलक्षणेन । कीदृशेन । सत्त्वस्य सत्त्वाख्यस्य योऽसौ उद्रेकः सर्वाङ्गीणाभिव्याप्तिस्तस्य यः प्रकाशः प्रकटनं तेन य आनन्दस्तन्मयी या संवित् ज्ञानं तत्र या विश्रान्तिश्चिद्विश्रामः से (सै)व सतत्त्वं परमार्थो यस्य स तथा तेन सत्त्वोद्रेकप्रकाशेनानन्दमयसंविद् विश्रान्तिसतत्त्वेन परब्रह्मास्वादरूपेणेत्यर्थः । तेन चर्च्य (र्व्य)त इति **भट्टनायक** । तथा चोक्तम्—

अभिधा भावना वाच्या तद्भोगीकृतिरेव च
न शब्दालङ्कृतोजाते अभिधा धि(धा)मतां ततः ॥१॥
भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः ।
तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान् नरः ॥२॥[22]

इति एतन्मतस्य **टीकान्तरे**[23] व्याख्या यथा मतान्तरमाह—**न ताटस्थ्येने**ति । ताटस्थ्यं नाम स्वव्यतिरिक्ताश्रयत्वं, स्वसम्बन्धिबहिर्भावो वा । एतेनापि रूपेण रसो न प्रतीयते । नाऽप्यात्मसम्बन्धित्वेन । [न] रसः प्रयत्नेनाऽपि, { रस } उत्पद्यते । नाऽप्यभिव्यज्यते-इत्यस्यार्थो यथा नाऽपि रसा(सो) लौकिकप्रत्यासत्त्या षड्विधया साक्षात् क्रियते । अपि तु काव्ये नाट्येऽभिधातो द्वितीयेन व्यापारेण, व्यापारविशेषेण,भाव्यमानो, विभावादिसाधारणीकरणात्मनः, भावकत्वव्यापारेण साक्षात् क्रियमाणः स्थायी यो रत्यादिको भावः सत्त्वोद्रेकप्रकाशानन्दमयरूपा या संवित् तत्र या विश्रान्तिः, पर्यवसानं,तल्लक्षणो योऽनुभावस्तेन-भुज्यते । तत्र विषय इत्यर्थः । अत्राऽयं तात्पर्यार्थो; यथा—ज्ञानलक्षणया प्रत्यासत्त्या उदासीनो नात्मगतत्वेन न वा परगतत्वेन साक्षात् क्रियमाणो रत्यादिको भावो रसः । इति तृतीयं मतम् । अथ **व्याख्यानान्तरं**यथा **नोत्पद्यत** इति । असन्निहितेभ्यः । सामाजिकरत्याद्यनुत्पादा[ना]त् आराध्यत्वज्ञानस्य प्रतिब-

**लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैः**

---

न्धकत्वात् । नाभिव्यज्यते प्रागसिद्धेः । अन्यथा कार्यत्वप्रसङ्गात् । तर्हि विभावादिभ्यः किमित्याह ?—**काव्येत्यादि** । विभावादिभिर्भाव्यमानः । व्यापारमाह—भावकत्वेति । { [24]अभिधा तिङ्निष्ठा अर्थभावनापरं नाम्नी यागादौ प्रवर्त्तिका । द्वितीयात् जातोव्यापारा विभावादिनिष्ठारसभावनाज्जननी । } भावयतीति भावक(कः) । तस्य भावकस्त्वं(स्य) । साधरणो [करण] मनियतसम्बन्धिगतत्वेनार्थप्रत्यायनम् । भाव्यमानो मुहुर्मुहुःस्मर्यमाणः । तेन भावनोपनीतरामादिरत्यादिः सामाजिकमनसि सन्निकृष्टघ्राणोपनीतसौरभ्यमिव, चक्षुषि स्थायी, अन्तरान्तरा विघ्नेऽप्यनुच्छिद्यमानः भोगेन साक्षात्कारेण भुज्यते, विषयीक्रियते । भोगस्वरूपमाह—**सत्त्वेत्यादि** । सत्वं नाम कश्चनान्तरो धर्मो, रजस्तमोऽतिभवेन । तस्य प्रादुर्भाव, उद्रेकस्तेन प्रकाशते प्रादुर्भवति, या आनन्दमयी संविग्न(त् त) त्र विश्रान्ति (न्तिः) । योगिनां विगलितवेद्यान्तरत्वेन स्थितिस्तत्र कृतत्वेन तत्समाध्यवस्थातुलयेनेति । यावद् भू(भु)ज्यते विषयीक्रियत इत्यर्थः । भावनोपनीतो रामादिरत्यादिश्चिदानन्दाख्य साक्षात्कारविषयो रसपर्यवसितोऽर्थः । विश्रान्तिगतत्वेनेति पाठे गमिर्ज्ञानार्थो, भावे, निष्ठागतत्वं ज्ञानत्वम् । संविदि विश्रान्तिर्यस्य स तथाभूतज्ञानत्वं, यस्येति पूर्ववद् बहुव्रीहिस्तदेकात्मनेति पर्य्यवसितार्थः, इति **भट्टनायकः** । **कश्चन[25] विद(व)रणकारः** । नाऽयमपि पक्षः साधु(धुः) । सम्भोगेच्छारूपस्य रागा (मा)दिरत्यादेः सुखरूपत्वाभावेनारसत्वात् । तस्य तदेकरूपत्वात् । न च सुखात्मकज्ञानविषयत्वेन तस्यास्वादता प्रमाणाभावात् । एवं ज्ञानविषयस्य घटादेरपि ज्ञानताप्रसङ्गात् । किञ्च रागसम्भेदे चिदानन्दप्रकाशो न स्यात् । रागिण एव काव्यनाट्यादितश्चमत्कारादि { तश्चमत्कारादि रक्तस्य तद्विरहात् । } [26]**टीकान्तरे**ऽस्वरसोऽत्रोक्तो लिख्यते—यथा प्रतीतिव्यतिरिक्तस्य भोगशब्दार्थस्य विव(वे)क्तुमशक्यत्वात् ।

**ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिकः**

---

उत्पत्त्यनङ्गीकरे रसस्य नित्यत्वप्रसङ्गात्। अभिव्यक्त्यनङ्गीकारे रसस्यासत्त्वप्रसङ्गात्। उत्पत्त्यभिव्यक्तिव्यतिरिक्ततृतीयपक्षसद्भावे प्रमाणाभावादित्यरुच्याऽभिनवगुप्तमतं निर्दुष्टत्वात् सिद्धान्तयन्नाह—**लोक** इति। अथवा **भट्टनायक**मतेऽस्वरसो यथा[27]—रतिविषयज्ञानलक्षणप्रत्यासत्तेरभावात्, यतो यदवच्छेदेन, धर्मः पूर्वं विशिष्यादयतस्तादृशोऽवगमो-यथा ज्ञानलक्षणा प्रत्यासत्तिः, सुरभिचन्दनमित्यत्र पूर्वं घ्राणेन चन्दने चन्दनत्वावच्छेदेन सौरभमवगतमस्तीति कृत्वा घ्राणजन्यो यः सौरभानुभवस्तज्जन्यो यः संस्कारस्तज्जन्या या स्मृतिः, सा ज्ञानप्रत्यासत्तिर्भवतु। न चाऽत्र रत्यादिको भावः किञ्चिदवच्छेदेन पूर्वमवगतोऽस्तीति ज्ञानलक्षणप्रत्यासत्तेरभा— { याचनभया } [वात्]। रत्यादिको भावः साक्षात्क्रियते इत्यस्वरसात् चतुर्थमवतारयति—**लोके** इत्यादि। लोके प्रमदादिभिः कारणादिभिरभिव्यक्तः सामाजिकानां वासनात्मतयो स्थितो रत्यादिको भावः शृङ्गारादिरस इति योजना। ननु काव्यादिश्रवणकाले प्रमदादीनामसत्त्वात् कथं कारणत्वमित्यत आह—**कारणत्वादी**ति। किं लक्षणैः प्रमदादिभिः कारणत्वादिपरिहारेण अलौकिकविभा { ग } वादिशब्दव्यवहार्यैा(र्यैः)। ननु तेषां विभावादिशब्दव्यवहार्य्यत्वं कथं स्यादिति अतः आह—**विभावनादी**ति। तथा च विभावनादिव्यापारकत्वात् विभावादिशब्दव्यवहार्य्यत्वं तेषां प्रमदादीनां स्यादेवेतिभावः। अयमर्थः। यद्यपि काव्यश्रवणकाले प्रमदादीनां सत्त्वं नास्ति, तथापि विभावनादिव्यापारस्तेषामस्त्येवेति तेषां विभावादित्वमस्त्येव, यतो विभावादि[भि] रेव रत्युद्बोध इति भावः। ननु श्रोत्रियाणां वैराग्यासक्तमानसानां काव्यश्रवणकाले कथं रत्युद्बोध इत्यत आह—**स्थायी(य्य)नुमानाभ्यासपाटववताम्**। स्थायिनो रत्यादेरनुमानवदभ्यासोऽनुमानाभ्यासस्तस्य पाटवं, पठतां येषां ते सामाजिका बिव-

**नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा**

क्षिताः। अयमर्थो-यथा धूमज्ञानानन्तरमनुमानाभ्यासवतां वह्न्यनुमितिस्तद्वत् झटिति विभावादिभीरत्युद्बोधस्तादृशाश्च सामाजिका विवक्षिताः । न श्रोत्रियादय इत्यर्थः । ननु आराध्यत्वज्ञानस्य प्रतिबन्धकत्वात् कथं तेभ्यः सामाजिकनिष्ठो रत्युद्बोधो-यतः शी(सी)ताया आराध्यत्वात् तद्विषयको रत्युद्बोधो न भवतीत्यत आह—**शत्रोरिति** । एवं चकारत्रये स्वीकारनियमः। निषेधत्रये च परिहारनियमः। आत्मा प्रेष्ठः शत्रुर्द्वेष्यः। उदयेतर(उभयेतर)स्तटस्थ उदासीनः। वर्णनीयत्रैविध्यात् त्रिविधोपादानम्। तादृशस्याज्ञानात्। साधारण्येन प्रतीतेर्विभावादिभिर्व्यक्तो रसः। ननु सामाजिकानां विभावादिज्ञानकाले स्थायिनो रत्यादेरभावात् कथमभिव्यक्तिरित्यत आह—**वासनात्मतया स्थित इति** । यथा स्थायी स्मरणजनकसंस्कारसम्बन्धिर्द(द)र्शनादुद्बोधो भवति, तद्वदयं काव्यादिश्रवणकाले स्थायी रत्यादिको भावोऽपि विभावादिज्ञानानन्तरमु { द्बोधो—सु } द्बुद्धो भवतीत्यर्थः। ननु तथापि नियतप्रमातृगतत्वेन स्थितस्य रत्यादेः पारिमित्यात् तदुद्बोधः कथं रसीभवेत् यदाह—

प(पा) रिमित्याल्लौकिकत्वात् सान्तरायतया तथा ।
अनुकार्य्यस्य रत्यादेरुद्बोधो न रसीभवेदिति ॥

अस्यार्थो यथा पारिमित्या[दा]ह-**साधारण्यादि**त्यर्थः। तथा रसस्य प्रमातृगतत्वेनासाधारण्यं, सान्तरायतयेति, यथा व्यवहितरामादिर्न रसीभवति अनुकार्य्यस्य रामादे रत्यादेर्नरसाभावता इति वचनादित्यत आह-**नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात्** । यद्यपि नियतप्रमातृगतत्वेन स्थितस्तथापि साधारणोपायो विभावादिः, स च सीतादिर्विभावो न सीतात्वेनोपस्थितो, न रामसम्बन्धित्वेन, न वा स्वसम्बन्धित्वेन, न वा परसम्बन्धित्वेन, स्वविभावादेः काव्यादिश्रवणकाले साधारणोपायबलात् साधारण्येनैव गोचरीकृतो रत्यादिरित्यर्थः। ननु तथापि वेद्यान्तरस्य घटादेर्विषयीकरणात्, यथा कदाचित् विभावाद्युद्बोधकाले घटादेरपि

**सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत् सर्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः ।**

---

विषयीकरणात् कथं रत्युद्बोधस्य रसोभाव इत्यत आह—**तत्कालेति** । तस्मिन् रत्युद्बोधकाले विगलिता या परिमिता प्रमातृकता, तद्वशादुन्मिषितो यो वेद्यान्तरसम्पर्कस्तेन शून्यो,परिमितो भावो यस्य स एवम्भूतो यः प्रमाता, तेन प्रमात्रा । अयमर्थः । तात्पर्यार्थः । परिमितप्रमातृताया विगलितत्वात् ममैव रत्युद्बोध इति परिमितप्रमातृता गता । तेन रत्युद्बोधकाले घटादिकं न भासते एव । भूतलादिज्ञानकाले घटादिकमिति तत्र प्रमातुर्भूतलस्य परिच्छिन्नत्वात् परिमितत्वं, प्रकृते त्वेवं नास्ति । रतेः प्रमातुः परिमितत्वं नास्तीति भावः । नत्वत्र प्रमाणाभाव इत्यत आह **सकलेति** । इदं प्रमातुर्विशेषणम् । सकला ये सहृदयाः सामाजिकास्तेषां यः संवादः { प्रतीय } (प्रतिहत?)विप्रतिपत्तिस्तद्भाजा साधारण्येन । इदं पदं पूर्वं लापितमेव । तनू(दु)द्बोध(धः) । विशिष्टचैतन्यस्य । प्रमातृत्वात् । रत्याद्यवच्छिन्नचैतन्यस्य विषयत्वात् । विषयप्रमात्रोरभेदे कथं प्रमातृविषयभावस्तयोरेकत्वादित्यत आह—**स्वाकार इवेति** । यथा स्वात्मा स्वात्मनि विषयस्तथा चाहमात्मानं जानामीतिवद्विषयविषयीभावो रत्याद्यवा(व)च्छिन्नचैतन्यस्योद्बोधरूपप्रमित्यवच्छिन्नस्य चेत्यर्थः । ननु रत्याद्यवच्छिन्नचैतन्यस्य रसत्वे विभावादिज्ञानप्राक्कालेऽपि रसीभावः स्यादित्यत आह—**चर्व्यमाणते(तै)कप्राण** इति । चर्व्यमाणता आस्वादस्य विभावादिसम्बन्धः । सा च चर्व(र्व्य)माणा विभावादिसमूहालम्बनसाध्येवेत्याह—चर्व्यमाणता च विभावाद्यनुसन्धानम् । तदेकप्राणस्तद(त्) साधारण इत्यर्थः । तथा च विभावाद्यनुसन्धानं विना न रत्युद्बोधः । अनुद्बुद्धस्य रत्याद्यवच्छिन्नस्य चैतन्यस्य न रसत्वमिति भावः । ननु तथाहि विभावादिज्ञानोत्तरं प्रहराद्यन्तरेऽपि रत्याद्यवच्छिन्नस्य चैतन्यस्य न रसत्वमिति भावः । ननु विभावज्ञानमेव प्रयोजकमस्तु नत्वनुभवज्ञानमपीत्याशङ्क्याह—**पानकरसन्यायेनेति** ।

**स च न कार्यः। विभावादिविनाशेऽपि तस्य संभवप्रसङ्गात्। नापि ज्ञाप्यः सिद्धस्य तस्यासंभवात्। अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत् न क्वचिद्दृष्टमित्यलौकिकसिद्धेर्भूषणमेतन्न दूषणम्।**

---

यथा पानकरसे सर्वेषां शर्करादीनां मिलिता[ना]मेव प्रयोजकत्वं, तथा विभावव्यभिचारिणां मिलितानामेव रसीभावे प्रयोजकत्वमिति भावः। अतः परं रसस्वरूपमाह—**पुर इति**। अथवा रसस्य लोकोत्तरकार्यवत्त्वमाह—**अलौकिकेति**। तदेव दर्शयति पुर(रः)[परि] स्फुरन्नित्यादिना। **सर्वाङ्गीणमिति**। क्रियाविशेषणम्। { नवरं } अलौकिकस्तु स्वानुभावे(वै)कवेद्य इत्यर्थः। ननु लौकिकरसवत् सोऽपि विभावादिनां कार्य एवाऽस्तु कथं विभावादि { र } भिव्य(र्व्य)ज्यत इत्यत आह विभावाद्यन्वयव्यतिरेकबलात् रसस्योत्पत्तिरस्तु नेत्याह—**सचेति**। रसो विभावादिकार्यो न भवतीत्यर्थः। तत्र युक्तिमाह—**विभावेति**। निमित्तकारणानां दण्डादीनां भावो घटादेरिव रसस्यावस्थानप्रसङ्ग इत्यर्थः। अस्तु तर्हि रसो ज्ञाप्यः, नेत्याह—ननु चक्षुषा घटो यथा साक्षात् क्रियते तथा विभावादिभिरपि रसो रत्यादिः साक्षात्क्रियताम्। नत्वभिव्यज्यत इत्यत आह—**नाऽपि ज्ञाप्य इति**। अज्ञानमया(यत्वे) स्थितो ज्ञाप्यो भवति, यथा घटो दीपादिना। रसस्तु न तथेत्यर्थः। उपलक्ष[ण]मेतत्। शब्देनाऽपि तस्य रत्याद्यवच्छिन्नचैतन्यस्य बोधयितुमशक्यत्वादित्यपि बोध्यं, कुत इत्यत आह—**सिद्धस्य तस्याभावादिति**। सिद्धस्य तस्येति पदेन प्रतिपादितस्यापि रत्याद्यवच्छिन्नस्य चमत्करणीयत्वाभावात्। कथं तर्हि प्रतीयत इत्याह—**अपि त्विति**। स दीपादिव्यञ्जनीयलौकिकघटादिव्यङ्ग्यविलक्षणत्वेन व्यञ्जित(तः) चर्वणीय इति आस्वादनीय इत्यर्थः। ननु कारकज्ञापकव्यतिरिक्तहेत्वभावादेतदसङ्गतमित्याशङ्क्या तस्य एवालौकिकत्वमुच्यत इति। न किञ्चित् दूषणमित्याह—**कारकेत्यादिना**। एव(वं)तर्हि रस उत्पद्यत इति व्यवहारविरोध इत्याह—**चर्वणानिष्पत्ते(त्ये)त्यादि**।

**चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम् । लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम् ।**

---

ननु तन्तुना पटो जन्यते, आलोकेन घटो व्यज्यते, रसोऽपि कारकज्ञापकाभ्यामन्यः कोऽपि न दृष्ट इत्याशङ्क्येति । **कारकेति** । व्यञ्जनया रसो व्यज्यत एवा(व) । तये(थै)वव्यञ्जनावृत्तिसिद्धिरित्यलौकिकसिद्धेर्भूषणमेतत् न तु दूषणमित्याह—न **क्वचिद्दृष्टमि**ति । ननु यदि रसो नोत्पद्यते तदाऽस्मात् काव्यात् सामाजिकस्य रसनिष्पत्तिरिति व्यवहारो न स्यादित्यत आह **चर्वणानिष्पत्ते(त्त्ये)ति** । तथा चर्वणानिष्पत्त्या तन्निष्पत्तिरुपचरितेति । यथा स्वर्गोत्प { त } त्या स्वर्गी उत्पन्न इति कृत्वा । **कायो** (र्यो) त्यु (प्यु) च्यताम् । कार्योऽपि रसो भवेत् । ननु तथाऽपि एतस्मात् काव्यात् रसप्रतीतिर्जातेति व्यवहारो न स्यात् । कुतो रसस्य स्वप्रकाश [स्य] सुखात्मक [स्य] प्रत्येयत्वाभावादित्यत आह **प्रत्येयोऽपी**ति । अथ **लौकिकप्रत्यक्षादी**ति । त्रिभिर्विशेषणैः स्वसंवेदनवैलक्षण्यमुपपादयति । **लौकिके**ति । लौकिकानि लोकव्यवहार्याणि यानि प्रत्यक्षानुमानागमोपमा [ना] दीनि । तेभ्यो विलक्षण(णः)शब्दः प्रत्येकं सम्बध्यते । **ताटस्थ्ये**ति । परमात्मानं[28] (प्रमाणताटस्थ्यं) विना यः परस्थूलस्यार्थस्यावबोधः तत्ताटस्थ्यम् । तेन योऽवबोधो, ज्ञानम् । तेन शालि, यत् मितयोगिज्ञानम् । तस्मात् । तथा वेद्या विषयास्तेषां संस्पर्श उपरागस्तेन सहितं स्वात्मपर्यवसितं आत्मदर्शननिष्ठम् । अत एव परिमितेत रं अपरिमितम् । सूक्ष्मार्थग्राहकम् । यद(द्) योगिसंवेदनम् । तस्मात् विलक्षणम् । अतएव लोकोत्तरं, यत संवेदनं, तद् गोचर इति । **प्रत्येयोऽप्यस्तु** । समासो यथा—लौकिकप्रत्यक्षादिप्रमाणविलक्षणं च, ताटस्थ्यावबोधशालिमितयोगिज्ञानविलक्षणं च, वेद्यसंस्पर्शरहितस्वात्ममात्रपर्य्यवसितसि(मि)तेतरयोगिसंवेदनविलक्षणं च, यत् स्वसंवेदनं, तद् गोचर इति । उपचारात् प्रत्येयो ज्ञेयोऽप्यमिधीयताम् । लौकिकप्रत्यक्षं घटादिप्रत्यक्षम् ।

तद् विलक्षणम् । रसास्वादो (दो) हि लौकिकप्रत्यक्षविलक्षणा, यतो रसः सुखरूप एव तत्रा (त्र) भासते, न त्वसुखरूपा (पः) । घटादयः पदार्था भासन्ते । सन्निकर्षोऽन्यतमजन्याऽप्रत्यक्षप्रमाणं चक्षुरादिजन्याप्रमाणसत्वेत्(त)तो विलक्षणम् । योगिज्ञानवैलक्षण्यमाह—**ताटस्थ्येत्यादि** । इह योगिनो द्विविधा(धाः) । आ-आरुरुक्षव आरूढाश्च । समाध्यधीनकृतात्मसाक्षात्कारं (राः) सवासनमिथ्याज्ञानस्य सम्यगगनुच्छेदानुच्छिन्नभेदावनासा (साना) योगजधर्मप्रत्यासत्त्या समाधिसमये गृहीतसर्वविषयाः पूर्वे । सवासनमिथ्याज्ञानविनाशात्(द)द्वैतवासनावासितान्तःकरणाः सदातनसंद्वानन्दानुत(भ)वेन बहिरासङ्गभङ्गा जडोन्मत्तपिशाचबद्धमन्तः शुकदेवप्रभृतयो जीवन्मुक्ताः परे । तत्र प्राथमिकज्ञानतो वैलक्षण्यं योगिज्ञाने { त्यते } [इ]त्याह—**परिमितं** अभ्यासदशायां मननादिकारणोघेन समाधेः कदाचित् { कतयात् } समय एव प्रादुर्भूतं, ताटस्थ्येन परस्परसम्बन्धाग्रहेणावबोधो, योगजं धर्मस्यैवं प्रत्यासत्त्या वर्तमानाऽतीताऽनागतविषयाणां प्रकाशनं, तच्छालि, तत्साक्षात्कारेणैव सर्वविषयावलम्बनात् । अवबोधपदेन विषयप्रकाशनज्ञानधर्मस्यैवाऽभिधानात् रसस्य विगलितवेद्यान्तरत्वेन ततो व्यतिरेकः । तस्य पूर्वविषयकत्वारूढयौ(यो)गिसंवेदनाव्यतिरेकमाह—**वेद्येत्यादि** वेद्यो विषय आत्मेतरः । हेतुमाह—**स्वात्मेत्यादि** । शोभन आत्मा स्वात्मा । प्रच्छिन्नसवासनमिथ्याज्ञानत्वेन विषय एव विषयो, प्रत्येयो, ज्ञाप्यः । तथा व्यञ्जिते प्रत्येयोपचारः । अयमत्र भावः । व्यञ्जनावृत्त्या यतो व्यञ्जितोऽत प्रत्येय इत्यर्थः । अभिधीयतामभिधया बोध्यता[म्] । ननु पूर्ववदुपचारेण तदिति । अथवा **व्याख्यानान्तरं**[२९] यथा—अथ साधकयोगिज्ञानवैलक्षण्यमाह—साधका योगिनश्च येषां तत्त्वसाक्षात्कारो जातो नास्ति । किन्तु श्रवणमननादौ ये प्रवर्तन्ते । **ताटस्थ्येति** । ताटस्थ्यावबोधो घटो भिन्नः घटो(ऽ)भिन्न इत्यादि । एतादृश्यो (शः)यस्ताटथ्यावबोध तच्छालि तद्रूपं यस्मिन् मितं योगिज्ञानं, अतीतानागतगोचरं योगिज्ञानम् । **स्वात्मेति** । स्वात्ममात्रपर्यवसितं आत्ममात्रविषयकम् । परिमितेतरं अविच्छिन्नप्रवाहरूपं । एवम्भूतं यत् योगि संवेदन(नं)सिद्धयोगिज्ञानम् । साधकयोगिज्ञानयोरयमेत्र विशेषः । यदेकत्र साधकयोगिज्ञानेऽतीतानागतघटादिकं

तद्ग्राहकं च न निर्विकल्पकं विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकं चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्। उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः।

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम्, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः।

---

भासते, सिद्धयोगिज्ञाने तु आत्ममात्रं भासते। रसे तु रत्याद्यवच्छिन्नचैतन्यमात्रमेव भासते नान्यत् किञ्चिदिति तद्वैलक्षण्यमेव चैतन्यस्येति, एतावता लौकिकप्रत्यक्ष, १ साधकयोगिज्ञान २ सिद्धयोगिज्ञान ३ विलक्षणं स्वसंवेदनं पर्यवसितम्। एतावता लौकिकानि(न)न्दाऽवच्छिन्नचैतन्यं रस इति सिद्धम्[30]। **तद्ग्राहकमाह—विभावादी**ति। न हि निर्विकल्पके विभावादिकं भासते। नाऽपि साक्षात्काररूपं सविकल्पकं, अलौकिकानन्दमयस्य तस्य लौकिकेन्द्रियजन्यसाक्षात्कारविषयत्वात्। उपलक्षणमेतत्। अनुमितिविषयत्वाभावात्, शाब्दज्ञानविषयत्वाभावात् ये(च्चे) त्यपि प्रष्टव्यं किन्तु व्यञ्जनावृत्तिजनितज्ञानविषयत्वमिति निष्कर्षः। ननु निर्विकल्पकस्याऽपि न विषयः सविकल्पकस्याऽपि न विषय इत्येतादृशं कुत्रदृष्टमस्ति[इति] चेत्, उभयाभावरूपत्वेनैवालौकिकत्व सिद्धेर्भूषणमेतदित्याह—**उभयाभावरूपे**ति। उभयाभावस्योभयरूपत्वं लोके न दृष्टचरं येन तथात्वं स्यादित्याह—**लोकोत्तरना(ता)मेवे**ति **श्रीमदाचार्या अभिनवगुप्तपादाः**[30A] इत्यत्राचार्य पदग्रहणेन बहुवचनेन चाऽयमेव पक्षः प्रमाणिक इति सूचितम्। अनेन च **गुप्ता नाट्यलोचनकाराः**।

ननु विभावानुभावव्यभिचारिसंयोगादमुकस्य **रसस्य** निष्पत्तिरिति विशेषणम्, किमिति नोच्यत इत्यत आह—**व्याघ्रादय इत्यादि**। अथवाऽन्य-

वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥
इत्यादौ ॥२७॥

परिमृदितमृणाली म्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोतः ॥२८॥

इत्यादौ

---

थाभासदर्शनं यथा—ननु विभावादीनां प्रत्येकाश्चाद्ये सूत्रे द्वन्द्वेन भवदीयसूत्रे च, तैरिति बहुवचनेन किमिते(ति)साहित्यमभिहितमित्यत आह **व्याघ्रादय** इति । एते हि भीरूणी(रुणि) भयमिव, वीराणामुत्साहमपूर्वदर्शिनां विस्मयं, व्यापादितबन्धूनां क्रोधमिति तन्मात्रोपनिबन्धेऽपीत्याह—**अश्रुपातादय इति** । शृङ्गारस्य विप्रलम्भस्य चिन्तासंस्कारोद्बोधको ध्यानाख्यो ज्ञानविशेषः । शृङ्गारे चिन्ता च गतरूपादीनां वी(वै)रस(स्य)दाया(यि)नां, करुणे बन्धुगतोपकारादीनां, भयानके भयहेतुगतचण्डत्वादीनां ध्यानस्य परिपोषकत्वात् पृथगेकैकमते(नै)का-न्तिकत्वाद् व्यभिचारित्वादिति व्याख्यानमेव **मुनिकृते**[ऽ]स्मत्कृते चेत्यादि । अथानैकान्तिकत्वं सूक्ते प्रकटमपि सुबोधार्थं दर्श्यते—यथा भयानकस्य व्याघ्रा-दयो विभावा, अश्रुपातादयश्चानुभावाः चिन्तावर्यो(दयो)ऽप्यनुभावा, एते यद्यपि परस्परं व्यभिचारिणो; यतो व्याघ्रो विभावो वीरेऽपि वर्तते तथा भयानकेऽपि वर्तते, तथा च तत्तद्रसेऽनुभावा व्यभिचारिणश्च। तत्तद्विशिष्टो यो विभावः स तु न व्यभिचरतीति मिलितं तत् त(त्)द्वयमात्रं(मत्र?) विश्रान्तमेवेति । विवेकगत-{ नु } विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति सामान्येनोक्तेऽपि व्य-भिचार एव यतः केवलविभावेभ्यः, केवलव्यभिचारिभ्योऽपि, रसप्रतीतिर्दृश्यते, तत्र मिलिता न सन्तीति । तत्र कथं ते रसो व्यज्यत इत्यत आह—**वियदिति** । अथवा [81]भासान्तरं (व्याख्यान्तरं ?) यथा—नन्वेवं वक्ष्यमाणेषु लक्ष्येषु कथमेकैकतोऽपि रस इत्यत आह—**वियदिति** ।

दूरादुत्सुकमागते विवलितं संभाषिणी स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किंचाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥२९॥

इत्यादौ च

यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां च व्यभिचारिणां केवलानामत्र स्थितिः तथाप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति ।

---

मुग्धे विवेकरहिते दयिते, प्रसीद प्रसादं कुरु । एवमुद्दीपनोदये मानभङ्गो भविष्यत्येव । किमिति दयितस्य प्रणतिमुपेक्षसे । दयितस्य न तु स्वामिनः । नभसि आकाशे । दिशि सुविचमानं[32](सुविभाव्यमानं)वैरिणमाह—अलय इव मलिना अम्बुगर्भाश्च मेघा यत्र । अलीत्यनेन सादृश्यादुद्दीपनान्तराणामलीनां स्मारणम् । अम्बुगर्भत्वेनापृष्टत्वात् चिरस्थितिमधुकरकोकिलाभ्यां साहित्ये नोक्तजननं (न कूजनं),-केषां वनकोकिलानां वर्षास्वपि मदः श्रीसम्पत्तिः सम्पद्वशादकालेऽपि कोकिलकूजितोदयः । अभिनवा अङ्कुरा यत्र एवंविघो(ध)को मध्यभागो यस्य । तथाभूतष्टङ्कः, पाषाणप्रायं कठिनस्थानं, दारको यत्र सा तथा । **टीकान्तरे**[33] चैव प्रमदकोकिलध्वनिभिरलङ्कृता भूमिर्नवाङ्कुरचिह्नबन्धेति व्याख्या । अत्र आकाशादय उद्दीपनविभावा, दयित इत्यालम्बनविभावः, एतैरेव केवलै रसः प्रतीयते । इत्याद्युदाहरणेषु यद्यपि केवलानां विभावादीनां स्थितिस्तथाऽप्यन्यतमद्व—या { त } क्षेपः कर्तव्यस्तथा च सति व्यभिचारो न स्यात् । अन्यतम इति । विभावापेक्षया चाऽनुभ(भा)व[व्यभिचारिभाव]योराक्षेप इति । **प्रसीदेति** । पदमहिम्ना कटाक्षभ्रूजोत्क्षेपाद्यनुभाववर्गो, मुग्धपदाच्च व्यभिचार(रि)वर्गा, आक्षिप्यते(न्ते)। प्रथमे वियदित्यत्रालम्बनोद्दीपनविभावा, द्वितीये म्लानात्वादयश्चिन्ताद्यनुभावाः कथ्यन्ते । **परि[मृदिते]ति मालतीमाधवे** पद्यम् । नायकं प्रति दूतिवचनम्[34] । परिमृदिता करतलद्वयमर्दनेन शिथिलीकृता मृणाली स्वल्पमृणालम् । बिशिनी ।

तद्विशेषानाह

(सू० ४४) शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥२९॥

---

म्लानिश्चिन्ति(न्ता)तः । क्रियासु परिवारप्रार्थनाभिरेका प्रवृत्तिर्यत्र कुत्रचित् ततः आलस्यम् । अभिनवस्य करिणो दन्तच्छेद { स्वद } [का]न्तस्य, कोमलत्वेनाऽऽशुरक्तसम्बन्धः, तेन दुग्धां (ग्धा)लक्तकमिश्रणवर्णनाभ (भः) । निष्कलङ्कस्य कलामात्रावशिष्टस्य लक्ष्मी(क्ष्मीं)शोभां, ततः क्षामता पाण्डुता च । क्षामत्वेऽपि न शोभाच्युतिः । कपोलो न तु कपोलौ । एकः करिदन्तकान्तः तदितरश्च पाण्डुः कौमार्य्येणाशु सर्वतः पाण्डिमानुदयात् । विप्रलम्भानुभावोऽयम् । **दूरादे(दि)**त्यादिः । इतोऽन्यत्र { माया त्विति } (मात्रत इति?) । शङ्कातः । उ(औ)त्सुक्यम् । दूरतो दर्शनेन समौत्सुक्यमनेनावगतमिति । लज्जयादि चलितं तिर्यक्कृतं; सम्भाषिणि सम्यग्भाषिणि । अपूर्वालापेन हर्षोदयात् नयनविस्फारः । संश्लिष्यति सम्पर्कांक्षया सान्निध्यं गच्छति । अप्रसाद्यैव स्पर्शमिच्छतीति । रो(रु)षारुणम् । क्रोधात् सविधं परित्यज्य स्थानान्तरं गच्छन्त्या अञ्चलग्रहणम् । किञ्चिदित्यर्थे किंचि(चे)ति । ततः कोपप्रकर्षे भूया(यः) चरणानतिश्चरणशिरःसंयोगस्तेन व्यतिकरः सम्पर्को, यस्य दयितस्य, स्पर्शनेन नत्योमा(पा)येन च, मानभङ्गात् प्रसादः । तदनुभावश्च बाष्पाम्बु । तत्पूर्वमसूयादिभिः । कठिने चेतसि द्रवीभावाऽभावात् अम्बुपदं बाहुल्ये । ईक्षणं दृष्टिः । प्रपञ्चप्रकारवैचित्र्यम् । जातागसि कृतापराधेऽतः प्रेयसि प्रकृतिप्रिये । प्रीणातीति प्रियः । उक्तोदाहरणेषु प्रकृतं योजयति । **यद्यपी**ति । वियदित्याद्यपद्ये मुग्धादयितौ मेघाद्याश्चालम्बनोद्दीपनविभावाः, द्वितीये म्लानत्वादयश्चिन्ताद्यनुभावाः, तृतीये दूरादित्यत्र तदनुभावमुखेन प्रतीयमाना औत्सुक्यादयः सञ्चारिण', केवलानां बाहुल्येनोपदानात्, तथैव प्रतीयमानानाम् । **तथापी**ति नानैकान्तिकत्वमित्यनेन सम्बन्धः। असाधारणं झटित्याद्व्यापकत्वं, तनुकष्टेन कल्पनम् । अन्यतमस्यैकोपनिबन्धे द्वयस्याक्षेपः । स च व्यञ्जनयैव । वियदित्यादौ प्रणतिरनुभावः प्रसादप्रार्थनोन्नेयासूया च संसारिणीति त्रितयसाहित्यान्न व्यभिचारः । परि[मृदिते]

**तत्र शृङ्गारस्य द्वौ भेदौ । सम्भोगो विप्रलम्भश्च । तत्राद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तत्वादपरिच्छेद्य एक एव गण्यते । यथा**

---

त्यादौ वक्ता माधवो, मालती य(च) विभावौ, प्रकरणगम्यौ; म्लानत्वादिगम्याश्चिन्तादयाः सञ्चारिणः; दूरादित्यादौ मानिनीप्रेयांसौ विभावौ, चरणानतिरनुभावः, विचलनादिगम्या व्रीडादयः सञ्चारिणः । यत्र तु झटिति ना(क्षा) क्षेप(पः) { णं } , तत्र योग्यतयैव काव्यव्यवहार इति । **तद्विशेषानिति** । सामान्यज्ञानानन्तरं तत्रैव शिष्यजिज्ञासोदयात् अष्टाविति । तेन[35] बाल्येन रसत्वं अधिकस्यात्रे(त्रै)वान्तर्भावा[त्] च । **नाट्य** इति । अभिनया[त्म]के नाट्ये काव्येऽष्टौ रसाःशृङ्गारादय । तत्र प्राग् शृङ्गाररसव्याख्या । यथा श्रयन्त्येनं जनः (नाः) शृङ्गारः । पुंक्लीब[36] लिङ्गःद्वारशृङ्गारेत्यारान्तो निपात्यते । रसेषु शृङ्गमुत्कर्षं नि(न)यतीति वा शृङ्गारश्चासौ रसश्चेति शृङ्गाररसः । सामाजिकै रस्यते चर्व्यत इति रसः । तत्र पूर्व(र्वं)शृङ्गारस्य लक्षणमुच्यते । पूर्वं सामान्येन रसलक्षणं निरूप्यते । ततो विशेषेण ।

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुच(दुत्वं) स्थायीभावो रसो मतः[37] ॥१॥

एतैर्मिलितैः स्थायीभावः स्वाद्यतां चर्व्यमाणरूपनासा(तामा)गतः । कुत्रचिद् विभावानुभावाभ्यामेव । कुत्रचिद् विभावेन । कुत्रचिदनुभावेन वा । कुत्रचिद् व्यभिचारिणा वा, सात्विकेन वा । एवमेकेन द्वाभ्यां बहुभिर्वेत्यर्थः । अयम { ना } भिप्रायः । विभावादिभिर्मिलितैरेव रसः समुत्पद्यते । परं तु यत्र येन रसः चमत्कारित्वेन समुत्पद्यते तत्र तस्य मुख्यत्वम् । अन्ये गम्या भवन्ति । ते कियन्त इत्याह—शृङ्गारादयोऽष्टौ नाट्ये रसाः स्मृताः । अथ रसानां क्रमेण लक्षणमुच्यते । तत्राऽपि शृङ्गारस्य प्राधान्येन पूर्व(र्वं) लक्षणं निरूप्यते ।

"रम्यदेशकलाकालवेषभोगादिसेवनैः ।
प्रमोदात्म(त्मा)रतिः सैव यूनोरन्योन्यस(र)क्तयोः ॥
प्रकृष्यमाणः (प्रकृष्यमाणा) शृङ्गारो रसो नाम हि जायते[38] ।"

**अन्योन्यरक्तयोरिति** ॥ यत्रान्योन्यं स्त्रीपुरुषयोरनुरागस्तत्रै(त्र) शृङ्गाररसो गीयते । केवलं स्त्रियः, केवलं वा पुंसोऽनुरागः, स च रसाभास एव । यूनो-रिति नान्ययोरेतेन मित्रभ्रातृबन्धुसुहृद्गुरुमुनिदेवतादिषु रतिरेव । न तु शृङ्गार इति । शृङ्गारस्य **द्वौ भेदौ**[39] । मूल एव व्याख्यायमानौ स्तस्तथापि सुबोधाय विवेच्येते । **संयोगो विप्रलम्भश्चेति** । तत्र संयोगस्य लक्षणं यथा—

अनुकूलौ निषेवेतां(ते) यत्राऽन्योन्य(न्यं) विलासिनौ ।
दर्शनस्पर्शनादीनि न(स)संयोग इति स्मृतः ॥१॥[40]

अस्याऽपि बहवो भेदा जायन्ते। अन्योन्यावलोकनम् । अन्योन्यसंभाषणम् । अन्योन्यस्पर्शनम् । अन्योन्योपालम्ब(म्भा) { ना } दि च । तत्रापि विभावजोऽनुभावजो व्यभिचारिजः सात्त्विकजश्चेति । तत्र नायकनायिकयोरुत्तममध्यमाधमभेदेन । तत्राऽप्यवस्थाभेदेन । बालयुवतीप्रौढवृद्धादिभेदेन । तत्राऽप्यष्टनायिकाभेदेन च । यथासम्भवं बहवो भेदा भवन्ति । एषामुदाहरणानि **ग्रन्थान्तरे**[40A] ज्ञेयानि । विस्तारभयान्न लिख्यते । अथ विप्रलम्भशृङ्गारस्य लक्षणमुच्यते—

भावो यदा रतिना(र्ना)म प्रकर्षमधिगच्छति ।
नाधिगच्छति चाऽभीष्टं विप्रलम्भस्तदोच्यते ॥१॥[41]
अस्य भेदा यथा—
अभिलाषादसंप्राप्तेर्विरहाद् गुरुवाक्यतः ।
देशान्तरगति(ते)श्चैव तथेर्ष्याकरणादपि ॥२॥
शाया(पा)दपि च विज्ञेयो विप्रलम्भस्तु पञ्चधा ।[42]

अस्याऽप्युदाहरणानि **ग्रन्थान्तरे** ज्ञेयानि । **काव्यमीमांसावृत्तिकार**[43] एव यथासम्भवं वक्ष्यति ।

अथ हास्यरसलक्षणमाह—हासे साधुर्हास्यः । हास एव वा । सामाजिकानां चर्वणागोचरं गतो हास्यः स्थाय्ये(य्ये)च(व)तु रसीभवेदिति ।

विकृताकृतिवाग्वेषैरात्मनो वा परस्य वा ।
हास्यस (सस्य) परितो(पो)षः स्याद् हास्यस्त्रिप्रकृतिः स्मृतिः(तः)[44] ॥१॥

आत्मश्चा(स्था)न् विकृत देवा(वेषा)दी[न्] परस्थान् वा विभाव्य, परितो-(पो)षात्मा स हास्यरसः । अधिकस्थानस्त्रिप्रकृतिस्थो भवति । उत्तममध्यमाऽधमप्रकृतिभेदात् । एवं षड्भेदा भव(वं)ति । तथा चाह **भरतः**—

स्मित[मथ]हसित(तं)विहसितमुपहसित(तं)चापहसितमतिहसितम् ।
द्वौ [द्वौ] भेदौ स्यातां उत्तममध्यमाऽधमप्रकृतिस्थे (स्थौ)।।[45]
स्मितहसितः(ते) ज्येष्ठानां मध्यानां विहसितोपहसिते च ।
अधमानामपहसितं तथावि(ति)हसितं विज्ञेयम्[46] ।

अथ प्रत्येकस्य लक्षणं यथा —

किञ्चिल्लक्षितदन्तं हि हसितं तद् विधीयते[46A] ।

अथ मध्यमानां—

आकुञ्चिताक्षि तुण्डं यत् सुस्वनं मधुरं तथा ।
कालागतं सास्यरागं तद्धि विहसितं भवेत्[47] ॥
उत्फुल्लनासिकं यत् तु जिह्मदृष्टिनिरीक्षणम् ।
निकुञ्चितांश(स)कशिर(रः) लब्धो(तच्चो)पहसितं भवेत् ॥[48]

अथाऽधमानाम्—

अत्यन्तहसितं यत् तु साश्रु ते च (नेत्रं)तथैव च ।
उत्कम्पितशिरश्चैव तयोप(च्चाप)हसितं भवेत् ॥[49]
संरब्धं(ब्ध)साश्रुनेत्रं वा विकृष्टस्वरमुद्धतम् ।
करावगूढपार्श्वं वाऽतिहसितं भवेत् ॥[50]

तत्राऽऽत्मस्थो[51] यथा कृतकतपस्विवेषो रावणः सीता[प]हरणाय—

जातं मे षरुपे(परुषे)ण भस्मरजसा तच्चन्दनोद्धूलनं
हारो वक्षसि यज्ञसूत्रमुचितं श्लि(क्लि)ष्टाः जटाः कुन्तलाः ।
रूद्राक्षैर्मणिभूषणानि मृदुलं चित्रांशुकं वल्कलं
सीतालोकनहारि कल्पितमहो रम्यं वपुः कामिना । १॥[52]

तत्र परस्थो यथा—

भिक्षो कन्था श्लथा ते ननु शफरवधे जालमश्नासि मत्स्यां-
स्तेऽमो न(म)द्योपद(दं)श्यः(शा) पिबसि मधु समं वेश्यया यासि वेश्याः
[श्म ?] ।

दत्वाऽरीणां गलेंघ्री(घ्रीं) क च तव रिपवो भित्तिभे(मे)त्ताऽस्मि येषां
चौरौ(रो)सि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नाट्ये(नष्टे) विचारः[53] ॥१॥

उत्तमाऽधममध्येषु ये(ते) हास्यभेदाः कथिताः एवं मुख्यतया षड्भेदाः । अन्ये भेदा(दाः) { त् } प्रत्यूहनीयाः । अथ करुणः—किरति विक्षिपति चित्तानीति करुणः । करुणलक्षणं यथा—

इष्टनाशादनिष्टस्य प्राप्तेः शोकस्तु यो भवेत् ।
तत् पोषस्तु विनिर्दिष्टो विद्वद्भिः करुणः खलु ॥१॥[54]

अथ रौद्रस्य लक्षणं यथा—

वैरिणो विकृतेश्चैव मात्सर्यादपि जायते ।
यस्य क्रोधस्तस्य पोषे रसो रौद्रमु(उ)दाहृतः ॥१॥

अथ वीररसस्य लक्षणमाह—

उत्साहो यः समुत्पन्नः प्रतापविनयादिभिः ।
तस्य पोषस्तु कथितो मुनिभिर्भरतादिभिः ॥१॥

दयावीरदानवीरप्रभृतयो भेदाः ज्ञेयाः[54A] । अथ भयानकलक्षणमाह—

विकृतस्वनसत्त्वादे(देः)भयपोषैर्भयानकः ।
सर्वांगवेषकः(पथुः) स्वेदशोषवैवर्ण्यलक्षणः[55] ॥१॥

अथ बीभत्सरसलक्षणं कथ्यते—

पूतिमांसास्थिदुर्गन्धि(न्ध)जनिता या भवेत् पुनः ।
जुगुप्सा कथिता(तः)पोषस्तस्या बीभत्ससंज्ञकः ॥१॥[55A]

यथा **मालतीमाधवे** उब(त्)कृत्यौ(त्यो)त्कृत्येत्यादिपद्यम् । यथा वा **चण्डकै(कौ) शिके** हरै(रि)श्चन्द्रेणै शय(व)वर्णनं कृतम्[56] । भित(न)त्यक्तो(क्षणो)र्मुद्रामित्यादिपद्यम् । अथाऽद्भुतरसस्य लक्षणमुच्यते—

लोकोत्तरैश्चरितैर्विस्मयोऽभिजायते ।
पोष { क } स्तस्य[स्तु] कथितो रसो ह्यद्भुतसंज्ञकः ॥१॥

इत्यद्भुतस्य लक्षणम् । इत्यष्टरसानां लक्षणानि संक्षिप्तानि[57] । स्थायिभावविभावादीनां लक्षणान्यग्रे कथ्यते । यद्यपि नवमः शान्तोऽपि रसोऽग्निः(स्ति),

शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं ।
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥३०॥

तथा

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥३१॥

अपरस्तु अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः । क्रमेणोदाहरणम् ।

---

तथाऽपि तस्य त(न)टनीयत्वाभावान्नाष्टव्याघातः । अत एवाऽत्राष्टौ नाट्यरसा इत्युक्तम् । तत्र सर्वप्राणिसुलभत्वात् प्रधानत्वाच्च प्रथमोद्दिष्टस्य शृङ्गाररसस्य द्वैविध्यमाह । तत्रै(त्रा)पि संयोगे सति यो रसः स सम्भोगरसः । संयुक्ताभ्यां भुज्यत इति सम्भोग(गः)सम्भोगास्वादलोभेन । विप्रयुक्ताभ्या(भ्यां) { मातृ मा } लभ्यत इति विप्रलम्भो वियोग इत्यर्थः । ननु सम्भोगस्य परस्परावलोकनादिभेदेनाऽनेकविधत्वात् कथं द्वैविध्यमत आह **तत्राद्य इति** । [68] तत्र शृङ्गारे सम्भोगमुदाहरति **यथेति** । स्वस्मिन्ननुरागं जिज्ञासमानेन केनचित् कामिना(न्या), शून्यं वासगृहं विलोक्य, शयनात् शनैः किञ्चिदुत्थायालीकनिद्रामुपागतस्य पत्युर्मुखं चिरं दृष्ट्वा, विष्ट(श्र)म्भं(ब्धं) परिचुम्ब्य स्मितज्ञातमु(पु)लकां गण्डस्थलीमालोक्य, लज्जावनतमुखा, एवं स्वानुरागं प्रकाशयन्ती, नवोढा काचन चिरं चुम्बिता । शून्यमित्यनेनोद्दीपनत्वं व्यज्यते । वासगृहमिति स्रगादि सुरतोपकरणसम्पद् व्यज्यते । किञ्चिदुत्थायेति पूर्वं(र्वं)शरीरमात्रेण शय्यात्यागः। निद्राव्याजमिति अनुरागादियं स्वयमेव चुम्बनादिकं करिष्यतीति तदीयं धौर्त्यम् । चिरमिति । चिरमित्यनेन लज्जापगमः सम्भोगस्वीकारश्च व्यज्यते। स्त्रीचेष्टा उदाहृता। पुरुषचेष्टामुदाहरति । **त्वं मुग्धाक्षीति**। आलम्बनभावोऽयम् । मुग्धं मनोरमम् । अक्ष्णैव जगद्वशीकरणक्षमत्वात् । कञ्चुले-

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया—
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

काव्वैयर्थ्यम् । लक्ष्मी(क्ष्मीं) शोभाम् । ताच्छील्ये णिनिः । ततः सर्वं मनोहारिता । वीटिकाग्रन्थि(न्थिः)मुद्रानिविष्टा । निविडं(ड)लग्ना सस्मिता च । [59]कञ्चुलिकाऽपसारणं सम्मतिप्रकटनमा(म)न्यथा सूचयाऽभूत् । कौटिल्यमेव स्यात् । अत एवालोनिःसरणम् । आलीजनस्य नेत्रोत्सवः । पत्युर्वल्लभायास्तं प्रत्यनुरक्तायाः । संध्यादर्शनेन हर्षोदयात् निर्यातो गृहान्निःसृतः । शनकैरुत्सवं विहाय सपदि गन्तुमशक्तेः । जनोऽविदग्धः । औचित्यावर्जितप्राग(ग्)प्रसरणत्यागात् । पूर्वं च नायिकायाः परत्र नायकस्य रागोत्कण्ठचे[त्यने]न लक्षयोर्भेदः । इदं वृत्तद्वयममरुशतके[60]ऽस्ति । अनयोर्नायिकानायकश्चालम्बनविभावौ । शून्यगृहनयनसौन्दर्यादयः उद्दीपनाः । चुम्बनवीटिकासंस्पर्शादयोऽनुभावाः । लज्जाहास्यादयः सञ्चारिणः । एतैः कारणादिभिरनुमितवर्णनीयरतीनां सामाजिकानां काव्योपनिबन्धेन एभिरेव विभावादि[भि]रुद्बुद्धा रतिः, स्वं विभावादिकं च विषयीकृत्य समूहालम्बनरूपं पानकरस इव रसः । एवं सर्वत्राऽवधेयम् । सङ्गमप्रत्याशाकालीनस्तदनुत्पादो विप्रलम्भः । प्राप्तिनिश्चयः प्रत्याशा अभिलाष(षः)। { इष्ट्यादेशैकोऽपि[61] } गुर्वादिपारतन्त्र्यं (न्त्र्यात्) विरहः । अन्यासङ्गिनि प्रिये ईर्ष्या । प्रवासो(से)वैवेश्यं, मुन्यादिकोपनियन्त्रणं शापः । [62]हन्तुर्नियतपूर्ववति(र्ति)अभिलाषानुत्पादकत्वाभावेऽपि त्वत्यत्तिप्राक्कालीनत्वं नियतमेव सिद्धे इच्छाविरहात् । ननु कथं पञ्चविधत्वं, मूर्छितनायकवैरस्य(विषयकस्य)करुणविप्रलम्भाख्यस्य भेदान्तरस्याऽपि सम्भवात् । तदुक्तम्—

यूनोरेकतरस्मिन् गतवति लोकान्तर(रं) पुनर्लभ्यो(भ्ये) ।
विमनायते यदै(दे)कस्तदा भवेत् करुणविप्रलम्भ(म्भः) ॥ इति ।

मैवम् । उभयरसप्रकृत्योः शोकरत्योः युगपदनुद्बोधात्,[63] आलम्बनविनाशस्थितिहेतुकत्वेन परस्परविरोधात् । अत एव करुणविप्रलम्भपद(दा)भ्या[म ?]समवेतार्थत्वम् । अत एव सङ्गमप्रत्याशाकालीनत्वेन विशेषितम् । तर्हि

**यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा—**
**दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥३२॥**

का गतिरिति चेत्—एकत्र कालभेदेन करुणविप्रलम्भयोरेव सत्त्वात् मरणज्ञानकाले शोकस्य, सङ्गमप्रत्याशाया(यां) च रतेरुद्बोधात् । प्रत्याशाहेतवश्च भाषादय एव विज्ञेया(याः) । विरहप्रवासयोर्भेदं तु लक्ष्ये विवेचयिष्यामः । सम्भोगविप्रलम्भयोरुभयोरपि रतिप्रकृतिकत्वेऽपि सङ्गमस्य स्वाधीन { चेति अ } (त्वतदभा ?)—वाभ्यां भेदस्तेन विदेशस्थयोरपि दूतीप्रेषणादौ सम्भोगः एकस्थयोरपि कोपादिप्रतिबन्धे विप्रलम्भः इत्यादिविशेषो ज्ञेयः । अभिलाषहेतुकं विप्रलम्भमुदाहरति **प्रेमाद्र (र्द्रा)** इति प्रेमस्नेहं(हः) । तदेव चुम्बनादिना प्रकर्षं(र्षत्वं) नीतं प्रणयः । स एव परिचयातिशयेन प्रचीयमानो रागः । परिचयो दृढासक्तिः। ऊढो (उद्गाढः) । निःशेषमुत्सारितगुर्व्या(र्वा)दिपारतन्त्र्यः [रागस्योदयो यासु तथाभूताः ।] तास्तामदनुभूतविशेषः(षाः) । सुन्दर्य्या एवं विधाश्चेष्टाः । परिचयादुद्गाढरागोदया भवेयुर्मयि पुन र्भवेयुरित्यन्वयः । किंभूताश्चेष्टा निसर्गमधुराः प्रकृतिर्म(म)नोहरा(राः) । आशंसा इच्छा । अन्तःकरणस्य मनोमो (नसो) लयस्तन्मयत्वम् । बाह्यकरणानि चक्षुरादीनि । व्यापारपटुत्वेन विषयग्राहित्वम् । अयमर्थः । प्रार्थनया कल्पितास्वपि यासु चेष्टासु क्षणात् बाह्येन्द्रियव्यापारनिरोधो अन्तःकरणस्य आनन्दे च(सा)न्द्रोलयस्तन्मयत्वं भवतीति भावार्थः । इदं पद्यं **मालतीमाधवे** । मालतीप्रीत्यै स्मशानसाधने प्रवृत्तस्य माधवस्याऽभिलाषोऽयम् । ननु पूर्वराग[64] एव विप्रलम्भभेदो न त्वभिलाषस्तस्य तादृश[भेदा ?]मेदात् । तदुक्तम्—

श्रवणाद् दर्शनाद् वाऽपि मिथः संरूढरागयोः ।
दशाविशेषयोः प्राप्तो पूर्वरागः स उच्यते ॥१॥

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृत्
यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥ ॥३३॥

एषा विरहोत्कण्ठिता ।

---

अभिलाषश्चिन्ता स्मृतिः गुणकथनोक्ताः संलापाः उन्मादोऽथ व्याधिर्जडता-मृतिर(रि)ति दशाऽत्र दशा(श) इति । मैवं अभिलाषस्यैव तद्भेदत्वात् । चिन्तादीनां तदनुभावत्वेन तस्यागमकत्वात् । तस्य सङ्गमप्रागभावकालीनत्वेन विरहादिष्वतः(न्तः)पातात् । तत्र चिन्ता यथा–

कथमीक्षो(क्षे) कुरङ्गाक्षी(क्षीं)साक्षाल्लक्ष्मी मनोभुवः ।
इति चिन्ताकुलः कान्तो निद्रां नैति निशि(शी)थिनीम् ॥२॥

इत्यत्र प्राप्त्युपायचिन्तयाऽभिलाषानुभावत्वं स्फुटमेव । एवं गुणस्मरणादिष्वपि ज्ञेयम् । विरहहेतुकं विप्रलम्भमुदाहरति **अन्यत्रेति** । नायकं प्रति दूतीवचनम् । निशान्तान्तरे गृहमध्ये । अनेन सतीत्वम् । रात्रौ बाला वृत्तविवर्तने उद्वृत्तविवर्तनयोर्व्यतिकरे सम्बन्धो यस्याः सा । एवंविधा सती । निद्रां नाऽधिगच्छति । तत्र हेतु(तुः)इतीति । अनेन प्रकारेणाऽनेककल्पनास्वीकृतचिन्ता । अनेककल्पना आह–मम नायकोऽन्यत्राऽन्यस्यां नायिकायां न व्रजति । अनेन पत्युरनुरागः सूचितः । का खलु कथाऽन्या सम्भावनैव नास्तीत्यर्थः । तदेव दर्शयति–योऽसौ यद्वचनेन मां नेच्छति तादृक् सुहृद { य } स्य नास्ति । अथ च नागतः । सहसा झगिति । विधेरेवाऽयं प्रक्रमः आरम्भः कः । एषा(षः)स्त्रीविरहो(हः)कथिता-(तः) । **टीकान्तरे**[65] अन्यत्रेति । { प्रवासि } नायिकान्तरे वा व्रजतीत्यन्वयः । इत्यलीकं तत् । कथाऽपि नास्ति । शत्रुभिरपि मिथ्याप्रवादो न कृतः । हा हेति दैन्ये । प्रक्रम आरम्भो विप्रलम्भस्य, कोऽयमित्यननुभूतपूर्वत्वात् । वृत्तपरिवर्तनं तस्य व्यतिकरः सम्बो(म्बं)धो यस्याः । निशान्तान्तरे गृहविशेषे वासगृहे । तत्त्वे तत्र(तत्त्वेन, P) भेदान्तरं प्रवेशत्वेनैव सिद्धेन च भिन्नदेशत्वाभावात् तथा तत्र तद्विशेषणवैयर्थ्यादित्याह–**एषेत्यादि** । अनयोरैक्ये प्रोषितभर्तृकातोऽस्या भेदान्तरत्वानुपपत्तेः तथानुपपन्नं मुनिनैव नायिकायाः स्वाधीनभर्तृकत्वादि षोड-

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥३४॥
प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिताः
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ॥३५॥

---

शावस्थास्वीकारात् । अन्यथा सर्वेषामेव विरहान्तःपातसम्भवे अभिलाषादीनामपि तद्भेदत्वं न स्यात् । सङ्गमाऽनुत्पादकतावच्छेदकभिदेनाभेदस्य दुरपह्नवत्वादित्यन्य { अ } [त्र]विस्तरः । ईर्ष्या विप्रलम्भस्योदाहरणमाह—**सा पत्युरित्यादि** । कविवचनम् । सा बाला भर्तुरग्रे प्रथमेऽपराधसमये प्रियप्रस्तावे केवलं रोदितीत्यन्वयः । कीदृशी निर्मलकपोलयोर्यन्मूलं नेत्रयोरधोभागस्तत्र क्षरितैर्निमेषार्द्धबद्धबिन्दुजालतया लुठत्पतनशीलत्वेन लोलमुदकं येषां तैः, नैरन्तर्येण प्रथममेवोन्मृष्टकज्जलतया स्वस्थैः, एवंविधैरश्रुभिः, पर्यस्ते लम्बितपक्ष्मणी नेत्रोत्पले यस्याः सा । ननु वक्रोक्त्यादिकं किमिति न करोसि(ति) सो पि त(सा इति?)[65A] आह—सख्याभावः सख्यं सखि दूतवणिग्भ्यो य इति । तेनोपदेशस्तं विनाशविभ्रमम् । अङ्गवलना वक्रोक्तिश्च । ताभ्यां संसूचनं स्वाभिप्रायप्रकाशनम् । नो जानाति । रोदनस्य सशब्दत्वपरिहारायाश्रुभिरित्युक्तम् । अश्रुप्राचुर्यार्थं(र्थं)लोलोद(लाल)कैरित्युक्तम् । चिरकालरोदनसूचनार्थं स्वच्छैरित्युक्तम् । स्वल्पकालरोदने तु कज्जलसम्बद्धत्वं स्यात् ।

अथ प्रवासहेतुकं विप्रलम्भमुदाहरति **प्रस्थानमिति** । काचिद् भाविप्रोषितभर्तृकमात्मानं प्रति सोपालम्भमाह—हे जीवित, प्रियसार्थः किमु त्यज्यते इत्यन्वयः । हे प्रिय हे जीवितेति च सम्बुद्धि(म्बोधन?)द्वयम् । प्राणप्रियतमे यातुं प्रस्थातुं निश्चितमनसि सति । वलयैः कङ्कणैः प्रस्थानं कृतम् । दौर्बल्यात् । अश्रुति(भि)रनवरतं गतम् । अश्रूणामप्रवृत्तिरेवावस्थितिः, गतिश्च प्रवृत्तिरेव । न त्वभावः । तथा सत्यश्रूणामभाव एव स्यात् । धृत्या सन्तोषेण

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥३६॥

हास्यादीनां क्रमेणोदाहरणम् ।
आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वनं प्रथितथूत्कमदात्प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥३७॥

---

क्षणमपि न स्थितम् । चित्तेनाऽपि प्रथममेव गन्तुमुपक्रान्तम् । अतस्त्वयाऽप्यवश्यं गन्तव्यमेव । तथा च सुहृत् सार्थः किमिति त्यज्यते । गम्यतामेव त्वयाऽपि शीघ्रमित्यर्थः । प्रियतमे गन्तुं निश्चितचेतसि नायिकाऽपि जीवितनिरपेक्षा बभूवेति भावार्थः । अथ शापहेतुकं विप्रलम्भमाह—**त्वामालिख्येति** । **मेघदूतकाव्ये** । हे सखि धातुरागैः रक्तधातुभिः । शिलायां, तदानीं शय्यां विहाय भूमिशयनात् । प्रणयकुपितां त्वामालिख्य आत्मानं ते चरणपतितं यावत् कर्तुमिच्छामि तावद् बहुभिरुपचितैरश्रुभिर्मे दृष्टिरालुप्यते स्म । तस्मिंश्चित्रेऽपि आवयोः सङ्गमं क्रूरो विधिर्न सहते । कृतान्तशब्देन दैवमुच्यते । यदुक्तम्—अनेकार्थे कृतान्तो यमसिद्धान्तदैवाकुशलकर्मस्थितिवचनात्[66] । अत्र कुबेरश्रा(शा)पो विप्रलम्भहेतुः ।

हास्यरसोऽपि त्रिविधो यद्यपि मूले वक्रो (उक्तो)नास्ति तथापि दर्श्यते ।[67] विकृतवाक्प्रभवः १ विकृतवेषप्रभवः २ विकृतक्रियाप्रभवश्चेति ३ । **आकुञ्च्येति** पद्ये त्रयाणां विनिर्दर्शनम् । विष्णुशर्मा इति । रोदिति इत्यन्वयः इति । ते किं, हाहा इति खेदे । अहं हतोऽस्मि । कथमित्याकाङ्क्षायामाह—वेश्या अशुचिं हस्तमाकुञ्च्य मम शिरसि प्रहारं दत्तवती । कथम्भूते मम शिरसि, प्रतिपदं प्रतिक्षणं मन्त्रपूतानामञ्जलीनां बिन्दुभिः पवित्रे कृतसंस्कारे । प्रथितो विस्तारितस्थुगि(थूदि)ति शब्दो यत्र । प्रहार(रे)तारस्वरमित्यपि क्रियाविशेषणम् । इत्येवं

हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥३८॥

---

शब्देनाकुञ्च्येत्यादि । हा हा हतोऽहमित्यनेन तादृशमुच्चार्य्येत्यर्थः । शर्म्मान्त-नामश्रवणेनापि हसितं स्यात् । त्रयाणामुदाहरणं दर्श्यते । आकुञ्च्य पाणिमिति विकृतदोषः[68] १, तारस्वरप्रहितथूत्क्र(त्क)मदात्, अत्र विकृतक्रिया २ । हा हा हतोऽहमिति विकृतवाग् । एतेषां त्रयाणामुदाहरणपद्यानि यथा[69]——

वैद्यनाथ ! नमस्तेऽस्तु क्षपितो(ता)शेषमानवा (व !) ।
त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥१॥

विकृतवेषोदाहरणं—आगच्छन्नगरोपकण्ठमित्यादि **रसतरङ्गिण्यां**[69A] । विकृ-तक्रियोदाहरणं यथा——

तत्रोत्थापनमात्रनिस्सहजरच्चर्मावशेषश्लथ—
भ्रस्यच्छेफसि दुर्बलाङ्गवलनव्यार्थाद्यमालिङ्गने ।
लज्जाधायिनि खिद्यमानयुवतौ वृद्धस्य कृत्स्ने रते
यत् स्यात् तत् प्रतिभाति किन्तु हसितं युक्तं किमारोपितुम् ॥१॥

अत्र विष्णुशर्मा आलम्बनम् । तस्य रोदनमुद्दीपनम् । द्रष्टुरुद्वेगजाड्यादयः सञ्चारिणः । स्मितहसिताऽतिहसितानि उत्तममध्यमाऽधमेष्वनुभावाः । यस्य हासस्तदनिबन्धेऽपि सामर्थ्यात् तदवसायः । अत एवोक्तं——

यस्य हासः स चेत् काऽपि साक्षान्नैव निबध्यते ।
तथाऽप्येष विभावादिसामर्थ्यादवसीयते ॥[70]

इति विकृतवाग्वेषादिदर्शनेनावश्यं हास्योदयात् अत्र हास्यरसो (सः) । हासस्तु प्रकृतिस्तस्यैव चर्वणीयतास्वभावं न रसत्वमिति ।

अथ करुणरसोदाहरणमाह—**हा मातरित्यादि** । करुणरसस्यानन्तत्वाद भेदो नास्तीति । शोक एव । कश्मीरराजजननीमरणे उत्साहयित्त्रा **भट्टना**

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥३९॥

रायणेन रुदितं कृतम्[11] । अत्रेष्टनाशादिविभावो, दैवोपालम्भाऽश्रुपातादिरनुभावः, चिन्तादिर्व्यभिचारी, शोकः स्थायिभावः करुणस्येति । अथवा **टीकान्तरे**[72] कस्यांचन(ने), राजमहिष्यां[72A] मृतायां तत्परिजनस्य विलापोऽयम् । हा इति खेदे । हे मातस्त्वरया वेगेन, गता त्वम् । कुत्र च त्वं वर्तसे । किमेतज्जातम् । अतत् किं नोपरतत्वात् ।[72B] हा इति धिगर्थे । विविधोपचारपूजास्तुतिनतिनिरपरक्षेपः । विविधदानमानतर्पितानं (नां) द्विजानामाशीभिरपि न किञ्चित्कृतमित्याह । एतावद्द व्यतिरेकेऽपि स्थिरत्वात् प्राणनिन्दा । हुतवहो य एवाहुतिभिर्हुतस्तर्पितः, सात्त्विकत्वात्, स एवाशनिः । अग्निर्जातोऽयमेव दाहकः पतितःस्वयमेवास्मिन्नङ्गे सचेतनैरर्पयितुमशक्यः, अतिसौन्दर्यात् । विशिष्य(ष्ट) वे(वा)गुपादानं बहुशस्तारस्वरेण क्रन्दनात् । ऐश्वर्येण बर्बरता । बाष्पबाहुल्येनान्तरान्तरा स्थगनम् । अचेतनमतिकठिनमपि द्रावयति तदाह-**चित्रेत्यादि** । अत्र मृतनायिकालम्बनम् । तद्रूपतच्छरीरवह्निसंयोगाद्युद्दीपनम् । रोप(द)नमनुभावः । दैन्यग्लानिमूर्च्छादयः सञ्चारिणः । अथवाऽत्रेष्टनाशादिर्विभावः । दैवोपालम्भाश्रुपाताद्यनुभावः । चिन्तादिर्व्यभिचारो । शोकः स्थायिभावः । करुणो रसः ।

रौद्रोऽप्येक एवेति भे॰ा न सन्ति । अथ रौद्ररसमुदाहरति । { रौद्रोऽप्येक } **कृतमनुमतमिति** । द्रोणाचार्यवधे अश्वत्थामोक्तिरियम् । मनुजपशुभिर्निर्मर्यादैरुच्छृङ्खलैरुद्यतशस्त्रैर्यैः भवद्भिः गुरूणां दौणाचार्याणां हननलक्षणं पातकं कृतं, अनुमतमङ्गीकृतं, दृष्टं वा, भीमार्जुनसहितानां तेषां भवतां, नरकरिपुणा विष्णुना सार्द्धं, असृग् मेदोमांसैर्दिशां बलिमहं करोमि । अत्र पितृवधादिविभावः । भ्रकुटीकरणाद्यनुभावः । अमर्षादिर्व्यभिचारी । क्रोधः स्थायोभावो । रौद्रो रसः । अथवा, क्रोधात् क्रमं विस्मृत्य प्रागनुमन्तुरुपादानम् । अयमहम-

क्षुद्रा संत्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥४०॥

---

नन्यसहायः, मेदो वसा बलिं पूजोपहारं करोमि । एवमुपहारस्यादृष्टचरत्वान्मदेककृतिसाध्यत्वम् । अत्रापकारिणोऽर्जुनादय आलम्बनम् । अस्त्रोद्यमनमुद्दीपनं, प्रतिज्ञा अनुभावः, अन्यनैरपेक्ष्यं गर्व (र्वः) [ व्यभिचारी ] ।

अथ वीररसोदाहरणमाह—

वीरश्चतुर्विधः[73]—दानः (न) १ दया २ धर्म ३ युद्ध ४ भेदात् । दानवीरः पर्शु(रशु) रामः १ दयावीरो जीमूतवाहनः २ धर्मवीरो युधिष्ठिरः ३ युद्धवीरोऽर्जुनः ४ । इन्द्रजिच्चा(च्च) । क्षुद्राः सं[त्रा]समिति । मेघनादवचनमिदम् । हे क्षुद्राः कपयो भयं परित्यजत । चूर्णितेन्द्रगजकुम्भाः एते ममाऽमी बाणा युष्मद्देहेषु निष्पतन्तः परं लज्जां दधति । हे सौमित्रे ! लक्ष्मण तिष्ठ । त्वमपि कोपानां पात्रं न हि । अहं मेघनाद इन्द्रजिन्ननु । किञ्चिद् भ्रूभङ्गविलासेनैव निवारितसमुद्रं रामचन्द्रमन्वेषयामि । सौमित्रे इति । मातृसम्बन्धोल्लेखेन निर्वीर्यत्वम् । रुषामिति गुरुत्वाद् बहुवचनम् । आत्मानं परिचाययति—मेघनादः । न तु शक्रजित् । तत्त्वा(त्त्व)स्याऽप्यनुत्कर्षकत्वात् । किञ्चित् सा(सं)रम्भो[74] यथा—कथञ्चित् क्रोधः, स एव लीला, क्रीडानियमितो बद्धोऽथवाऽऽज्ञावशीकृतः । अत्र राम आलम्बनम् । तत् समुद्रबन्धनमुद्दीपनम् । नीचेषूपेक्षणम् । रामं प्रति च स्पर्द्धानुभावौ । ऐरावतकुम्भक(चू)र्णनस्मरणं लज्जां दधतीति गम्यगर्वश्च सञ्चारिणौ ।

अथ[75] विभावादिसाम्ये वीररौद्रयोर्न भेदः । न च स्थायिभेद एव [भेद]कस्तस्याऽपि नियामकसु(मु)खप्रेक्षितत्वात् । मैवम् । विवेचकत्वतदभावयोरेव वैधर्म्या [त्] । { पूर्वं } [इह] क्षुद्रान् विहाय राममात्रान्वेषणेऽनेन विवेचनस्य, परत्र न निराकर्तृअनुमन्तृकर्तॄणां क्रोधविषयत्व-

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥४१॥

---

तारतम्यलब्धक्रमोपन्यासेनाविवेकस्य स्फुटत्वात्, क्रोधेनैव क्रमविस्मृतो(ते)-रे(रि)ति । यत् तु रक्त(-क्ता)स्यनेत्रतां(स्य) रौद्रे युद्धवीरादिदिनीत्याहुस्तन्न[76] । क्रोधसञ्चारिणी(णि) वीरे तस्याः सुलभत्वेन भेदकत्वानुपपत्तेः । ननु स च दानधर्मयुद्धैर्दयया च समन्वितः चतुर्द्धा स्यादित्युक्तदिशा वीरस्य चतुर्विधत्वं-(त्व)सम्भवे कथं युद्धमात्रोदाहरणम् । तत्र दानवीरो भार्गवः[77] यथा—त्यागः सप्तसमु [द्रमु] द्रितमही { नि } निर्व्याजदानावधिरित्यत्र । धर्मवीरो युधिष्ठरः यथा—

राज्यं वसु च देहश्च, भार्या भ्रातृसुताश्च ये ।
यच्च लोके समायत्तं तद्धर्माय सदो (मु) द्यतमिति ॥

दयावीरो जीमूतवाहनो यथा—

शिवामुखैः स्पन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तथापि तावत् किं तत्क्ष(भक्ष)णात् त्वं विरतो गरुत्मन् ॥

इत्येतेषु । दानधर्म[78]दयाविषयोत्साहोद्बोधाद् वीरत्वमेव चेदुच्यते-एषु लोकातिक्रान्तदानादिभिर्विस्मयस्योद्बोधनादद्भुतस्यैव सत्त्वात् । न चात्र द्वित्रादिपदानुपादानात् । तथा वस्तु[नोः]लोकातिगत्वस्य तदज्ञाप्यत्वात् न तु तत्कार्यत्वात् । अन्यतस्तदुपपत्तौ तदुपादानवैयर्थ्यात् । न च युद्धवीरेऽप्येवं सुवचमिति वाच्यम् । शत्रुविजयस्य सर्वत्र दृष्टचरत्वेन लोकानतिक्रमणात् ।

ननु [79]करुणस्य कथं रसत्वं दुःखहेतुशोकप्रकृतिकत्वादिति चेन्न । अलौकिकसामाजिकाऽ(क)निष्ठशोकाख्यवासनया सुखरूपत्वेनैव सिद्धत्वात् । दुःखहेतुभ्यो मरणादिज्ञानेभ्यः कथं सुखोद्बोध इति निरस्तम् । लोक एव तेषां दुःखहेतुत्वात् काव्यनाट्ये तु सुरते दन्ताघातादिभ्य इव तेभ्यः सुखोद्बोधात् अन्यथा करुणरसप्रधाने रामायणादौ सर्वेषामप्रवृत्तिप्रसङ्गात् । बलवद् द्वेषविषयदुःखहेता-

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कःकरङ्का—
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ।।४२।।
चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः ।।४३।।
एषां स्थायिभावानाह ।

---

वपि द्वेषप्रसङ्गात् । दुःखायार्थव्ययापत्तेः । एवं बोभत्सभयानकयोरप्यवधेयम्[80] । भयानकमाह–**ग्रीवेत्यादि** । **शाकुन्तलं (ले)**पद्यं दुष्यन्तवचनम् । अयं मृगः पश्चादागच्छति रथे कण्ठस्य वशीकरणमनोहरं यथा तथा, मुहुर्दत्तदृष्टिः सन्, बाणपतनभयादस्थूलेन पृष्ठभागेन, अर्द्ध(र्द्ध)चेत्यनेन, पश्चात् शब्दस्य पश्चादेशः शरीरस्य, पूर्वभागं प्रविष्टोऽर्द्धभक्षितैः श्रमेण विततमुखाद् भ्रंशिभिर्बालतृणैः विक्षिप्तमार्गः एवंविधः, सन्नधिकलङ्घनत्वात् आकाशे बहुतरं प्रयाति भूम्यां स्वल्पं प्रयाति । पश्य । अत्र विकृतस्वरश्रवणादिर्विभावो, मुहुश्चले(ल)न विलोकनाद्यनुभावः । शङ्कादिर्व्यभिचारी । भयं स्थायिभावो । भयानको रसः ।

बीभत्समाह–**उत्कृत्येत्यादि** । स्मशानवर्णनम् । [81]बीभत्सायाः यावत् सम्भवः तावद् विधिः । उत्कृत्योत्कृत्य कृत्तिं प्रथममत्ति, अनन्तरं स भूयांसि मांसानि जग्धा(ग्ध्वा)क्रव्यमस्ती(त्ती)ति सम्बन्धः । तेन क्त्वाप्रत्ययानामवशब्दस्य नासङ्गतिः । **टीकान्तरे**[82] योजना यथा–प्रेतानां मध्ये रङ्को दरिद्रः, । करङ्कान् शवान् । चर्म प्रथमं छित्वा, पश्चात् पृथू श्चू (च्छू ) ननेनाधिका न(नि), { असंसुन } [अंसस्फिग्] प्रदेश(शे)[षु] पृष्टपिण्ड्याद्यवयवदेशेषु सुलभानि, अतिदुर्गन्धानि मांसानि भक्षयित्वा आप्तानि स्वीकृतानि, नात्यन्ते नेत्राणि येन, प्रकटितदन्त एवंविधः सन्, उत्सङ्गस्थितान् शवान्, अस्थिषु लग्नं विषमस्थानगतमपि मांसं, अव्ययं यथा तथा भक्षयति । पिण्डीजङ्घोदर्ध्वभागः । पिण्ड इति पाठे तदाकारत्वात् । तथ उष्णापूतीनि प्रसारितदुर्गन्धानि इति । मांसविशेषणम् ।

**(सू० ४५) रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥३०॥**

**स्पष्टम् ।**

---

अत्र पूति मांसमालम्बनम् । तत्र कृमिपातादय उद्दीपनानि । वदनविधूनननिष्ठीवनादयोऽनुभावाः । उद्वेगादयः सञ्चारिणः ।

अद्भुतमाह—**चित्रमिति** । नायकवचनम् । एष पुरुषो महान् विकाररहितः । चित्रं बत हर्षे । एषा कान्तिः क्व, न कुत्राऽपि । प्रकारोऽसि (स्ति) नव एव । धैर्यं लोकोत्कृष्टम् । अहो प्रभावः । आकृतिरपि काचिदपूर्वे [ति] च ब्रह्मण एतद्विषयः सर्गः सृष्टिर्नूतनः । अत्र महापुरुष आलम्बनं, तद्गुणातिशय उद्दीपनम् । नेत्रविकाशा(सा)द्यनुभावः । हर्षादिर्व्यभिचारी । विस्मयः स्यायिभावोऽद्भुतरस (सः) । स्थायिभावापरिज्ञाने शृङ्गारादि सम (रस)निरूपणं कर्तुमशक्यमित्यभिप्रेत्योत्तरश्लोकमवतारयति—**एषामित्यादि** । एषां शृङ्गारादिरसानामित्यर्थः । नन्वास्वादस्य[83] वैजात्यविरहेण कथमष्टौ भेदाः । स्थायिभावभेदाद् भेद इति चेत् के (कैं)ते स्थायिभावा इत्यत आह—**एषां स्थायिभावानामित्यादि** । स्थायिभावानामास्वादानन्यत्वेऽपि स्थायिभावा(व)विषयत्वेन भेदकाः । सा कीरवादे[84] घटपटादयो ज्ञानस्येव । स्थायिनो यावज्जीवं विभावेषु स्थिराः यदाह—

[85]अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमा ।
आस्वादाङ्कुरगर्भोऽसौ भावः स्थायीति संमतः ॥

भावसंज्ञित इति । प्रसङ्गाद् भावलक्षणमुच्यते—

चित्तस्य(स्या) विकृतिः सत्त्वं, विकृतिः (तेः) कारणे सति ।
ततोऽल्पा विकृतिर्भावो बीजस्यादिविकारवत् ॥१॥

विकृतिः किंविधा किंप्रकारा ? इत्युच्यते—

आनन्दरूपा विकृतिः सा चतुर्द्धा निगद्यते ।
विकाशविस्तरक्षोभविक्षेपैः किञ्चिदुत्थितैः ॥२॥[86]

काव्यनाटकसमुद्भूताऽऽनन्दरूपा { ऽन्वि त } चित्तविकृतिः ज्ञेया। अथ रत्यादीनां प्रत्येकं लक्षणमुच्यते—चरमसमयपर्यन्तस्थायित्वादस्य स्थायित्वव्यपदेशः । स चाऽष्टधा । **रतिर्हास** इत्यादि । रत्यादीनां लक्षणानि—यथा **रसतरङ्गिण्याम्** ।[81] इष्टवस्तु समीहा जनिता मनोविकृतिपरिपूर्णा रतिः १। कुतूहलकृतवचनवेषसादृश्यकृतो मनोविकारः परिमितो हासः । २ इष्टविश्लेषजनितो रत्यानां { ना } लिङ्गितः परिमितो मनोविकारः शोकः ३ । अथ(व)ज्ञादिकृतः प्रमोदप्रतिकूलः परिमितो मनोविकारः क्रोधः ४ । शौर्य्यदानदयाऽन्यतर(म) कृतः परिमितो मनोविकार उत्साहः ५। अपराधविकृतरवसत्त्वादिजनितोऽपरिपूर्णो मनोविकारो भयम् ६ । चमत्कारदर्शनस्पर्शनस्मरणजनितोऽपरिपूर्णो मनोविकारो विस्मयः ७ । विशेषतो यथा लक्षणानि[87A]

स्पृ(स्मृ)ते दृष्टेऽपि या स्वल्पा वि(चि)त्तेऽपि विकृतिर्भवेत् ।
अभोष्टे वस्तुनि प्रायः सा रतिः परिकीर्तिताः(ता) ॥

यथा **विक्रमोर्वस्या(श्यां)** सखीदर्शनसमुत्कामुर्वशीं प्रति परुष—(पुरुष or पुरूरवा)वचनं—

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि यस्य नेत्रयोः ।
त्वया विना सोऽपि भवेत् समुत्सुकः
सखीजनस्ते किमु रु(रू)ढसौहृदः ॥१॥[83]

रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम् ।
रा(वा)गादिवैकृताच्चेतो विकाशो (सो) हास उच्यते ॥[89]

इत्यादि स्वयमुत्प्रेक्ष्यम् । अथ हासलक्षणमुच्यते—

बालकादिवचो वेषः(ष)वैषम्यजनिता दि (हि) या ।
चेतसो विकृतिः स्वल्पा स हासः कथितः खलु ॥२॥[90]

अव्यक्तवर्णानि मनोहराणि निरर्थि(र्थ)कानि क्षणविस्मृतानि ।
ध्रुवं शिशूनामसमञ्जसानि वचांसि हासं जनयन्ति पुंसाम् ॥३॥

इष्टनाशादिभिश्चेतो वैक्लव्यं शोक उच्यते ।[91]

कार्यारम्भेषु संरम्भ उत्साहः परिकीर्तितः ॥१॥[92]
संरम्भस्त्वरा ।
प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधसंज्ञितः ।
रौद्रशक्त्यो (क्त्या) नु(तु)जनितं वैक्लव्यं मनसो भयम् ।[93]
रो(दो)षेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते ।[94]
विविधेषु पदार्थेषु लोकसीमातिवर्तिषु ॥
विकारश्चेतसो यस्तु विस्मयः स उदाहृतः ।[95]

एतानि लौकिकरत्यादीनि लक्षितानि। न सामाजिकनिष्टा(ष्ठा)नि । वासनाविशेषत्वात् । ते च चित्तवृत्तिभेदाः कार्यवैजात्येनोन्नेयवैजात्या इति स्पष्टमित्यनुभववैजात्यादित्यर्थः ।[96] ननु स्वल्पा वेषविकृती रत्यादिषु स्वल्पा दृश्यते क्रोधादिपु च महती दृश्यते । क्रोधादीनां कथं भावत्वमिति चेन्न, रौद्रादिरसापेक्षया क्रोधादिषु विकृतिरल्पैवास्ति इति न दोषः ।

अथ विभावानां लक्षणमुच्यते—
भावयन्ति विशेषेण ये रसान् वै मनोहरान् ।
विभावास्ते तु कथ्यन्ते नाट्यशास्त्रविशारदैः ॥१॥[97]

विशेषेण विभावयन्ति उत्पादयन्ति ये रसा(सां)स्ते विभावाः कथ्यन्ते । अथ शृङ्गाररसस्य विभावा उच्यन्ते—आलम्बनविभाव उद्दीपनविभावश्चेते(ति)द्विधा । तत्राऽऽलम्बनविभावः कामिनी । उद्दीपनविभावाः चन्द्रचन्दनादयः । यदाह भरतः—

[ऋतु]माल्यालङ्कारैः प्रियजनगान्धर्व[काव्य]सेवाभिः ।
उपवनगमनविहारैः श्रृङ्गाररसः समुद्भवति ॥१॥[98]

हास्यविभावाः यथा—विकृतवेषावलोकन(नं),व्यङ्गदर्शन (नं) विकृतालापश्रवणं, असत्प्रलापकुहकाभिनयादयो विभावा, एतेभ्यो हास(स्य)रस उत्पद्यते २ । अथ करुणा(ण)रसविभावाः कथ्यन्ते—इष्टजननाशः, शापक्लेशौ, बन्धनव्यसनादयो विभावाः करुणरसस्य भवन्तीति । अथ रौद्रस्य विभावाः कथ्यन्ते । उ(अ)-

पघातनिर्भर्त्सनवाक्पारुष्यवैरिदर्शनसङ्ग्रामेत्यादयो रौद्रे । अथ वीररसविभावा यथा—असम्मोहाध्यवसायविनयबलपराक्रमशक्तिप्रतापप्रभावादयो विभावा, एतेभ्यो वीररसो जायते । अथ भयानकस्य विभावाः कथ्यन्ते—विकृतरवश्रवण विकृतसत्त्वदर्शनशून्यागारारण्यस्मशानदर्शनस्वजनबन्धनश्रवणेत्यादयो विभावा भवन्ति । एभ्यो भयानकरसस्य प्रादुर्भावः स्यात् । अथाऽद्भुतविभावा यथा—दिव्यवस्तुदर्शनवाञ्छितार्थप्राप्ति(प्तिः)अत्युत्कृष्टवस्त्ववलोकनमायेन्द्रजालेत्यादयो विभावा भवन्ति । एभ्योऽद्भुतरसः प्रादुर्भवति ।

अथैतेषां रसानामनुभावाः कथ्यन्ते । क्रियन्ते यै रसाः सम्यक् लोकानुभवगोचराः ते[98A]अनुभावा(वाः) । अनुभावयन्ति अनुभवगोचरतां नयन्ति रसामि(नि)त्यनुभावा(वाः) । यथा(अथ ?) शृङ्गारस्यानुभावाः-कटाक्षसंवलनं ललितमधुरोद्गारमधुरभाषणप्राशस्त्यमौत्क(ज्ज्व)ल्यम् । एतैः शृङ्गाररसोऽनुभूयते यदाह भरतः—

नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च ।
मधुरैश्चाङ्गविहारैस्तस्याऽभिनयः प्रयोक्तव्यः ॥[99]

अथ हास्यस्यानुभावाः कथ्यन्ते—

विकृताकारैर्वाक्यैरङ्गविकारैश्च विकृतवेषैश्च !
हास्यं जनयति यस्मात् तस्माद् ज्ञेयो रसो हास्यः ॥[100]

अथ करुणरसानुभावाः कथ्यन्ते । यदाह भरतः—

निःश्वसितैरथ रुदितैर्महाप्रता(ला)पपरिवेद(देव)नैश्चाऽपि ।
अभिनेयः करुणरसो देहाघाता(यासा)भिघातैश्च ॥१३॥[101]

अथ रौद्ररसानुभावाः कथ्यन्ते—ताडनं पीडनं छेदो भेदः प्रहारः शस्त्रसङ्घा-(संपा ?)तः रक्तनयनताभ्रुकुटीत्यादि । यदाह भरतः—नानाप्रहरणसंकुलस(शि)-रसः कम्पैः कराग्रनिः(निष्)पेषैः । एभिस्त्वर्थविशेषैरस्याभिनयः प्रयोक्तव्यः । वीररसानुभावाः कथ्यन्ते । यदाह भरतः—

स्थितिस्थैर्यशौर्यधैर्यवीर्यैरुत्साहपराक्रमप्रभावैश्च ।[102]
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः ॥

भयानकरसानुभावाः कथ्यन्ते । यदाह भरतः—कम्पित[कं],करचरणनयन-

योधलनं च पुलको मुखवैवर्ण्य(र्ण्यं),स्वरभेद इत्यादयोऽनुभावाः । एतैर्भयानकरसोऽनुभूयते । अथ बीभत्सरसानुभावाः कथ्यन्ते—सर्वाङ्गोपाङ्गसंहारा मुखनयनविकूणनं निष्ठीवनमुद्वेग इत्यादयोऽनुभावाः स्युः । एतैर्बीभत्स { क } रसोऽनुभूयते । य(अ)थाऽद्भुतानुभावानाह[103] —यदाह भरतः—

परुषग्रहणो(ण) { ऽ } त्रसनै(स्पर्शग्रहणोल्लसनैः ?)र्हाहाकारैश्च साधुवाक्यैश्च ।
वेपथुगद्गदवचनैः स्वरभेदैरभिनयस्तस्य ॥

इत्यनुभावलक्षणानि ।

अथ व्यभिचारे(रि)भावानां लक्षणान्युच्यन्ते—अष्टौ सात्त्विका यथा—

स्तम्भः स्वेदोऽथ रोमाञ्च(ञ्चः)स्वरभेदोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥१॥[104]
स्तम्भो गतिनिरोधः स्यात् स्वेदः स्विन्नाङ्गता मता(तः) ।
रोमाञ्चो रोमहर्षः स्यात् स्वरभेद सु(स्तु)संज्ञितः ॥२॥[105]
गद्गदत्वं वेपथुस्तु कम्पनं तु विवर्णता ।
मुखशोभाऽन्यथा भाव { : } स्व(स्त्व)श्रुनेत्राम्बुशब्दता ॥३॥
सर्वथा नष्टचेत(ष्ट)त्वं प्रलयः कथितो बुधैः ।[105A]

यद्यप्येते यथास्वं सर्वेषु रसेषु व्यभिचरन्ति, तथापि व्यभिचारित्वमनादृत्य सत्त्वमात्रे(त्र)सम्भ[वा भ]वंति इति सात्त्विकास्तच्च, सत्त्वं परगतदुःखादिभावनायामत्यन्तानुकूलान्ता(न्तः)करणं(ण)[त्वं] नाम । सत्त्वं मनः प्रभावस्तेन(मनः प्रभवं, तेन)सत्त्वेन निवृ(र्वृ)त्तः (वृत्ताः ?)सात्त्विका(काः) । अधुना दिङ्मात्रमुदाह्रि(ह्रि)यते—

आयातासि विमुच(ञ्च)वेपथुभरं दृष्टाऽसि किं केनचि—
न्नीलं चे(चैorचो) लममुञ्च मुञ्च हरतु स्वेदं निशीथाऽनिलः ।
इत्युक्ते भयसन्नकण्ठमसकृन्ना(द्या)मीति तस्यं(ल्पं) गता
जल्पन्ती परिरभ्यते सुकृतिना स्वैरं नवा(व)स्वैरिणी ॥१॥[106]

दृष्ट व्याव यितेन(दृष्टव्या दयितेति) लोचनयुगं बाष्पाम्बुभिः प्लावितं
गन्तव्यं सहसा तदन्तिकमिति स्तम्भेत(न) रुद्धा गतिः ।
प्राप्तव्यः परिरम्भसम्भ्रम इति प्रौढप्रकम्पौ भुजौ

व्यभिचारिणो ब्रूते

(सू.४६) निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥३१॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥३२॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥३३॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥३४॥

---

विघ्नैरन्तरितानि हन्त जगति श्रेयांसि सर्वाण्यपि ॥२॥

स्मरबाणलाङ्गलाग्रैः कृष्टे भूयः कलेवरक्षेत्रे ।
रोमाञ्च श(स)स्यवृन्दे बीजं तन्व्याः समाश्लेष(षः) ॥३॥

कयाचित् कामिन्या [कोऽपि]कामी अशोकतरुसमु(मू)हमध्ये सङ्गमार्थमाहूतस्तत्र तामदृष्ट्वा तस्या अभिज्ञानार्थं तद्गृहमार्गेण गतवान् ।

ग्रामतरुणं तरुण्या नववञ्जुर(ल)मञ्जरीसनाथकरं ।
पश्य(श्यं)त्या भवति मुहुर्नितरां मलिना मुखच्छाया १ ॥

द्रष्टुं न क्षमते न च प्रियतमं वक्तुं न तावद् गिरं
श्रोतुं नैव विवर्तितुं प्रियतमा मुग्धा तदा केवलम् ।
सम्मूढे प्रियच(न ? )र्मवृत्तिविधुरा(संमूढेन्द्रियवर्गवृत्तिविधुरा)क्रीडागृहे सुन्दरे (री)
भित्तौ निर्मितपुत्रिकेव मदनव्यासक्तचित्ता स्थिता ॥३॥

एवमन्येऽपि सात्त्विका भावाः स्वयमुदाहार्याः ।

अथ व्यभिचारिणां भावानां लक्षणान्युच्यन्ते। भावनिरुक्तै(क्ते ? )र्व्यभिचारिघटितत्वेन लक्षणकथनावसरः ।

रसे वेद(चैव)तथा भावे स्वेच्छया नियमं विना ।
चरन्तः कथिता सर्वे भावास्तु व्यभिचारिणः ॥१॥[107]

नामानि मूलो(ले उ)क्तानि[107A] । सोदाहरणानि लक्षणान्युच्यन्ते । निर्वेदस्य लक्षणं सोदाहरणं लिख्यते—

तत्त्वज्ञानापदीर्ष्यादे नि(र्नि)र्वेदः स्वापमाननम् ।
तत्र चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वसितादयः ॥[108]

तत्त्वज्ञानान्निर्वेदो यथा—

प्राप्ताः श्रियः सकलकामदुधास्ततः किं ?
दत्तं पदं शिरसि विद्विषतां ततः किम् ? ।
संप्रीणिताः प्रणयिनो विभवैस्ततः किं ?
कल्प(ल्पं)स्थितं तनुभृतां तनुभिस्ततः किम् ? ॥[109]

तत्राऽऽपज्जनितो यथा—

राज्ञां विपद्बन्धुवियोगदुःख(खं) देशच्युतिदु(र्दु)र्गत(म)मार्गसेवा ।
आस्वाद्यतेऽस्याः खलु निष्फलायाः फलं मयैतच्चिरजीवितायाः ॥१॥[110]

अथवा–

किं करोमि ? क्व गच्छामि ? क्व(क)मुपैमि दुरात्मना ।
दुर्भरेणोदरेणाहं प्राणैरपि विडम्बिनः(तः) ॥२॥[111]

ईर्ष्याजनितो यथा—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राऽप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः !
धिग् धिग् शक्रजितं प्रबोधितवता कि कुम्भकर्णेन वा ?
स्वर्गग्रामटिकाविलुण्ट(ण्ठ)नवृथोच्छूनैः किमेभिर्भुजैः ? ॥३॥[112]

बलस्यापचयो **ग्लानिः** यथा–[113]

किश(स)लयमिव मुग्धं बन्धनाद् विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षौ(क्षा)ममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥४॥

**शङ्का** अनिष्टसमुन्नयो यथा–

आनीतैव मया सीता किं नानीता पुरा (रु) द्विषः ।
स चेदायाति लङ्कायां न जाने किं भवेत् तदा ॥५॥[114]

परोत्कर्षा [ऽ] क्षमा [ऽ] सूया गर्वदौर्जन्यमन्य(न्यु)जा ।[115]

तत्र गर्वजा यथा रावणस्य दूतो वदति—

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः सम्भवेत्
प्रोद्यद्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसो विश्रंश(विस्रंस)नं चाऽऽत्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ? ॥

दौर्जात्याद्यथा—

यदि परगुणा न क्षम्यन्ते यतः(त)स्व गुणार्जने
न हि परयशो निन्दा [व्याजैर]लं परिमार्जितम् ।
चि(वि)रमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो,
दिनकरकराण्याणि (न्पाणि)च्छत्रैर्नुदन् श्रममेष्यति॥२॥[116]

मन्युजा यथा-अज्ञानेन पराङ्मुखीमित्यादि ।[117]

**अथ मदस्य** लक्षणं यथा—सम्मोहानन्दसंभेदो स(म)दो मद्योपयोगजः ।[118]

यथा—[भा]वहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ॥
चक्रिरे भृशमृजोरपि वध्वा कामिनेव तरुणेन मदेन ॥[119]

**अथ श्रमस्य** लक्षणमुच्यते—

श्रम(मः)खेदोध्वगत्यादेर्निद्रा श्वासादिकृन् मतः ।[120]

अलसल(लु)लितमुग्धाऽत्यन्त (न्यध्व)सन्तापखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
मृदुमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥१॥[121]

अन्यान्युदाहरणानि **रसरत्नप्रदीपिकायां**[122] ज्ञेयानि ग्रन्थविस्तारभयान्न लिख्यन्ते ।

श्रमादिजन्य**मालस्यं** पुरुषार्थेष्वनादरः ।
दौर्गत्यादेरनौजस्यं दैन्यमलिनतादिकृत् ॥

ध्यानं चिन्ता हितानाप्तेः सन्तापादिकरी मता ।
मोहो विचित्तता प्रीतिः(भीतिः)दुःखवेगानुचिन्तनैः ॥[123]
स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ।
सन्तोषो ज्ञानशक्त्यादेः धृतिरव्यग्रभोगकृत् ॥[124]

यथा—

द्व(व)यमिह परितुष्टाः स्वल्प(वल्कलै)स्त्वं च लक्ष्म्या
सम इति(ह)परिभाषे(तोषो) निर्विशेषो विशेषः ।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥[125] इति

सङ्कोचश्चेतसो व्रीडा वैवर्ण्याधोमुखत्वकृत् ।[126]

यथा—

दर्पणेषु परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कानि[न]चकार लज्जया ॥

वाक्पारुष्यकरी चेतो { भ } [ऽ]वस्था चापलम( म् ) । वाक्पारुष्येत्युपलक्षणं वधबन्धनयोरनवस्था[ऽ]विमृष्यकारिता । यथा—

कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफः ।
रजोभिरन्तः परिवेषशोभिलीलारविन्दं भ्रमयाञ्चकार ॥

मनः प्रसादो हर्षः स्यादिष्टावाप्तिस्तवादिभिः । यथा—[127]

आगते दयिते बाला हर्षोत्कर्षवशं यदा (गता ?) ।
उत्तरीयं न जानाति विभ्रष्टं स्तनमण्डलात् ॥ इति ॥

आवेगः सम्भ्रमो राजगजवर्षादिसम्भवः । यथा—

अर्घमर्घमिति वादिनं नृपं सो[ऽ]नवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः संदधे दृशमुदग्रतारकाम् ॥१॥

अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनप्रकृतिः ।[127A]
निन्दादितः पराऽवज्ञा गर्वो [ऽ]सूयादिकृद् भवेत् ॥
सत्त्वभ्रंशो विषादः स्यात् सहायान्वेषणादितः ।

**औत्सुक्यं** वाञ्छितप्राप्तौ कालक्षेपासहिष्णुता ।

यथा—

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यया ।
बद्धुं न सम्भावित एव तावत् करेण रुद्धोऽपि हि केशपाशः ॥१॥

मनः सम्मीलनं **निद्रा** क्लमश्रमत(म)दादिभिः ।
सम्मीलनं विषयवैमुख्यम् ।
मनःक्षेपस्त्व**पस्मारो** ग्रहावेशादिसम्भवः ॥१॥[128]

व्याधित्वेनास्य प्राप्तावपि पुनरुपादानम् । बीभत्सभयानकसम्भवः नियमश्च । बाध्यन्तरस्य तु विप्रलम्भादावपीति[129] । **सुप्तं**[130] निद्रामुपेतस्य विषयानुभवस्तु यः । विषयोत्पादि स्वप्नज्ञानमित्यर्थः । निद्राशमनहेतुभ्यो **विबोध**श्चेतनागमः । कोप एव स्थिरतरो[ऽ]**मर्ष**[131] इति कथ्यते ।

यथा—

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनं द्वि
सन्धिं करोतु भवतां नृपतिः पणेन ॥१॥

**अविहित्थं**(त्था)तु लज्जाद्यैर्हर्षाद्याकारगोपनम् ।[132]

यथा—

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

अधिक्षेपापमानादेश्चेतश्चण्डत्व**मुग्रता** ।[133]
शास्त्रोपदेशमन्त्राद्यैरर्थनिर्धारणं **मतिः**[134] ॥
विरहादेर्मनस्तापो **व्याधि**दु(र्दु)स्थांगतादिकृत् ।[135]

यथा—

पाण्डू(ण्डु)क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
अवे(आवे) दयति नितान्तं क्षेत्रियरोमं(गं)सखि हृदन्त(न्तः) ॥

**निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताभिधानार्थम् । तेन**

सन्निपातग्रहादिभ्य **उन्माद**श्चित्तविभ्रमः ।[136]

तदुक्तम्–

उत्तमानां विप्रलम्भभावात् प्रियवियोगतः ।
नीचानां विभवभ्रंशात् सर्वेषां सन्निपाततः ॥१॥

यथा **मेघदूते** । रोगाद्यैः प्राणा(ग)वस्था[तु]मरणस्य **मृति**र्मता[137] । मुख्यस्य भावना(त्वा)योगात्[138] यथा–राममन्मथशरेणेत्यादि । वस्तुतस्तु मु(मू )र्च्छाविशेष एव मरणम् । अन्यथाऽऽलम्बनोच्छेदेन भाव { त्वां } त्वां(त्वा)नुपपत्तेः । औत्पातिके(कै)र्मनःक्षेप**स्त्रासः**कम्पादिकारकः । पूर्वापरविचारोत्थं भयं त्रासात् पृथग् भवेत्[139] । **तर्को** विचारः सन्देहा(हे)भ्रूशिरोङ्गुली(लि)नर्तकः । विचारो विमर्षः । यथा–

[अ]नङ्गः पञ्चभिः पुष्पैर्विश्वं व्यजयतेषुभिः ।
इत्यसम्भाव्यमथवा विचित्रा वस्तुशक्तयः ॥

प्रयोजनवशादेषामुपनिबन्धो, न रसविशेषनियमेनेति पृथगुपादानम्[140] । विभावानुभावौ तु लोकादवगन्तु(न्तुं) शक्याविति न तयोरभिधानमिति भावः । स्वनामतोऽसाधारणनाम्ना तेन लक्ष्यपर्य्यालोचनयैवं लक्षणलाभ इत्यर्थः । तत्सामान्यलक्षण(णम्)–

विशेषेणाऽभिमुख्येन चरन्तो व्यभिचारिणः ।
{ यतः } स्थायिन्युन्मग्ननिर्मग्ना कल्लोला इव वारिधाविति[141] ।

ननु निर्वेदस्याऽमङ्गलस्य प्रथमत उपादानमसङ्गतमित्याशङ्क्य शान्तरसं प्रति स्थायिभावत्वमस्यास्तीति प्रथमतस्तस्योपादानमित्याह–**निर्वेदस्येत्यादि** । निर्वेद(दः)स्थायिभावो यस्य [तं]शान्तरसमुदाहरति । **यथेति** । **भर्तृहरि**वचनमिदम्-अत्र वैराग्यादिर्विभावाः । **यमाद्यनुभावः** । धृत्यादिव्य(र्व्य)भिचारी । निर्वेदस्थायिभावः शान्तो रसः । अत्र विरक्ता एवाधिकारिणः । न चैवं सर्वविषयत्वा { द् } -भावाद् रसत्वाभाव इति वाच्यम् । शृङ्गारस्यापि सर्वे(र्व)विषयत्वाभावेनारसत्वप्र-

(सू० ४७) निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।

यथा

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥४४॥

(सू० ४८) रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ॥३५॥
भावः प्रोक्तः

---

सङ्गात् । टीकान्तरे[142] व्याख्या यथा—ननु नाट्यस्य वैशिष्यो(ष्ट्यो)पादानेन श्रव्ये रसान्तरसत्त्वमायाति । तत् कीदृगित्याह—**निर्वेदस्येत्यादि** । अमङ्गलप्रायत्वं विषयवैराग्यस्तद्रू(स्वरू)पत्वात् प्रथममुपादानमिति सम्बन्धः । उभयसन्निधिपाठादुभयरूपता । विसर्जनीयजिह्वामूलीययोरिव स्वरव्यञ्जनता । न च विरोधः । अवच्छेदभेदेन भावात् । तत्त्वज्ञानजन्यस्य तस्य स्थायित्वात् कारणान्तरजन्यस्य च सञ्चारित्वात् ।[143] तदुक्तम्—

स्थायी स्याद् विषयेष्वेव तच्च ज्ञानाद् भवेद् यदि ।
इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ ॥[144] इति ।

अथ शम एव शान्तरसे स्थायी । तदुक्तम्—

शमो निरीहावस्थायामात्मविश्रामजं सुखम् । इति ।

न निर्वेदस्तस्यासुखत्वात् । तदुक्तम्—

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशी(शीं)कलाम् ॥[145] इति ।

नैवम् । शोकवत् समाधानस्योक्तत्वात् । { किञ्च एकोनपञ्चाशदशनुश्च भावयुक्तीनिबद्धाः परिपोषयन्ति }[146] । शमस्य भावस्याङ्गीकृतौ मुनिपरिगणितभावानां एकोनपञ्चाशदधिकत्वापत्तेः । अष्टौ स्थायिभावाः सात्त्विका अष्टौ त्रयस्त्रिंशद् व्यभिचारिण इत्येवं मुनिना गणनात् । काचित् क (कादाचित्क)शमप्रयोगस्तु निर्वेदपरत्वेन व्याख्येयः । स्थायित्वाभिधानफलमाह—**निर्वेदः**

आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया । कान्ताविषया तु व्यक्ता शृङ्गारः ।

उदाहरणम्

कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥४५॥

---

स्थायिभावोऽस्तीत्यादि[146A] । अस्ति { म०वाध्वनिकः } [147]शान्तः । अहो(हौ)वेत्यादि । स्त्रैणं स्त्रीसमूहः । क्वचिन्मध्ये तस्मिन्नेव पुण्यारण्ये । द्वयोः समत्वात् । प्रलपत इति । शिव शिव शिवेत्यपि वचनमनर्थकम् । प्रकृतिशब्दादनधिकार्थत्वात् । सर्वेषामेव ब्रह्मप्रतिपादकत्वात् । अत्र जीवन्मुक्त-आलम्बनम् । साम्यदर्शनमनुभावः । मतिधृत्यादयः सञ्चारिण इत्यादि ज्ञेयम् । अथ रसभावतदाभासभावशान्त्यादिरक्रम इति । क्रमप्राप्तं भावं लक्षयति । रतिरित्यादि । रतिः प्रेमोच्यते । तथा शब्दश्चार्थे । तथा च देवमुनिगुरुनृपादिषु या प्रीतिः स भाव एवोच्यते । [दे]वादिविषया देवादिसम्बन्धिनी रतिर्भाव एव । कान्ताविषयिणी रतिः शृङ्गार उच्यते । तथा व्यञ्जितो व्यङ्ग्यरूपो व्यभिचार्ये(र्य) { ऽ } पि भाव उच्यते । ननु कान्ता विषयिणी रतिः कुतो भावो न भवेत्, प्रेम[त]त्वस्योभयत्राऽपि तुल्यत्वादित्यत आह—कान्ताविषयेति । तस्या विभावादिभिः स्फुटाभिव्यक्तत्वादित्यर्थः । देवादिविषय(या) रतिस्तु विभावादिभिः [अ]परिपूर्णा । तेनान्याङ्गत्वे पुष्टिराहित्येन रत्युद्बोधमात्रं, न रसत्वमत एव वक्ष्यति, रसस्य पूर्णघनानन्दस्य स्वविश्रान्तस्य नाङ्गत्वं, न वाच्यत्वमिति । रसपदेन स्थायिभावा लक्ष्यन्ते । विभावादिकृतपुष्टिरहितउद्बुद्धमात्रः स्थाय्येव भावो यथा—

हरश्च किञ्चित् परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

—इत्यत्र महादेवरत्युद्बोधस्य मदनदाहस्त्रीसन्निधानादिना परिपुष्ट(ष्टि)-रहितस्य भावमात्रत्वं न रसत्वमिति ज्ञेयम् । देवविषयं भावमुदाहरति—कण्ठेति । कस्यचिद् भक्तस्य वचनं, हे ईश महादेव ते तव, कण्ठकोणविनिर्दि(वि)ष्टं कण्ठ-

हरत्यघं संप्रतिहेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥४६॥

एवमन्यदप्युदाहार्यम् ।

अङ्कितव्यभिचारी यथा

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ।
नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥४७॥

अत्र विधिं प्रत्यसूया ।

---

कोणसंलग्नं, विषमं [वि]षि(षं) मे महामृतम् । उपात्तं चन्द्रकलारूपस्वीकृतममृतमपि भवपु(शा)रीराद्भिन्नवृत्ति यदि तर्हि तदमृतं मे मह्यं न रोचते । अन्यस्य यथा तथाऽस्तु मम तु न रुचिविषय इत्यर्थः । अत्र महादेव आलम्बनम् । ईशपदप्रतिपाद्याव्याहतैश्वर्यमुद्दीपनम् । संस्तवोऽनुभावः । धृतिर्म(मा)हात्म्यादयः सञ्चारिणः । एभिरनुमितस्तावकरतीनां सामाजिकानां विभावादिभिरुद्बुद्धा रतिः स्वप्रकाशसमूहालम्बनो भावः । ननु कथमस्या न रसत्वम् ।[148] स(अ)स्या रतेरसुखात्मकत्वादिति चेन्न । प्रमाणाभावात् । सामग्रीसमत्वेनाविशेषात् । शुष्कनालिकेरचर्वण(णा)त इवात्र यथाकथञ्चिदास्वादः । तत्र च रसालयष्टिचर्वणन्यायेनामूलत(तः)पूर्णघनानन्द इत्यत्र सहृदयहृदयमेव प्रमाणमिति चेन्न । भवन्तं(क्तं ?) विनाऽन्यसहृदयस्य दुर्लभत्वात् । वस्तुतस्तु स्वतन्त्रेण मुनिना रसानां नवत्वस्य नौ(गौ)तमेनेव हेत्वाभासानां पञ्चत्वोपगमात्, नव रसा, अन्ये भावा इति मुनिनोक्तत्वात् । { न चाऽयं शान्तो रसा भेदावभासान् महदिव विषयिकभावोद्रेकेणात्ममात्रालम्बनात्[149] } । मुनिविषयभावमाह-**हरत्यघमिति** । **माघे** पद्यम् । नारदं प्रति कृत्स्न(ष्ण)स्य स्तुतिरियम् । कालत्रितये [भूते] वर्तमाने भविष्यतीत्येव । योग्यतां पुण्यतत्त्वम् । सम्प्रति दर्शनं वर्तमानकालीनम् । अघं पापम् । एष्यत आगा(ग)मिष्यतः । पुण्यस्य । पूर्वाचरितैः पूर्वजन्मार्जितैः ।

**(सू० ४९) तदाभासा अनौचित्यप्रवर्तिताः ।**

**तदाभासा रसाभासा भावाभासाश्च ।**

**तत्र रसाभासो यथा**

**स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे**
**विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।**
**सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्**
**तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥४८॥**

---

शरीरभाजां प्रकृष्टज्ञानवताम् । भवदीयस्य भवत्सम्बन्धिनो, [न] यस्य कस्यचित् । षष्ट्यर्थ्यौ(र्थ्यो ?) विषयत्वाख्यः सम्बन्धः । भवद्दर्शनस्य तु मुक्तिहेतुत्वमेव । **एवमिति** । अन्यत्र पुत्रादिविषयकरतो(तेः) भावा(व)त्वमेव ज्ञेयम् । व्यभिचारिभावमुदाहरति । **जाने** इति । **अमरुशतक**पद्यम् । कस्यचित् कामुकस्य { मिति } वचनम् । हे भ्रातः, अद्य मया स्वप्ने प्रियतमा कोपपराङ्मुखी सती, पाणिना मा नां(मां)स्पृशेत्युक्त्वा गन्तुं प्रवृत्ता सती दृष्टा । ततोऽहं यावदालिङ्ग्य प्रियवाक्यशतैः प्रियतमामाश्वासा(स)यानी(मी)ति, जाने स्मरामि, स्मृत्वैव कथयामि । तत्त्वाहर्यश्च[150]कर्मकत्वादात्मनेपदम् । तावद्धूर्तेत(न) दैव(वे)नाऽहं निद्रादरिद्रः कृतो निद्राशून्यो विहितः। शते(ठे)न पराहितकारिणा। विदधातीति विधिर्दुर्घटघटकः । **अत्रेति** । असूया शठपदगम्या । शठपदव्यञ्जिता । विधिं प्रति असूया व्यभिचारोभावः । कदाचिज्जायते कदाचिन्न जायते व्यभिचारिभावः ।

ननु त्वामालिल्येया(त्या)दावपि असूयावगतौ भावध्वनित्वमेव युक्तम् । तत् कथं विप्रलम्भोदाहरणं पूर्वमुक्तमिति चेन्न । समर्थनीयवाक्यार्थेन विप्रलम्भागमानन्तरं भावाभिव्यक्तेरकिञ्चित्करत्वादिति । अत्र[151]नायको वा(आ)लम्बनविभावौ-(वो) नायिकाकोप{ त्वं } [उ]द्दीपनं(नः), परिरम्भश्चाटुकशतं चानुभावौ,शठपदगम्या-[ऽ]सूया व(च) सञ्चारिणी। एतेषा(षां)रते[152]श्च समूहालम्बनविप्रलम्भे रसे असूयायाः शतत्वाभिधानानुभावव्यङ्ग(ङ्ग्य)त्वकृतचारुत्वेनापाततः प्राधान्यम् । पर्यन्ते तु रसस्यैवा(व) । पानकरसे मरिचादेरुद्भटस्य यत् किञ्चिदङ्गस्यैवेति, भावध्वनित्वमिति । सहृदयसाक्षिको रसभावयोर्भेद इत्यादि ग्रन्थान्तराद् ज्ञेयम्। ग्रन्थविस्तरभ-

अत्रानेक कामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

भावाभासो यथा

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी ।
तत् किं करोमि विदधे कथमत्र मैत्रीं ।
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥४९॥

अत्र चिन्ता अनौचित्यप्रवर्तिता । एवमन्येऽप्युदाहार्याः ।

---

यान्नोच्यते । एवं रसभावौ निरूप्य तदाभासनिरूपणायोपक्रमते । **तदाभासा** इति । तत्पदेन पूर्वपरामृष्टयो रसभावयोरनुकर्षणं मनसि निधायाऽऽह—**तदाभासा रसाभासा भावाभासाश्चेति** । अन्यथा भावानामेव सन्निकृष्टचित्तानुकर्षणाशङ्का स्यात् । **तत्रेति** । रसस्य प्राथमिकत्वेन रसाभासोदाहरणमाह—**स्तुम** इति । कामुकः कश्चित् पुंश्चली (लीं) प्रत्याह—हे शोभननेत्रे, यं प्रियं विना त्वं क्षणमपि न रमसे । क(कं)स्तुमो, यमन्वेषयसि त्वम् । युद्धयज्ञे प्राणान् को टि(वि)लेभे दत्तवान् , यथा रणे प्राणत्यागी कृतार्थस्तथा त्वया मृग्यमाणोऽपीत्यर्थः । विपूर्वो लभिर्दाने । हे चन्द्रानने ! त्वं बलाद्यमालिङ्ग्य(ङ्ग)सि, सुलग्ने, सप्तमभवने जीवे सति जातः स कः । शशिमुखीति सम्बोधनं युक्तम् । चन्द्रेणापि क्रोडीकृतस्य शस(श)स्यापरित्यागात् । सर्वावयवा(ब)सौन्दर्यमाह—**मदने**त्यादि । मदननगरीराज्ये अत्र स्थितस्यैव मदनस्य प्रभुत्वात् । ध्याननिष्पन्नत्वान्नगरीत्वं, तपः सम्पत्त्ये(त्त्या) च राज्यलाभः । **अत्रेति** । रमणान्वेषणालिङ्गनध्यानानि व्यापारा बहवस्ते च सर्वे वर्तमानकालीनानेकविषयत्वेन सम्भवन्ति । तदाहाऽ**नेककामुकविषयमभिलाषमि**ति । एकस्या रमणमृगणालिङ्गनध्यानरूपानुचितस्य व्यङ्ग्यव्यापारस्योपादानकर्तृबहुकामुकविषयश्रृङ्गारप्रवृत्तेराभासत्वमिति भावार्थश्चायमेकस्या नायिकाया अनेककामुकव्यापारोऽनुचित [इति] श्रृङ्गाराभासत्वम् । अनेककामुकविषा(ष)यत्वेन बलालिङ्गनगम्यत्वेन च शास्त्रलोकान्ति(ति)क(क)माद्भतेराभासता । तदुक्तम् -उपनायकसंस्थायां मुनिगुरुपत्नीग-

(सू० ५०) भावस्य शान्तिरुदयः संधिः शबलता तथा ॥३६॥

क्रमेणोदाहरणम्

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत् संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥५०॥

अत्र कोपस्य ।

---

तायां च बहुनायकविषयायां रतौ, तथा उभय(या)निष्ठायामिति । एवं रसान्तरेऽप्याभासोऽवसेयः । भावाभासमुदाहरति **राकेति** । रावणवचनमिदम् । सा सीता पूर्णचन्द्रनिभानना । चञ्चलदीर्घनेत्रा । प्रौढयौवनतरङ्गितविभ्रमस्थानम् । तत् तस्मात् । किं करोमि ? अत्र सीताविषयो(यां)मैत्री(त्रीं) कथं विदधे । तत्स्वीकृतिविषये उपायः कः । अत्र भावस्याभासत्वमाह—**अत्रे**ति । चिन्तायाः परस्त्रीविषयत्वेन रसाभावादनौचित्यम् । एवं निर्वेदादिविषया भावाभासा उदाहर्तव्याः । एवं अन्ये रसान्तरा { भावा } भासा भावान्तराभासाश्चेत्यर्थः । अथ भावशान्त्यादिरक्रम इत्यत्रादिशब्दार्थमाह-**भावस्ये**ति । भावशान्तिः १ भावोदयः २ भावसन्धिः ३ भावशबलता ४। तथाशब्दश्चार्थे ज्ञेयोऽनुक्तसमुच्चयार्थ इति । भावस्य शान्तिः प्रशमः१ तुल्यावस्थयोर्भावयोः संवलनविधिः २ पूर्वपूर्वोपमर्दन परंपरोदयः भावोदय(यः) । भावशबलता । भावशान्तेरुदाहरणं यथा—**तस्या** इति । धृष्टनायकस्य वचनमिदम् । तस्याः सपत्न्या (त्न्याः) { वनं } [सान्द्रंनिबिडं],श्रीखण्डादिविलेपनं यत्(त्र), स्तनयुगं, तस्य प्रकृष्टमालिङ्गनं, तेन विलेपनमयी मुद्रा, तदाकारं चिह्नं, तेनाङ्कितं तदीयत्वेन ज्ञापितं, तया लाञ्छितं, वक्षो मम, चरणानतिस्थलेन किमिति गोपाय्यते इति प्रियतमोक्ते सति क्व तर्हि लेपनं नास्त्येवेत्यभिधाय तद् विलेपनं प्रमार्ष्टुं मया सहसा रभसेन, प्रियतमा आश्लिष्टा, तस्याश्चालिङ्गनसुखवशात् तत्क्रोधकारणं विस्मृतमभूत् । च शब्द आलिङ्गनकोपशान्त्योरेककालप्रद्योतनार्थः । अत्र कोपाख्यभावस्य शान्तिमाह—**अत्रै(त्रे)**ति । शान्तिरित्यनुषज्यते । अत्र रत्युत्पत्तौ

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णींस्थितस्तत्क्षणं
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥५१॥

अत्रौत्सुक्यस्य ।

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥५२॥

अत्रावेगहर्षयोः ।

---

कोपशान्तिवत् संभोगश्रृङ्गारोत्पत्तौ(त्तिः);ईर्ष्या विप्रलम्भे शमोऽप्यस्ति यद्यपि,तथापि शान्तेरेव प्राधान्येन निर्देशात् भावशान्ति(न्ते)रेवोदाहरणमिति १। अथ भावोदयमुदाहरति, **एकस्मिन्निति** । कविवचनम् । एकस्मिन् शयने सपत्नीनामग्रहे सति खिन्नया कयाचिन्मुग्धया प्रियवाक्यानि कुर्वन्नपि प्रियतमः सम्भ्रमादवज्ञातस्तूष्णीं स्थितः सन् माऽभूत् सुप्त इवेति, निद्राणः, (निद्रितः), द्रुतमेव, वेगविवर्तितकन्धरं यथा स्यात् तथा पुनरवलोकितः । अत्रौत्सुक्यस्योदयः । न तु कोपस्य प्रशमः । तदनुभावानुपाद(दा)नात् । भावसन्धिमुदाहरति **उत्सिक्तस्येति** । रामवचनमिदम् । उत्सिक्तस्योद्रिक्तस्य ख्यातस्येत्यर्थः । **तप** इत्यादि । धर्मयुद्धवीरस्येत्यर्थः । तपसः पराक्रमस्य निधिभूतस्य परशोरागमनं (परशुरामागमनं ?)यथा स्यात् तत्सम्पर्के [प्रियता]प्रियत्वं, वीरस्य वेगाधिक्यं, सा । र[भ]स उत्साहः । उत्फाल उद्रेकः । एकभो(तो)मां कल(र्ष)तः । अनेनावेगाख्यो भावो दर्शितः । एष सीतापरिरम्भस्या-(श्चा)न्यतो मां रुणद्धि । एषोऽनुभूयमानः शिशिरः शीतलः उपमानगतरागमाधुर्य्यलाभः, स्निग्धः प्रेमसंवलितः, अत एव रुणद्धि । स्निग्धेन युद्धानिच्छा । अनेन हर्षाख्यो भावोऽनयोरावेगहर्षयोरत्र सन्धिः । आवेगस्व(स्त्व)रा, पूर्वार्द्धगम्यः । हर्षस्त्वपरार्द्धप्रत्याय्यः । तत्सङ्गप्रियतोत्साहयो सञ्चलितयोर्द्वयोः परी(रि)रम्भेण तुल्य-

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥५३॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता । भावस्थितिस्तूक्ता उदाहृता च ।

(सू० ५१) मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।
ते भावशान्त्यादयः । अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत् ।

---

बलता । न त्वेकस्येत्यर्थः । भावशबलतामुदाहरति **क्वाकार्यमिति** । उर्वशी वि-द(र)हितस्य पुरूरवसो वचनमिदम् । शापसमाप्तौ यदोर्वशी स्वर्गं गता, तदा पुरु(रू)रवसो वितर्कोऽयम् । शशलक्ष्मणः चन्द्रसा(स्य) कुलं क्व, इदमकार्यं क्वेत्यन्वयः । इहाऽनवस्थानप्रतिपादनाय के(क्वे)ति द्विरुपादानम् । **अत्रेति** । भावानां शबलतेत्यनुषज्यते । क्वाकार्यं शशलक्ष्मणः क्व च कुलमिति वाक्यद्वयेन वितर्को दर्शित भूयोऽपि दर्श्येत । सेत्यनेनौत्सुक्यम् । दोषाणामुपशान्तये श्रुतमित्यनेन मतिः । अहो कोपेऽपि कान्तं मुखमित्यनेन स्मृतिः । किं वक्ष्यंत्यपकल्मषाः कृतधिय इत्यनेन शङ्का । स्वप्नेऽपि सा दुर्लभेत्यनेन दैन्यम् । हे चेतो धाष्टर्चमुपे(स्वास्थ्यमुपै)-हीत्यनेन धृतिः । कः खलु युवा धन्योऽधरं धास्यतीति चिन्ता । इत्यादि वितर्केत्यारभ्य चिन्तानामिन्यन्तेन स्पष्टा योजना । अत्र विशेषो यथा—अत्र शान्तसञ्चारिवितर्कोऽवगमः(तः) । भूय इत्यादि । अपिना जनिता सम्भावनोत्कटता । एतावद् गम्येन शृङ्गारसञ्चार्यौत्सुक्येन शान्तसञ्चारिवितर्कबाधनं, एवमुत्तरोत्तरं सङ्गमनीयम् । श्रुतं विद्या चेति मतिः इत्यपि **टीकान्तरे** । ननु भावस्य शान्त्यादिवत् भावस्थितिरपि किं नोदाहृतेत्यत आह—**भावस्थितिस्त्विति** । व्यभिचारितव्यञ्जित इत्यादौ, जाने कोपपराङ्मुखीत्यादौ, उदाहृतैवेत्यर्थः । यद्यपि तत्र साक्षाद्भावस्थितिर्नोक्ता तथापि भावसत्तायाः स्थितिरूपत्वाव(त्) भावस्वरूपोदाहरणेनैवस्थित्युदाहरणमप्युक्तमेवेति भावः । ननु भावशान्त्यादयो रसं प्रत्यङ्गानि, कथं तेषामङ्गित्वमत आह—**मुख्ये रसेऽपीत्यादिना** । { तु } { तस्याः } सान्द्रे-

(सू० ५२) अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥३७॥

शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः अर्थशक्तिमूलानुरणनरूपव्यङ्ग्य उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः ॥

---

त्यादिपद्ये यदि रसस्य प्राधान्यं तदा रसोदाहरणमेव जातं यदि भावशान्त्या-दीनां प्राधान्यं तदा रसस्याङ्गभूतत्वादधमकाव्यत्वमेव स्यादित्याशङ्क्याह—**मुखे (रव्ये)रसेऽपी**ति । अङ्गित्वं प्राधान्यम् । रससानि(न्नि)ध्येनोद्धटीभूतस्य भावप्रशमा-देरापाततः प्राधान्यं तदाह—**राजानुगते**त्यादि । अयमर्थः । स्पष्टोऽर्थो, यथा, रसादीनां प्राधान्ये उत्तमं काव्यमुक्तं तद्भवतु रसादीनां प्रधानत्वात् भावशान्त्या-दिनिबन्धनमुत्तमं काव्यमित्यत आह—**मुख्येऽपी**ति । **ते** इति । कदाचन रसा-पेक्षया भावशान्त्यादीनां प्रधानत्वात् भावशान्त्याः सातिशयचमत्कारे सतीत्यर्थः । नन्वेका(क)स्येवाङ्गित्वमङ्गत्वं च विरुद्धमित्याशङ्क्य दृष्टान्तमाह—**अङ्गित्वमि**ति । प्रधानत्वम् । राजामु(नु)गतेत्यादि । यथा[153] हस्त्यश्वरथपा(प,दात(ति)वादित्रादि-रलङ्कृतः प्रेक्षकाणामुत्पादितविस्मयो भृत्यो, राजनि दृष्टे, एवमनुग्राहकोऽयमुप-करणीभूय भृत्यं विवाहयतीति, यथा राजोत्कर्षे पर्य्यवस्यति, तद्वदस्य प्रशमादेः पार्य्यन्तिको रस इत्यर्थः । एतेन भावपरिग्रहाय भावाश्च शान्त्यादयश्चेति समास इति निरस्तं तस्य रसानन्यत्वेन प्राधान्यानपायात् । एतावता रसभाव तद(दा)-[भास]भावशान्त्यादिरक्रम इत्यादिनाऽलक्ष्यक्रमो व्यङ्ग्यो ध्वनिर्व्याख्यातः ।

साम्प्रतं लक्ष्यक्रमं ध्वनिं विभजते—**अनुस्वानाभे**ति । अनुस्वानः प्रति-शब्दस्तेन तुल्य, एवम्भूतः, संलक्ष्यक्रमव्यङ्ग्यस्थितिर्यः सोऽपरो ध्वनिरुत्तमं काव्यमित्यर्थः । अयमर्थः । प्रतिध्वनाविव संलक्ष्यः क्रमो यत्र तस्य व्यङ्ग्यस्य स्थितिर्यत्रेति ध्वनिविशेषणम् । यथा ध्वनिप्रतिध्वन्योः क्रमो लक्ष्यते तद्वद्वस्त्वल-ङ्कृतितद्व्यञ्जकयोरित्यर्थः । **शब्दार्थे**ति । शब्दश्चार्थो(र्थ)श्चोभयं च । तेषां याः शक्तयः । ततः उत्तिष्ठति प्रादुर्भवति, स तथा । तदन्वयव्यतिरेकानुविधानेन तदुत्थता । यो यदन्वयव्यतिरेकानुविधायी स तदुत्थः । अवच्छेदभेदेनोभयान्वयं

तत्र

अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥३८॥

(सू० ५३) प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।

वस्त्वेवेति अनलंकारं वस्तुमात्रम् । आद्यो यथा

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥५४॥

---

व्यतिरेकानुविधानेन तदुत्थ इत्यर्थः । यो यत्र शब्दानां पर्यायान्तरं न सहते तेनैव शब्देन व्यङ्ग्यार्थप्रतीतिर्भवति नान्येन, स प्रथमः, शब्दशक्त्युद्भवः । द्वितीयस्तु यत्र शब्दः स्वपर्याया(यं) { तु } सहे(ह)ते सोऽर्थः(र्थ)शक्त्युद्भव इत्यर्थः । तृतीयद्भू(स्तू)भयशक्त्युद्भवः । कुत्रचित् शब्दपर्यायं सहते कुत्रचिन्न सहते च तृतीयः । स शब्दशक्त्युद्भवो द्वेधा । यत्र यस्मिन् काव्येऽलङ्कारः शब्दाद् भासते, अलङ्कारो व्यज्यते, प्राधान्येनालङ्कारो व्यज्यते, तदुत्तमं काव्यम् । अप्राधान्येनालङ्कारव्यञ्जने उत्तमकाव्यं न भवति । गुणीभूतमेव तत् काव्यम् । द्वितीयं वस्तु, अलङ्कारव्यतिरिक्तं, सर्व(र्वं) वस्तुविवक्षितम् । अन्यथाऽलङ्कारस्याऽपि वस्तुत्वाद् भेदो न स्यादिति भावः । अलङ्कारव्यङ्ग्यो वस्तुव्यङ्ग्यो द्वेधा शब्दशक्त्युद्भव इति सिद्धे अलङ्कारव्यङ्ग्यमुदाहरति, उल्लास्येति । राज्ञः स्तुतिपक्षे येन देवेन राज्ञा जरते(ठे)न कठिनेन, तद्गर्जितेन सि(सिं)हनादेन, कालकरवालस्य कृष्णखड्गस्य महाम्बुधारा जलं, तस्य वाहः प्रवृत्तिस्तमुल्लास्य-तीक्ष्णीकृत्य युद्धे धाराभिस्त्रिजगति प्रज्वलितो रिपूणां प्रतापो, निर्वापितः । देवादिशब्दानां परावृत्त्यसहत्वात् अन्योऽर्थो यथा—कालः करः कान्तिर्यस्य स कालकरः, स चाऽसौ वालो[=बालः] नवीनो, लक्षणया स चाऽसौ महाम्बुवाहः चेति, तं, बवयोरभेदात् , देवेन इन्द्रेण रणध्वनिर्धाराजलापेक्षया, रिपूणां तेजसां, रणे शब्दे सति । महाप्रताप इति । तेजोविषयः जनकोलाहले सतीत्यर्थः । प्रतापसन्तापः । अत्रोपमालङ्कारस्य व्यङ्ग्यत्वं प्रतिपादयितुमाह अत्रेति । राजवर्णनं

अत्र वाक्यस्यासंबद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीयः इत्यत्रोपमालङ्कारो-व्यङ्ग्यः ।

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥५५॥

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः ।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।
अहितः सहितः साधुयशोभिरसतामसि ।५६॥

अत्रापि विरोधाभासः ।

---

प्रस्तुतमिति प्रथमोऽर्थः प्राकरणिकः । द्वितीयोऽर्थो[ऽ]न्या(प्रा)करणिकः । अनयोरुपमानोपमेयभावः कल्पनीयः । अन्यथा द्वितीयवाक्यस्यासम्बद्धार्थाभिधायकत्वं नाम दोषः स्यादतोऽत्रोपमालङ्कारो व्यङ्ग्य इत्यर्थः । ननु असम्बद्धार्थादेव द्वितीयोऽर्थः परित्यज्यतामौपम्यं च न कल्पनीयमिति चेन्न । द्वितीयार्थ-प्रत्यायनार्थमेव कविना तादृशपदानां प्रयोगात् । अस्य व्यङ्ग्यस्य शब्दान्वयव्यतिरेकाभ्यां शब्दशक्तिमूलत्वं ज्ञातव्यम् । यदि देवेनेति पदं(द)स्थाने राजपदं दीयते, तदा इन्द्रस्योपस्थितिरेव न स्यादिति । धारापदं यदि त्यज्यते तदाऽपीन्द्रप्रतीतिर्न भवति । यतो धारापदेन शस्त्रधारा मेघधारा चेति शब्द-शक्त्युत्थत्वं स्पष्टम् । अथवा भासा (व्याख्या ?)न्तरं—नन्वेवमर्थयोर { स } सम्बन्धि(न्धे) वाक्यभेदः स्यादित्याह—**वाक्यस्ये**त्यादि । व्यङ्ग्येन सहासम्बद्धो यः प्रकृतो नृपतिः तदभिधायकत्वमभिधाय तद्बोधकत्वम् । **मा प्रसाङ्क्षीत्** । प्रसक्तं मा भवत्विति हेतोरप्राकरणिकप्राकरणिकयोर्महेन्द्रनृपत्योरुपमानोपमेय-भावः, सादृश्यं(श्य)सम्बन्धः कल्पनीयः । इदं [वा]क्च(क्यं) { म } प्रति-पाद्यार्थद्वयसम्बन्धकम् । अर्थद्वयबोधकत्वे सत्येकत्वात्, स च सम्बन्धः उपमा-विवक्षितः सम्बन्धान्तराभावे सति सम्बन्धत्वादिति प्रमाणद्वयगम्यः, इत्यलं

निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥५७॥

अत्र व्यतिरेकः ।

अलंकार्यस्यापि ब्राह्मणश्रमणन्यायेनालंकारता ।

वस्तुमात्रं यथा

पंथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥५८॥
[पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस ॥]

---

विस्तरेण। अत्रैवोदाहरणान्तरमाह-**तिग्मेति**। अत्र विरोधाभासालङ्कारो व्यङ्ग्यः। हे विभो हे स्वामिन्, तिग्मरुचिरप्रतापः तीक्ष्णमनोज(ज्ञ)प्रतापः । विधुराणां निशाकृत् क्षयकारी । मधुरा लीला व(य)स्य। मा(म)तौ, माने तत्त्वे, वृत्तिर्यस्य। प्रतिपदां स्थाने पक्षाणामात्मीयानामग्रणी । एवंविधो भवान् विभाति । **अत्रेति** । अथ विरोधः । तिग्मरुचिः सूर्यः, स कथमप्रतापः । विधुश्चन्द्रः स कथमनिशाकृत् । मधुर्वसन्तः स कथमलीनः(लः) । मतिमान् स कथमतत्त्वप्रवृत्तिः । तथा या प्रतिपत्, सा तु पक्षाग्रणीः, कथं अपक्षाग्रणीः, इत्येकपदस्य पदद्वये कर्तव्ये विरोधाभासः । अत्र विरोधवाचकादीनामभावेऽपि पदच्छेदमात्रेण विरोधाभासः प्रतीयत इति विरोधाभासालङ्कारो व्यङ्ग्य इत्यर्थः । एवमेकस्य पदस्य छेदं विधाय विरोधाभासमुदाहृत्य भिन्नयोवि(र्वि)रोधाभासमुदाहरति । **अमित इति** । समितो युद्धात् प्राप्तैरुत्कर्षैः । अमितोऽपरिच्छिन्नः । अहित इत्यादावपि तैरेव शब्दैरलङ्कारो व्यङ्ग्यः । शब्दपरावृत्तिर्न सहते । मानं मितं तद्रहितस्तत्सहितश्च । हर्षं शत्रुमित्रयोर्यति ददाति च । **प्रभो** इति । सम्बुद्धिः असतामहितः साधुव(य)-शोभिः सहितः । पक्षे हितशून्योऽहितसहितश्चात्राऽपीति । भिन्नपदत्वेनेत्यर्थः । अलङ्कारान्तरमुदाहरति । **निरुपादानेति** । उपादानमुपा(प)करणं तूलिकादिकम् । ततो निर्गतकारणसामग्रीकं, जगच्चित्रमभिन्नौ(त्तौ) कुर्वते । कलया ज्ञानेन

{ चन्द्र } चन्द्रलेखया च, श्लाघ्याय शंभवे नमः । चन्द्रषोडशांश(शः) कला । आलेख्यक्रियाप्राची(वी)ण्यं च । न तु प्रतियोग्यनुयोग्युपादानपदव्यतिरेकः प्रतीयते । तस्य तन्निरु(रू)पणाधीननिरूपणत्वात् । तेन प्रतियोगिज्ञानेन तद्व्यतिरेकस्य वाच्यतैव न व्यङ्ग्यतेत्याह—**अत्रे**ति । चित्रेण्या(णा)लेख्येनाप्रकृततया व्यङ्ग(ङ्ग्ये)नानुभावेन व्यङ्ग्यस्य तत्कर्तुरप्रकृतस्य शूलिनश्च व्यतिरेकः सम्बन्धः प्रतीयते । तत्र न वृत्त्यन्तरमित्याह—व्यङ्ग्य इति । एवं च व्यतिरेकस्य वाच्यतामात्रभ्रमनिरसनमेव शब्दशक्तिमूलालङ्कारध्वनावुदाहरणान्तरोपादाने वीत(निरूपित ?)मिति सूचितम् । अत्रोपमानभूताव(द)न्यस्माच्चित्रकारादुपमेयस्य शम्भोराधिक्यमिति व्यतिरेकालङ्कारो व्यङ्ग्य इत्यर्थः । अलं काव्या(र्या)लङ्कारयोर्भेदादलंकार्यस्योपमादेरलङ्कारो व्यङ्ग्य इत्यत्रालङ्कारशब्दव्यपदेशः कथमत आह—**अलङ्कार्यस्याऽपी**ति । यथा ब्राह्मणः सन् श्रमणो भवति पश्चाद्भूतपूर्वगत्या ब्राह्मणः इत्युच्यते, तथाऽलङ्कारोऽपि अङ्गितया प्रधानव्यङ्ग्यपदवीमप्यधिरोहति । अत्रालङ्कारत्वेन दृष्टत्वात् प्रकृतेऽपि अलङ्कार इत्युच्यत इत्यर्थः । एवमलङ्कारव्यङ्ग्यमुदाहृत्य वस्तुमात्रव्यङ्ग्यमुदाहरति । **वस्तुमात्रव्यङ्ग्यं यथे**ति । इयं दूती स्वार्थ(र्थं)शा(श)ब्देनाच्छाद्य पथिके रहस्यमाह—**पंथिय** इत्यादि । पंथिअ[154] हि एथि, कइ इत्थ । अत्र पत्थरत्थले प्रस्तरस्थले । मूर्खबहुले । गामे ग्रामे । न तु नगरे । सत्थरं संस्तरम् । मृणादितल्पम् । मत्थं मनाक् । णत्थि नास्ति । उण्णयपओहरे पिक्खिऊण उन्नतपयोधरान् मेघान् श(प)स्ये(श्ये)ति । { त्यत्वं } । स्तनपक्षे द्विवचनस्य बहुवचनमिति । पेक्खिऊण प्रेक्ष्य । दृष्ट्वा । जइ वसंसि ता वससु । यदि वससि तदी(दा)वस । अत्रे(त्र) प्रस्तरस्थल इत्यनेन { इत्यतेन } तत्रत्यस्त्रीणां दारुणसम्भोगत्वं प्रतिपद्यते । अत्रालङ्काररहितवस्तुमात्रं व्यङ्ग्यमित्याह—**अत्रे**ति । न चात्र देवादिपदेनेव पयोधरादिपदेनाऽपि उपमानोपमेयभावप्रतीतेरुपमालङ्कारो व्यङ्ग्य इति वाच्यम् । वाच्यप्य(त्वा)धि(धी)नोप { नोप } [155]क्षमत्र(त्व) रूपवस्तुव्यङ्ग्यस्य व्यवस्थितत्वात् । तयोरुप-

अत्र यद्युपभोगक्षमोऽसि तदा आस्स्वेति व्यज्यते ।

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥५९॥

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते ।

(सूत्र ५४) अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥३९॥
प्रौढोक्तिमात्रात्सिद्धो वा कवेः तेनोम्भितस्य वा ।
वस्तु वालंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥४०॥
वस्त्वलंकारमथ वा तेनायं द्वादशात्मकः ।

---

मानोपमेयभावात् । अत्राऽपि पयोधरस्थाने स्तनादिग्रहणे व्यङ्ग्यप्रतीतिर्न भवतीति न । शब्दपरावृत्तिं न सहते शब्दशक्त्युत्थत्वं ध्वनेरिति भावः । सालङ्कारवस्तुमात्रव्यञ्जकत्वमाह—**शनिरिति** । भो नरेन्द्र ! त्वं यस्मै कुप्यसि, तं शनैः शनैश्चरोऽशनिर्वज्रं चोच्चैर्निहन्ति । नञो विरोधित्वमर्थः । यत्र पुनः पुरुषविषये प्रसीदसि स पुरुष उदारोऽनुदारो, उदारश्च महान्, अनुदारस्तदितरः, अनुगता दारा यस्य सोऽनुदारः । नृपप्रसादेन धनवत्तया प्रवासाद्यभावादनुगतदारत्वं, अनुदार इति । अलङ्काररहितवस्तुमात्रव्यङ्ग्यस्यानुदाहरणत्वात् अवबोधितः अत्र द्वितीयार्ध एव विरोधः, विरुद्धधर्मद्वयस्योदारत्वानुदारत्वयोरेकधर्मिणी(णि) प्रतीतेः । न तु पूर्वार्द्धे शन्यशन्योर्हननक्रियायां समुच्चयेनैवान्वयात्, तेन पूर्वार्द्धप्रसङ्गादुक्तं प्रकृतोदाहरणं अपरार्द्धेनेवेत्याहुः । **अत्रेति** । शब्दत्व(त्वे)[न] शनित्वाऽशनित्वरूपेण, विरुद्धौ, हितलक्षणमेकं कार्यं, व्यत्ययेन कदाचिच्छनिः कदाचिदशनिरित्यादि क्रमेण । एवं द्विविधं शब्दशक्तिमूलानुरणनरूपं ध्वनिमुदाहृत्यार्थशक्तिमूलानुरणनध्वनिसंभेदमाह—**अर्थेति** । अर्थशक्त्युद्भवो ध्वनिर्द्वादशविध इत्युपरिष्टात् सम्बन्धः । अर्थशक्त्युत्थध्वनेर्द्वादशविधत्वम् । अर्थो व्यञ्जक इत्यादिना श्लोकद्वयेन व्याकरोति । **अर्थ इति** । यत्र शब्दपरावृत्तिं सहते ध्वनिः सोऽर्थशक्त्युत्थ(त्थः) प्राक्त्रिविधः, एकः स्वतः सिद्धः १ अपर(रः) कविप्रौढोक्तिसिद्धः २, अन्य(न्यः)कविनिबद्ध[वक्तृ]प्रौढोक्तिसिद्धः ३ । एवं मूल-

**स्वतः संभवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन संभाव्यमानः।**

---

भेदास्त्रयः। स्वतः सम्भवः कमले सौरभं यथा। द्वितीयमाह **कविनेति**। तृतीयमाह कविनिबद्धेनेति। यथा कविना निबद्धो दिलीपादिस्तेन किमप्युच्यते। यथा तदुक्तिमात्रनिष्पन्नोऽयम्। पूर्वं त्रयः स्वतः सिद्धादयो भेदाः। तत एकैकस्य चत्वारो भेदाः। यथा **वस्तु वेति**। वस्तुना वस्तु व्यज्यते, १, वस्तुनाऽलङ्कारः २, अलङ्कारेण वस्तु ३, अलङ्कारेणालङ्कारः ४, एवं चत्वारि(रो) भेदाः। पूर्वोक्तादिर्भिर्युक्ता द्वादश भवन्ति १२। **वस्तु** वेति। पूर्वं यः स्वतः सम्भवी अर्थः, स द्विधा वस्तुरूपो व्यञ्जको १ अलङ्काररूपो व्यञ्जकश्च २। वस्तुरूपस्य वस्तु व्यङ्ग्यं, वस्तुनाऽङ्कारो व्यङ्ग्यः। एवं अलङ्कारस्याऽपि वस्तु व्यङ्ग्यं, अलङ्कारोऽपि व्यङ्ग्यः। एवं कविप्रौढोक्तौ पूर्वमर्थो द्विविधः। वस्तुरूपोऽर्थोऽलङ्काररूपश्च। तस्य व्यङ्ग्यं वस्तु १, वस्तुनाऽलङ्कारः २ अलङ्कारेण वस्तु ३ अलङ्कारेणाऽलङ्कारः ४। एवं चत्वारो भेदाः। कविनिबद्धा(द्ध)[वक्तृ]प्रौढोक्तावपि ज्ञेयाः। एवं द्वादशभेदा बालबोधाय पूर्वं विविच्य लिखिताः। अर्थो व्यञ्जकइत्यादिना। श्लोकद्वयं व्याचष्टे। **अर्थ** इत्यादिना स्वतः सम्भविनः प्रतिपक्षभूतं प्रौढोक्त्यादिविशेषद्वयानुगतं कोट्यन्तरमाह—। इदं प्रथमकल्पितं इति। ननु स्वतः सम्भविनोऽपि कविनिबद्धेनाऽनयोः को भेदोऽत आह—**तत्रेति**। यद्यप्युभयत्र कविनिबद्धत्वे तथाऽपि एकत्रौचित्येन बहिःसम्भावितत्वं अन्यत्र तदभाव इति भेद इत्यर्थः। इदं प्रथमकल्पितस्य द्वैविध्यम्। **प्रौढोक्तिमात्रादित्य(ति)**। व्याख्यानेन दर्शयति। **कविनेत्यादि**। अपर इति। इदं प्रथमकल्पितं कवे(वेः)प्रौढोक्तिमात्रसिद्धा(द्ध)ते (त्वे)न, कविना उम्भितो निबद्धः कल्पितो यो वक्ता तस्य प्रौढोक्तिमात्रसिद्धश्चेति द्विविधः। स्वतः सम्भवी चाऽपर इति। त्रिविध इत्यर्थः। सूत्रगतौ वा शब्दौ चकारार्थौ। एवं प्रथमश्लोकं व्याकृत्य द्वितीयं व्याकरोति। **य(व)स्तु** वेति। त्रिविधो व्यञ्जकोऽसौ अर्थः प्रत्येकं वस्त्वलङ्कारभेदेन द्विविध इति षोढा षट्प्रकारो भवति। तस्य द्विविधस्यार्थस्य। वस्तु इत्थं व्यङ्ग्यं(ङ्ग्य)भेदेन। प्रत्येकं द्वैविध्यमिति द्वादश-

कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वक्त्रेति वा द्विविधोऽपर इति त्रिविधः। वस्तु वालंकारो वासाविति षोढा व्यञ्जकः। तस्य वस्तु वालंकारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः। क्रमेणोदाहरणम्।

अलसशिरोमणि धुत्ताणं अग्गिमो पुत्ति धणसमिद्धिमओ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥६०॥
[ अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥ ]

अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते।

---

भेदोऽर्थ इति शेषः। अर्थस्य द्वादशभेदो(दाः)अर्थ इति शेषः। अर्थस्य द्वादशविधत्वेन तदुत्थध्वनेरपि द्वादशविधत्वमाह इति। द्वादशेति। क्रमेणेत्यतः (तिस्वतः ?) सम्भवित्वादीति शेषः। यस्याऽपि व्यङ्ग्यस्य स्वतःसम्भवित्वादिभेदः सम्भवति, तथाऽपि न तदुन्मुखेन भेदगणनम्। व्यङ्ग्याऽर्थस्य लोकोत्तरत्वेनैव चमत्कारित्वात् सम्भविनो वस्तुनो वस्तुव्यञ्जकतामाह—अलसेत्यादि। अलसशिरोमणिर्धूर्त्तानामग्रिमः। पुत्रि। धनसमृद्धिमयः इति भणितेन मना(नता)ङ्गी प्रफुल्लविलोचना जाता। अत्रालसत्वेनाऽप्रवासित्वम्। धूर्त्तत्वेन विदग्धत्वम्। सम्भोगे तृप्तिसम्बाधकत्वम्। { बो } धनस्य मृद्ध्या(ऋध्या)धनदातृत्वम्। नताङ्गीत्वेन नमस्कारः। प्रफुल्लविलोचनेन हर्षः। अथवा अलसाः कौतुकानाविष्टाः। व्यसनान्तरानाहृष्टा इत्यर्थः। इत्यादिवाक्यार्थरूपेण वस्तुना ममैवायमुपभोगयोग्योऽहत्वाऽस्य चातुर्यादुपभोगयोग्या(ग्य) { पम } [त्व]मावर्जयिष्यामीति व्यज्यत इत्यर्थः। अत्रेति। वस्तुना प्रफुल्लविलोचनत्वरूपेण स्वतःसम्भविनाऽलङ्कृतिशून्यत्वेन वस्तुव्यङ्ग्यम्। अथ स्वतःसम्भविनो वस्तुनोऽलङ्कारव्यञ्जकतामाह—धन्याऽसीति। हे सखि! त्वं धन्याऽसि। या त्वं रतान्तरेषु रतविशेषेषु प्रियसङ्गमेऽपि विश्रब्धप्रियवचनशतानि कथयसि। अहं तु प्रियेण करे नीवीं प्रति प्रणिहिते सति, यदि किञ्चिदपि स्मरामि तर्हि सख्यः शपामि। न स्मरामे(म्ये)व।

धन्यासि या कथयसि प्रियसंगमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि ॥६१॥

अत्र त्वमधन्या अहं तु धन्येति व्यतिरेकालङ्कारः ।

**दर्पान्धगन्धगजकुम्भकपाटकूटसंक्रान्तिनिघ्नघनशोणितशोणशोचिः ।**
**वीरैर्व्यलोकि युधि कोपकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः ॥६२॥**

**अत्रोपमालंकारेण सकलरिपुबलक्षयः क्षणात् करिष्यते इति वस्तु ।**

---

सुखपारवश्यादित्यर्थः । अथ वाचा शरीरस्पर्शनस्याविवक्षितत्वाच्छपो(पे)नात्मनेपदं [156]शपामीति । मिथ्यानिरसनमात्रार्थत्वात् शपेनात्मनेपदम् । मिथ्या निरसनहेतु-शरीरस्पर्शस्यैव शपवत्त्वात् । सखीषु मध्ये सौभाग्याभिमानगर्वितायाः एकस्याः [157]सम्बोध्यत्वेन धन्यासीत्येकवचनम् । बह्वनामप्रताार्य्यत्वप्रतिपादनाय सख्य इति बहुवचनम् । तेन नासङ्गतिः । वैदग्ध्यतदभावाभ्यां धन्याधन्यत्वे, इत्याह, अहं धन्या त्वमधन्येति । सखीं प्रति धन्यत्वोक्तिर्विप्रलिप्सया तेन विवक्षितत्वात् । अत्र वस्तुनो वाक्यार्थस्य स्वतःसम्भवत्वं स्फुटमेव । अत्रायमर्थः स्पष्टो यथा-त्वमधन्या सम्भोगवृत्तान्तस्मरणा(ण)भावात् । अहं धन्या सुखातिशयेन तदानींतनवृत्तान्त(न्ता)स्मरणात् । उपमानादुपमेयस्याधिको व्यतिरेक इति व्यति-रेकालङ्कारो व्यङ्ग्य इत्यर्थः । अथ स्वतः सम्भविनोऽलङ्काररूपस्य वस्तुं व्यञ्जकतामाह—**दर्पणेधे(र्पान्धे)**त्यादि । यन्मदमूत्रपुरीषगन्धेनाऽन्ये गजा पलायन्ते स गन्धगज उच्यते । कुम्भयोः विभागः कवाटः । तदाकार-त्वात् । तस्य कूटमग्रम् । तच्च दुर्भेदम् । निघ्नमायतं सम्बद्धम् । घनं निबिडम् । शोणितस्य शोचिर्यत्र । कषायो रक्तः । शोणशोचिकषायकान्त्यो प्रतिबिम्बानु-बिम्ब समानधर्मता । अत्रेत्युपमालङ्कारिणः(रेण) स्वतःसम्भविना सादृश्यस्य

गाढकान्तदशनक्षतव्यथा संकटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥६३॥

अत्र विरोधालंकारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता, मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यते इत्युत्प्रेक्षा च । एषूदाहरणेषु स्वतः संभवी व्यञ्जकः ।

---

बहिरपि सत्त्वात्, सुबोधोऽन्वयो विधीयते । यस्य राज्ञः करे, कृपाणः खड्गो, युद्धि युद्धे, कोपेन कषायकान्तिः, कल्पा(काली)कटाक्ष इव, वीरपुरुषैर्य(र्व्य) लोकि, दृष्टम् । कीदृशो, दर्पेण मदेनो(ना)न्धो यो गन्धगजः, तस्य कुम्भ एव कपाटः, तस्य कूटः शिखरं, तत्र क्रान्तं निघ्नं अधीनं, यच्छोणितं, तेन रक्तकान्तिः । अत्रेति । वाच्येनोपमालङ्कारेण रिपुक्षयकरणलक्षणं वस्तु व्यज्यत इति शेषः । अलङ्काररूपस्वतःसम्भविनो[ऽ]लङ्कारव्यङ्ग्यस्योदाहरणमाह—**गाढकान्तेति** । यो राजा युद्धे कोपेन स्वकीयमधरं निर्दश(दश)न(न्) गाढप्रियं(य)दन्तक्षतदुःखसङ्कटात् शत्रुस्त्रीजनस्य उ(ओ)ष्टविद्रुमदलान्यमोचयन्(त्) । विद्रुमो नवपल्लवस्तस्य दलानि । अत्रो(त्रौ)ष्टविषयकदशनमोचनक्रिययोर्विरोधः । प्रतियोगिभेदेनाऽऽभासः[158] । एष च स्वतः सम्भव्येव । अत्र विरोधसूचककाव्यादिपदाभावेन वाच्यविरोधालङ्काराभावात् विरोधालङ्कारशब्देनोपचारादतिशयोऽलङ्कारो विवक्षितः । उपचारे च निमित्तं अत्रो(त्रौ)ष्टविषयकदशनमोचनक्रिययोर्विरोधः । प्रतियोगिभेदेनाभासः । एषां च स्वतःसम्भव्ये तुल्ययोगितेति । तुल्ययोगितापदेनाधरो निर्द(र्द)ष्टः शत्रवश्च व्यापादिता इति समुच्चयाभिधाना [त्] अप्रकृतानां प्रकृतानां चैकधर्मसम्बन्धस्य तुल्ययोगिताया, अत्र गन्धस्याप्यभावात् अधरनिर्दशनशत्रुव्यापादनयोरपि ची(वी)रानुभावत्वेन प्रकृतयोरेकक्कालरूपैकधर्मसम्बन्धेन तदनपायात् । अत्रैव श्लोके व्यङ्ग्यमलङ्कारान्तरमाह-**ममेति** । मम नाशेऽपि शत्रुनाशः[न]स्यादिति { न } बुद्धिः, नृपबुद्धि,रुत्प्रेक्षालङ्कारो व्यङ्ग्य इत्यर्थ(र्थः) स्वतः सम्भविनं व्यञ्जकमुपसंहरति **एष्विति** । गाढेत्यत्र स्वतः सम्भविनोऽलङ्कारेणालङ्कारो व्यज्यते इति चतुर्थो भेदो द्वादशानां

कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां मदीयाम् ।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्जयन्ति ॥६४॥

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्यर्थाधिगमो तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते ।

केसेसु बलामोडिअ तेण अ समरम्मि जअसिरी गहिआ ।
जह कन्दराहिं विहुरा तस्स दढं कंठअम्मि संठविआ ॥६५॥
[केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता ।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥]

---

मध्ये । इदानीं वस्तुरूपकविप्रौढोक्तिनिर्मितस्य वस्तुव्यङ्ग्यस्योदाहरणमाह-**कैलासस्येति**। कैलासस्य प्रथमशिखरे मूलशिखरे वेणुसम्मूर्छनाभिवे(र्वे)णूत्थापितरागैः । तदुक्तम्—

स्वरः सम्मूर्छितो यत्र रागतां प्रतिपद्यते ।
मूर्छनामिति तां प्राहुः गीततत्त्वविदो जनाः ॥ इति ।

देवस्त्रीभिर्गीयमानां यस्य कीर्तिं श्रुत्वा दिग्गजाः सरसविशिनीकाण्डमिति सञ्जातभ्रमाः सन्तः, श्रवणमेव पुलिनं, पुलिने समीपे, पुलिनत्वेन श्रवणस्य सरसीत्वमत एव मृणालत्वभ्रमः। अत एव श्रवणपुलिने हस्तमावर्तयन्ति । **अत्रेति**। वस्तुना कविप्रौढोक्तिनिष्पन्नेन मृणालवद्यशः कर्णप्रवेशरूपेण, एवमादि मृणालादि । अय { मय } मर्थः स्पष्टो, यथा—कैलासस्येत्यत्र कीर्तिरमूर्ताः कर्णयोर्न लगतीति हेतोः कविप्रौढोक्त्या श्रवणपुलिने कीर्तिर्लग्नेति । बहिरसन्नपि तेन वस्तुना येषां पशुरूपाणामर्थाधिगमो नास्ति तेषामपि चमत्कारकरीति कविप्रौढोक्त्या वस्तु व्यज्यते इति । अर्थशक्त्युद्भवस्य ध्वने(नेः) पञ्चमो भेदः । अथ वस्तुरूपकविप्रौढोक्तिसिद्धस्यालङ्कारव्यङ्ग्यस्योदाहरणमाह — **केशेष्विति** । तेण तेन[159] राज्ञा । समरम्मि समरे । जयसिरि(री) जयश्रीः । केसेसु केशेषु । बलामोडिय

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्ति इत्युत्प्रेक्षा। एकत्र संग्रामे विजयदर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलंकारः। न पलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च।

गाढालिंगणरहसुज्जुअम्मि दइए लहुं समोसरइ।
माणंसिणीण माणो पीलणभीअ व्व हिअआहिं ॥६६॥
[गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।
मनस्विन्या मानः पीडनभीत इव हृदयात् ॥]

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भते इति वस्तु।

---

बलात्कारेण। प्रमोढ्य गहिया गृहीताः। जहा यथा। कंदराहि कन्दराभिः। तस्स तस्य। विहुरा विधुराः। शत्रवः दढं दृढं जहा यथा तथा। कंठयम्मि कण्ठे। संठविया संस्थापिता। अत्र व्यङ्ग्यमाह—अत्रेति। वाक्यार्थेन वस्तुरूपेण एकस्याः केशग्रहावलोकनेनाऽन्यस्याऽपि कामोद्बोधा(धः) इत्यादि(द्या)लिङ्गनस्योत्प्रेक्षा व्यज्यत इत्यर्थः। अत्रैवालङ्कारान्तरमाह—एकत्रेति। जयश्रीग्रहणेन वाक्यार्थीभूतेन हेतुना जातभयाः शत्रवः पलाय्य गुहासु गता इति काव्यहेतुः काव्यलिङ्गाख्योऽलङ्कारो व्यज्यत इत्यर्थः। पुनरप्यत्रैवाऽलङ्कारान्तरमाह—न पलाय्येति। तद्वैरिणः पलाय्य न गताः, अपि तु तस्माद्राज्ञः सकाशात्, कन्दरा तेषां पराभवं सम्भाव्य, तान् न त्यजति। कन्दराभिः शरणं दत(दत्त ?)-मित्यर्थः। प्रस्तुतस्य पलायनस्यापह्नवादपह्नुताख्योऽलङ्कारश्च त्य(व्य)ज्यत इत्यर्थः, इति अर्थशक्त्युत्थस्य षष्ठो भेदः १ उक्तः। अलङ्काररूपकविप्रौढोक्तिनिर्मितवस्तुव्यङ्ग्यस्योदाहरणमाह—गाढालिङ्गनेति। माणंसिणोणं(ण) मनस्विनोनाम्[100]। माणो मानः। दइए दयिते। गाढालिङ्गणरहमुज्जयम्मि गाढालिङ्गनरभसो{द्य}द्यते सति। पीलभीरुव्व पीडनभीत्येव। हिययाहिं हृदयेभ्यः। बहु लघु यथा तथा। समासरइ अपसरति। अत्रान्वयो योज्यते—गाढालिङ्गनरभसोद्यते दयिते लघुसम{म}पसरति न(म)नस्विन्या मानः पीडनभीत इव हृदयात्। अत्रेत्यादि। आदिपदेन प्रसाद(हास)हसितावि(दि)ग्रहण-

जा ठेरं हसन्ती कइवअणंबुरुहबद्धविणिवेसा ।
दावेइ भुअणमंडलमण्णं विअ जअइ सा वाणी ॥६७॥
[या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदिव जयती सा वाणी ॥]

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगत् अजडासनस्था निर्मिमीते इति व्यतिरेकः। एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः ।

जे लंकागिरिमेहलासु खलिआ संभोगखिण्णो रई-
फारुफ्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम् ।
ते एह्णि मलआनिला विरहिणीणीसाससंपक्किणो
जाता झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥६८॥

[म् ]। गाढालिङ्गनमात्रेणैव पीडनमिति प्रत्यालिङ्गनस्य वाच्यसिद्ध्यङ्गता मानस्य पीडनभयं न स्वतःसम्भवि, इति सप्तमो भेदः। अलङ्काररूपकविप्रौढोक्तिगतस्यालङ्कारव्यङ्ग्यस्योदाहरणमाह—[161]जा घेर(ठेर)मिति। या वृद्धमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशी(शा) । दर्शयति भुवनमण्डलमन्यदेव सा जयति वाणी। कविवदनाम्बुजनिवासश्च जगदन्यद(द्द)र्शनं च न स्वत(तः)सम्भविनौ। अत्र चि(वि)य इत्यादि गम्यो व्यतिरेक(कः)। दावेइ दर्शयतीत्यर्थः। जा थे(ठे)रं इत्यत्र हसन्तीव इत्युत्प्रेक्षया व्यतिरेकः। ब्रह्मनिर्मितभुवन(ना)पेक्षया वाङ्निर्मितभ्रु(भु)व[न]-मण्डलमन्यदेव दृशो व्यज्यते इत्यष्टम(मः), कविप्रौढोक्तिसिद्धच(द्ध)[म]र्थमुपसंहरति, एष्विति। निष्पन्नोऽर्थ इति शेषः। कविनिबद्धवक्तृप्रौढोक्तिनिर्मितस्य वस्तुरूपस्य(पेण) वस्तुव्यङ्ग्यस्योदाहरणमाह—जं लंकेत्यादि ।[162]

ये लङ्कागिरिमेखलाः(ला)[सु] स्खलिताः सम्भोगखिन्नोरगी
स्फारोत्फुल्लफणावलीकवलनात् प्राप्ता दरिद्रत्वम् ।
ते(त) इदानीं मलयानिलाविरहिणो निःश्वाससंपर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥

लङ्कासन्निकृष्टो गिरिर्लङ्कागिरिर्मलयः[163]। स(स्व)भोक्तृसर्पेभ्यस्त्रासेन स्खलनम्। स्फारा वितता उत्फुल्ला, ऊर्द्ध्वं प्रसृतास्तेन ग्रासस्य स्थूलता। क्षीणा-

[ये लंकागिरिमेखलासु स्खलिताः संभोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससंपर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥]

अत्र निःश्वासैः प्राप्तैश्वर्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते ।

सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासम् ।
पिअदंसणविहलंखलखणम्मि सहसत्ति तेण ओसरिअम् ॥६९॥
[सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम् ।
प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम् ॥]

अत्र वस्तुनाकृतेऽपि प्रार्थने प्रसन्नेति विभावना प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यते इत्युत्प्रेक्षा वा ।

---

माहारद्वैगुण्येन उरगीति विशेषाभिधानम् । बहलाः प्रचिताः । कर्पूरमञ्जर्या(री)-साट(सट्ट)के कर्पूरमञ्जर्या इयमुक्तिः । वस्तुना मलयानिलस्खलनयौवनरूपेण बहिरसम्भाव्येन वस्तुनो { वस्तु } व्यञ्जकतोक्ता । यद्यपि तारुण्यपूर्णा इवेत्यत्रोत्प्रेक्षालङ्कारोऽस्ति, तथाऽपि तस्य व्यञ्जकत्वं नास्ति । अत एव विरहिणां निःश्वाससम्पर्किण इत्यनेन वस्तुना निःश्वासैः प्राप्तैश्वर्य्याः किं किं न कुर्वत इत्येतद् वस्तुना वस्तु व्यज्यत इत्यर्थः इति नवमो भेदः ९ । वस्तुरूपकविनिबद्धवक्तृप्रौढोक्तिनिर्मितस्यालङ्कारव्यङ्ग(ङ्ग्य)स्योदाहरणमाह—सहीति[164] । सखि विरचय्य मानस्य म[म] धीरत्वेनाश्वासं प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम् । विशृङ्खले कौतुकोत्तरलिभे(ते) । वस्तुना सहसा प्रियदर्शनशब्दबोध्येना(न) स्वतःसम्भविना । चकारेण सङ्करसूचनम् । अत्र व्यङ्ग्यमाह—अत्रेति । वाक्यार्थरूपेण वस्तुना प्रार्थनालक्षणकारणाभावेऽपि एतत्कार्यप्रसन्नतोत्पत्तिरिति विभावनालङ्कारो व्यज्यत इत्यर्थः । अत्रैव व्यङ्ग्यान्तरमाह—प्रियदर्शनस्येति । धैर्येण वस्तुना उत्प्रेक्षालङ्कारोऽपि व्यज्यते इति दशमो भेदः १० । कविनिबद्धवक्तृप्रौढोक्तिनिर्मितस्यालङ्काररूपस्य(पेण) वस्तुव्यङ्ग्यस्योदाहरणमाह—आर्द्राद्रिकरजव(र)-

ओल्लोल्लकरअरअणरुखएहिं तुह लोअणेसु मह दिण्णम् ।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ ॥७०॥
[ आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम् ।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते ॥ ]

अत्र किमिति लोचने कुपिते वहसि इति उत्तरालंकारेण न केवलमार्द्रनखक्षतानि गोपायसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु ।

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अणुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ ॥७१॥
[ महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती ।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि (or, तनुकमपि) तनयति ॥ ]

---

दनक्षतैस्तव लोचनयोर्मम दत्तम् । रक्तांशुकं प्रसादाः(दः) कोपेन पुनरिमे नाक्रान्ते । नायकं प्रति नायिकावचनम् । हे प्रिय ! तुह[165] तव । उल्लोलकरयरयणरवएहिं आर्द्रार्द्रकरजरदनक्षतैः सह । मम लोयणे सुलोचनयोः । रत्तंसुयं रक्तांशुकम् । पसायं प्रसादम् । दिण्णं दत्तम् । कोपेण कोपेन । इमे लोचने । णान अक्कमिया आक्रान्ते । अत्र व्यङ्ग्यमाह—अत्रेति । प्रतिवचनलिङ्गात् प्रश्नमध्याहरति—किमितीति । इति प्रश्ने कृते सति उत्तररूपालङ्करणवाच्येन केवलं कृत्स्नं यथा स्यात्, आर्द्राणि यानि, नखदन्तक्षतानि तावन्न गोपयसि नाऽऽच्छादयसि यावत् तेषां तत्क्षतानां, अहं प्रसादपात्रं जाता । { तद्दर्शनं मांत्यत्र कोपाऽस्मि } । अतस्त्वमतिदुष्ट इति वस्तु व्यज्यत इत्यर्थः । अत्रोत्तरालङ्कारेणाऽहं प्रसादपात्रं न भवत इति बहिरसन्नपि वस्तु व्यज्यते इत्येकादशः ११ । अलङ्कारमूलमलङ्कारमाह—महिलेति । महिलासहस्रस(भ)रिते तव हृदये सुभग सा अमान्ती। दिवसमनन्यकर्मा [अङ्]गं तनुमपि तनयति । अत्र व्यङ्ग्यमाह—अत्रेति । अत्र कविना हि निबद्धा या वक्त्री तत्प्रौढोक्त्या निष्पन्नेन । 10महिलासहस्रभरित इत्येतत्पदं हृदयेऽवर्तमानत्वे हेतुत्वेनोक्तमिति हेत्वलङ्कारेण सत्यपि हृदयवर्तमानकार्यं नोक्तमिति विशेषोक्त्यलङ्कारो व्यज्यत इत्यर्थः । एवमिति । कविवक्तृकत्वतन्निबद्धवक्तृकत्वयोर्भेदादित्यर्थः । एतावता कविनिब-

अत्र हेत्वलंकारेण 'तनोस्तनूकरणेऽपि तव हृदये न वर्तते' इति विशेषोक्तिः। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः। एवं द्वादश भेदाः ॥

(सू० ५५) शब्दार्थोभयभूरेकः

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥७२॥

अत्रोपमा व्यङ्ग्या ।

---

द्धवक्तृप्रोक्तमुपसंहरति, एष्विति। एवं शब्दशक्त्युद्भवो द्वेधा द्विप्रकार उक्त, अर्थशक्त्युद्भवा द्वादश एवं चतुर्दशभेदा ध्वनेर्जाता १४।

अथ पञ्चदशभेदमाह—शब्दार्थोभयभूरेक इति। संलक्ष्यक्रमव्यङ्ग्यस्य शब्दशक्तिमूलत्वार्थशक्तिमूलत्वाभ्यां भेदद्वयं निरूप्यार्थो(थो)भयशक्तिमूलत्वेन तृतीयभेदमाह—शब्दार्थोभयेति । एवं [शब्द]शक्तिभूः एव(का?)दशो भेद उक्त, एवं जाता पञ्चदश १५ भेदा ध्वने(नेः)। पञ्चदशभेदमुदाहरति यथाऽतन्द्रेति। श्यामा रात्रिः। कं सा नन्द(न्दं) न करोतीत्यन्वयः। कथम्भूताः श्यामाः। अतन्द्रोऽनाच्छन्नश्चन्द्र आभरणं यस्याः सा। पुनः किंविशिष्टाः। समुद्दीपितकामाः। नक्षत्रैस्तरला। पक्षे श्यामा योषित्। अतन्द्रो निर्मलश्चन्द्रः शिरोभूषणविशेषः कर्पूरो वा सुवर्णो वा यस्याः आभरणम्। पुनः किं विशिष्टा। समुद्दीपितहर्षा। कनीनिकाऽतरला यस्याः सा। इह चन्द्रेति तारेति च शब्दो व्यञ्जकः। यतश्चन्द्रादिशब्दैः परित्यज्य इन्द्रादिशब्दप्रयोगेऽर्थान्तराप्रतीतेः। समुद्दीपितेति, सानन्दमिति चार्थोऽपि व्यञ्जकशब्दान्तरप्रयोगेऽपि, अस्याऽर्थस्य प्रतीतेः परिवृत्तिसहत्वात् इति शब्दार्थयोः शक्त्या, प्रकृताप्रकृतयो[र]पि उपमा वाक्यं व्यङ्ग्यम्। यतोऽतन्द्रेत्यर्थशब्दोभयशक्त्युत्थः(त्थः)। अत्र चन्द्रसमुद्दीपिततारका(क)शब्दाः परा(रि)वृत्त्यसहिष्णवोऽतन्द्रमन्मथादयः परा(रि)वृत्तिसहाः। एवं चाऽर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यालक्ष्यक्रमव्यङ्ग्य इति पूर्वोक्तत्रयमीलनेन जाता अष्टादशभेदा(दाः)। { नुक्तात् } संख्याविशिष्टत्वेन निगमयति—भेदा इति । तत्तस्मात् कारणादित्यर्थः। सूत्रगतेदं शब्दार्थमाह—

(सू० ५६) भेदा अष्टादशास्य तत् ॥४१॥

अस्येति ध्वनेः ॥

ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह ।

(सू० ५७) रसादीनामनन्तत्वाद्भेद एको हि गण्यते ।

अनन्तत्वादिति । तथाहि । नव रसाः । तत्र शृङ्गारस्य द्वौ भेदौ । संभोगो विप्रलंभश्च । संभोगस्यापि परस्परावलोकनालिङ्गनपरिचुम्बनादिकुसुमोच्चयजलकेलिसूर्यास्तमयचन्द्रोदयषड्ऋतुवर्णनादयो बहवो भेदाः । विप्रलम्भस्याभिलाषादय उक्ताः । तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम् । तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वम् । तत्रापि देशकालावस्थादिभेदा इत्येकस्यैव रसस्यानन्त्यम् । का गणना त्वन्येषाम् । असंलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते ।

(सू० ५८) वाक्ये द्व्युत्थः

द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः ।

---

**अस्येति** । लक्षण(णा)मूलाविवक्षिततया वाच्यस्यार्थान्तरसङ्क्रमितवाच्यतिरस्कृतवाच्यलक्षणौ द्वौ भेदौ । { अविवक्षितमूल } विवक्षितान्यपरवाच्यस्यासंलक्ष्यक्रमो रसादिरेको भेदः । शब्दशक्तिमूलौ वस्त्वलङ्कारलक्षणौ द्वौ भेदौ । अर्थशक्तिमूलवस्त्वादयो द्वादश भेदा(दाः) । उभयशक्तिमूल एको भेदोऽस्ति इत्यष्टादशभेदा इत्यर्थः । उक्ताऽष्टादशसंख्या । [आ]क्षेपोत्तरत्वेनोत्तरसूत्रमवतारयति—**नन्विति** । रसादीत्यादिशब्देन भावादिहेत्वसिद्धि { द्धि } माशङ्क्यासिद्ध इत्याह, **अनन्तत्वादिति** । सिद्धमिति शेषः । तदेव प्रतिमा(पा)दयति । **तथा हीति** । तयोः सम्भोगविप्रलम्भयोः, नायकश्च नायिका च तयोर्नायकयोः । एकस्यैव एकशृङ्गारस्य । अन्येषां हास्यादीनां भावादीनां वा । ततस्तेषां कथमेको भेद इत्यत आह—**असंलक्ष्येति** । उक्तानां भेदानां मध्ये कस्य वाक्ये व्यञ्जके पदे वा व्यञ्जके सति वृत्तिर्भवतीत्याकाङ्क्षायां विभागमाह—**वाक्य इति** । वाक्यरूपसमुदायापेक्षया द्वाभ्यां शब्दार्थाभ्यामुत्था उत्थानं यस्य स द्व्युत्थः । द्व्युत्थ-

(सू० ५९) पदेऽप्यन्ये

अपिशब्दाद्वाक्येऽपि एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्यापि भारती भासते । तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि ।

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥७३॥ [१]

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वादिसंक्रमितवाच्याः ।

---

शब्दार्थमाह—द्व्युत्थ इति । उभयशक्तिमूल एको भेदो वाक्य एव व्यञ्जकेऽपि शब्दाद्वाक्येऽपि भवतीत्यर्थः । ननु इदमुक्तममतिशयिनीत्यादौ समुदायरूपकाव्यविशेषप्रदर्शितस्य ध्वनेर्वाक्यं(क्य)व्यङ्ग्यत्वेन कथं पदस्य व्यङ्ग्यत्वमत आह—एकेति । वाक्याद् व्यङ्ग्यं यस्ये { ष्वि } ति विग्रहः । यथा सर्वावयवस्थितेनाभरणजातेन भासमाना या युवतेरेकावयवस्थितेनाभरणेन भासमानत्वं तथा वाक्यव्यङ्ग्यस्याऽपि पदव्यङ्ग्यत्वमविरुद्धमित्यर्थः । तथा चोक्तं ध्वनिकारेण—

विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥ इति ।

यद्वा भारतीचमत्कारः स च यत् किञ्चित् पदसाध्यत्वाद् वाक्यस्यैव व्यङ्ग्यस्तथाऽपि पदस्य शक्तेरुद्भटत्वोत्वे(त्थे)न व्यङ्ग्येन भासप्रतीतिपथमवतरति । { पदथ० } पदात् प्रकाश्यते इत्यर्थः । वाक्यप्रकाश(श्य)त्वे उदाहरणान्युक्तानीति । पदप्रकाश्यत्वेनोदाहरणानि प्रतिजानीते । तत्रेति । तत्रामु(नु)पयुज्यमानार्थान्तः(त)[र]सङ्क्रमितवाच्यं पदद्योत्योदाहरणमाह—यस्येति । यस्य नायकस्य मित्राणि सर्वदा मित्राण्येव नाऽन्यथा इत्यादिस्वभावः, स नायको जातः सफलजन्मत्वात् सफलजीवितश्च भवति । द्वितीयमित्रादिशब्दानामनुपयुज्यमानत्वेनास्व(श्व)स्ताद्यर्थान्तरेषु सङ्क्रमितवाच्यत्वमाह-अत्रेति । अत्र द्वितीयमित्रादिशब्दानामनुपयोगात्मको मुख्यार्थबाधः, सामान्यविशेष भावः सम्बन्धः, अतो मित्रादिशब्द आस्व(श्व)स्तत्वनियन्त्रणत्वस्नेहपात्रत्वादि यथासङ्ख्यं लक्षयति । एतस्य प्रकाशे(श)[ने]न निरुच्छाससम्प

खलववहारा दीसन्ति दारुणा जइवि तहवि धीराणम् ।
हिअववअस्सवहुमआ ण हु ववसाआ विमुज्झन्ति ॥७४॥ [२]
[खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥]

अत्र विमुह्यन्तीति ।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥७५॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते ।

---

सम्पादनानि व्यञ्जयन्ति । अत एव शुद्धस्यार्थस्याविवक्षितवाच्यत्वम् । अनुपपद्यमानार्थान्तर(रे)[णात्यन्त]तिरस्कृतवाच्य { द } द्योत्योदाहरणमाह—**खलेति** । खलव्यवहारा दृश्यन्ते दारूणा यद्यपि तथापि धीराणाम् । हृदयवयस्यबहुमता न खलु व्यवसाया [वि] मुह्यन्ति । दारुणाः प्राणीनामपि द्वेषका(काः)। हृदयमेव [व]-यस्यः, सदर्थे ग्राहकत्वात् । अत्रेत्यादि मोहस्य चेतनधर्मस्य व्यवसायेषु बाधान्न त्यागाभावे लक्षणा मोहस्यात्यन्ततिरस्कारः । तत्र व्यवसायाप्रच्यवनेन प्रकाशितस्य भावप्रकर्षकत्वं सर्वत्रैवमवधेयम् । तथा च मुह्यन्तीत्येतत् पदं व्यवसायानामचेतनत्वा(त्व ?)सम्भवात् स्वार्थबाधितमोहात्मकं मुख्यार्थमु(मनु?)पपद्यमानत्वादेवात्यन्ततिरस्कृतवाच्यम् । कार्यकारणभावसम्बन्धाढप्रवृत्ति(त्तिं) र्ले(ल)क्षयन् अभिमतकार्यकारित्वादिप्रारब्धनिर्वाहणादिधर्मान्तरं व्यनक्तीति भावः ।

अथ विवक्षितान्यपरवाच्यस्यासंलक्ष्यक्रमव्यङ्ग्यस्य पदद्योत्यरसस्योदाहरणमाह—**लावण्यमिति** । अवयवानां प्रत्येकमकृत्रिममनोहारित्वं लावण्यम् । रूपनिष्ठो मनोहारकत्वातिशयः । दृक्पातमात्रेण सकलशरीराऽ[ऽ]प्यायिका कान्तिः शरीरशोभा । तद्वचसोऽप्यगोचरो { रूपं साधर्म्यवच } वचःक्रमो, वचनपरिपाटी । तथा सम्भोगसमयेश्च(चा)मृतोपमं, अधुना विरहावस्थायां ज्वरोपमम् । अत्रापि पदप्रकाश्यमाह—**अत्रेति** । तत् असौ इत्यादिपदानि आह्लादकारित्वदृक्पातमात्रशरीरापातकत्वादीनर्थान् व्यञ्जय(यं)तीत्यर्थः । अथवा तदिति स इति प-

यथा वा

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥७६॥[३]

अत्र भीताननेति । एतेन हि नीचैः शंसनविधानस्य युक्तता गम्यते ।

भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाहियते ।

---

दानां परिग्रहः अनुभवैकगोचरा न तु निर्वक्तुं शक्या । यद्यपि वाक्येन विप्रलम्भरसस्य प्रतीतिः तथापि तदादिपदयोःत्याहा(ह्ला)[द]कारित्वादिविशिष्टस्यैव लावण्यादेरनुभवस्मृतित्वमिति, रसस्याऽपि पदप्रकाश्यत्वमविरुद्धम् । अत एव विशिष्टलावण्याद्यनुभवप्रतीतिरसंलक्ष्यक्रमत्वमविरुद्धम् । अस्य व्यङ्ग्यस्य विप्रलम्भप्रकर्षत्वेनालक्ष्यक्रमत्वं, तन्मुखेनैव विप्रलम्भस्य सहृदयहृदयंगमत्वात् । तदानीं बुद्धिविषयत्वावच्छेदकप्रकारेण शक्तौ लावण्यातिशयो व्यङ्ग्यस्तत्र तदादिपदानामन्वयव्यतिरेकाभ्यां तन्मूलता । ननु तदा सुधास्पदमभूदित्यादिवाक्यसहकारेणैव तदादिपदानां विसृ(श्रु)तार्थव्यञ्जकत्वं, अन्यथा प्रसिद्धिपरामर्षकत्वमपि स्यात् । ततश्च वाक्यस्यैव व्यञ्जकत्वं न तु पदानामित्याह—**यथा वेति** । वस्तुतस्तु विप्रलम्भसम्भोगभेदेन पूर्वापरलक्ष्ययोर्भेदाद् यथा वेत्युक्तम् । पद्यार्थो यथा—हे **मुग्धे** ! त्वया मुग्धतया बाल्यदुर्ललितेनैव सकलः कालो वाहितुं किमारभ्यते । धाष्टयं(ष्ट्र्य)करणं विनाऽपि मानं धारय । धैर्यं स्थापय । प्रेयसि ऋजुतां दूरे कुरु । एवं स(ख)स्था प्रतिबोधिता । नायिका भीतानना सती तां सखीं प्रतिवचनमाह—किमिति हे सखि ! नीचैः कथय । तर्हि यस्मात्, हृदि स्थितः प्राणेश्वरः श्रोष्यति । अत्र पदप्रकाश्यमाह—**अत्रेति** । भयकार्यस्य नेत्रभ्रमसंक्ये(शंकये?)व { शोषाधो } नयनसम्भ्रमवैवर्ण्यादेर्मुखेर्दर्शनान् मुखमेव भीतमिव भीतमित्युक्तम् । अत एवैतव(त्)पदत्रयस्य कृत्रिमत्वप्रकाशनात् नीचैः

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप भीम ॥७७॥ [४]

अत्र भीषणीयस्य भीमसेन उपमानम् ।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥७८॥ [५]

काचित् संकेतदायिनमेवं मुख्यया वृत्त्या शंसति ।

---

शंसनविधानस्य युक्तं व्यञ्जकं(क)[त्वम्] । तच्चासंलक्ष्यक्रमपदप्रकाश्यभावादीनामुदाहरणानि वाच्यानीत्यत आह—भावादीनामिति । वाक्यप्रकाश्यानामपि भावानां रसापेक्षया निकृष्टं चमत्कारित्वं, पदप्रकाश्यानां तु ततोऽपि निकृष्टचमत्कारित्वमिति भावः । पदप्रकाशत्व इति । पदात् प्रकाशो यस्येति विग्रहः । विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमव्यङ्ग्यभेदे, शब्दशक्तिमूलौ द्वौ भेदौ, अलङ्कारध्वनिः १ वस्तुध्वनिश्चेति । तत्रालङ्कारध्वनिः । शब्दशक्तिमूलस्यपदद्योत्यस्योदाहरणमाह—रुधिरेति । हे नृप त्वं भीमो विभासीत्यन्वयः । किं विशिष्टः रक्तसमूहप्रलिप्तखड्गभयङ्कररुचिरभुजपरिग्रहः । झगिति भ्रु(भ्रू)-भङ्गं(ङ्ग)बद्धललाटपट्टो नृप भीमो विभाति । विसरो, धारा । उत्कर्षकत्वेन प्रसाधनं, मित्रशत्रुविषयभेदेन करालरुचिरता, परिघोऽर्गला, जयलक्ष्मीनिरोधकत्वात्, विटङ्कितस्तदाकारवेषान्वितो, विस्तीर्णत्वात् पटता । अत्रेति । भीषयतीति भीषणः । कर्तर्य्यनीयः । कृत्यल्युटोऽन्यत्राऽपीति, वदनात् हेतुकर्तृभये भियः सान्तता । भीमसेनः पाण्डवभेदः । विभासीति मा(म)ध्यमपुरुषानन्वयात् । अत एव मुखचन्द्रो हसतीत्यत्र हसनस्य रूपके बाधकमुपमायां साधकमिति वक्ष्यति । प्रकृताप्रकृतयोः सामर्थ्यात् सादृश्यमापादयतीत्युपमालङ्कारो व्यङ्ग्यः । अथ भीमशब्देन भीषणौ(णो) भीमसेनश्चोच्य(च्ये)ते । परं भीमो विभासीति पदस्य भीषणीयो विभासीत्यर्थः । तथा च भीषणीयत्वेन वस्तुना भीमसेनेनोपमानं व्यज्यते । यथा मानसं { स } हंस इत्यत्र मानसे मनसि आत्माराम इत्यर्थः(र्थे)सती-(ति), अनेनार्थेन राजहंसेन सह यथोपमानोपमेयभावो व्यज्यते, तथा प्रकृते भीषणीयत्वेन वस्तु भीमसेनोपमानं व्यज्यते । एवं च शब्दशक्त्या वस्तुना भीष-

**सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं**
**यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।**
**आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना**
**नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥७९॥ [६]**

णीयत्वेनाऽलङ्कारो व्यञ्जित इत्यर्थः। शब्दशक्तिमूलानुरणनरूपस्य पदप्रकाशस्य वस्तुध्वनेरुदाहरणमाह—**भुक्तीत्यादि** । भुक्तिः शब्दोपभोगः सम्भोगश्च । मुक्तिश्च रम(मर)णदुःखध्वंसः गृहकर्मत्यागश्च । एकान्तो निश्चयो विभजनं च । समादि(दे)शो विधिः कथनं च । आनन्दो नित्यसुखं रतिसुखं च । सदागमः सच्छास्त्रं, सतः सुन्दरस्यागमनं च। अयमर्थः । भुक्ति(क्तिं) मुक्तिं च करोतीति भुक्तिमुक्तिकृत् । अथ व्यङ्ग्यमाह—**काचिदिति** । सङ्केतदायिनं प्रकटत्वेन समागमव्याजेन स्तौतीत्यर्थः । तथाहि सतः कान्तस्याऽऽगमनं भुक्तेर्हेतो-(तु) मुक्ति(क्तिं)कृन्तति नाशयति ! भुक्तिं विरहमुक्तिं च करोति वा । एकान्ते सङ्केतस्थाने म(स)मादेशनमाह्वानं, तत्परः । स्तुतिरूपं समागमपदद्योत्यवस्तु-व्यङ्ग्यं, न चात्रोपमालङ्कारो व्यङ्ग्य इति वाच्यं, द्वयोरर्थयोः विसदृशत्वात् । अत्र सदागमरूपेण वस्तुना समीतिव्यासार्थः ।

अर्थशक्तिमूलस्य ध्वनेर्द्वादशप्रकाराणां मध्ये स्वतःसम्भविना वस्तुना वस्तुव्यङ्ग्यं पदप्रकाश्यमुदाहरति—**सायमिति** । काचित् सखीं प्रति कस्याश्चि-दुक्तिः । सन्ध्यायां स्नानमाचरितं, चन्दनेनाङ्गं समालिप्तं, सूर्योऽस्तपर्वतं यातः, अत एव विश्रब्धं यथातथा अत्रागमनं (न्तव्यम् ?) । हे सखि ! तव सौकु-मार्यमाश्चर्यं येन कारणेनाऽभितः क्लान्ताऽसि । अधुना ते नेत्रद्वन्द्वं निमीलन-व्यतिकररहितं सत् स्थातुं न शक्नोति । अत्र व्यङ्ग्यमाह—सायं स्नानं श्रमनाशनं उपासितं, यत् ततः कृतम् । अम्बरमाकाशम् । वासश्च वासः । सुर-मणिरिवाम्बरमणिः सूर्यः । तेन प्रकाशाभावः । मणेर्मौलिगामित्वं युक्तमेव । विश्रब्धां [अ]भीताम् । अभितो बाह्याभ्यन्तरतो, मीलनं मुद्रणम् । व्यतिकरः सम्बन्ध इति विशेषार्थः । व्यङ्ग्यं यथा अधुना **क्लान्तासीति** कृत्वाऽधुना पथ(द)शक्त्या वस्तुना इदानींतनस्वरूपेण वस्तुना, कृतपरपुरुषसम्भोगात्

अत्र वस्तुना कृतपरपुरुषपरिचया क्लान्तासीति वस्तु अधुना-पदद्योत्यं व्यज्यते ।

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥८०॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥८१॥ [७]

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्तनाह्लादाभ्यामनुभूतानीत्युक्तम् । एवं चाशेषचयपदद्योत्ये अतिशयोक्ती ।

क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम् ।

---

क्लान्तासि, इति कृत्वा स्नानं कृतमिति वस्तु व्यज्यते । अन्यथा सन्ध्याकाले स्नानं निषिद्धं कथं कार्यमिति भावो ज्ञातव्यः । एवं च वस्तुनाऽधुना न तु कालान्तरे, एवं क्रमो दृष्ट इत्याकारेण, तेनाऽधुना पदार्थस्योद्भटशक्तिकता । अथ स्वतःसम्भविना वस्तुनाऽलङ्कारव्यङ्ग्यं पदप्रकाश्यमुदाहरति-**तदप्राप्तीति** । **विष्णुपुराणस्थं** पद्यद्वयम् । अन्या गो { गो } पिका कृष्णाप्राप्तिजनित तदा-(महा) दुःखेन विनष्टसर्वपातका विलुञ्चतया[166] जनितशुद्धानन्देन क्षीणपुण्यसमूहा, तथा जगत्कारणं परब्रह्मस्वरूपिणं कृष्णं निरूच्छ्वासतया चिन्तयन्ती सती, मुक्तिं प्राणवियोगं, मोक्षं च, गता । अयमर्थः । पुण्यपापक्षये सति ब्रह्म-साक्षात्कारान्मुक्तिः । प्रथमश्लोके प्रथमार्द्धे दुःखानुभवात् पापक्षया(यो) द्वितीय-(ये) पुण्यभोगः । द्वितीयपद्यपूर्वार्द्धे ब्रह्मसाक्षात्कार इत्यर्थः । **अत्रेति** । **जन्म-सहस्रै**रित्यारभ्योक्तमित्यनेन समुदायार्थः । तथाऽयमर्थस्तदैवोपपद्यते यदशेष-पदेनाऽनेकजन्मसहस्रसोश्रु(ढ)व्यानि यानि दुःखानि, तैः सह तदप्राप्तिनिबन्धन-महादुःखस्य माहात्म्यमतिशयोक्तिलक्षणमशेषपदेन द्योत्यते । तदैव सोऽर्थः स्यान्ना-ऽन्यथेति । एवं व(च)यपदेनाऽपि अनेकजन्मसहस्रोपभोग्यानि यानि सुखानि तैः सह तच्चिन्ताविपुलाह्लादस्य तादात्म्यलक्षणातिशयोक्तिः । ननु अतिशयोक्ति-रूपकयोः को भेद इति चेदुच्यते—गौणसारोपगौणसाध्यवसानाभ्यां भेदात् ।

**बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥८२॥[८]**

**अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन 'विधिरपि त्वामनुवर्तते' इति सर्वपदद्योत्यं वस्तु ।**

---

यथा गौर्वाहीकद्वयमतिशयोक्ति(क्तिः) गौरेवायमिति रूपकम्। अशेषचयपदस्थलेऽशेषत्वं वस्तु, व(च)यशब्दप्रतिपाद्यसमुदायरूपं वस्तु च, तेनातिशयोक्तिरलङ्कारो व्यज्यते । अयमर्थः । अशेषचयशब्दयोरर्थरूपेण स्वतःसम्भविना वस्तुना[ऽ]शेषव(च)यपदद्योत्यौ अध्यवसितप्राधान्यलक्षितौ, अतिशयौ(यो)क्त्यलङ्कारौ स्वशक्तिसामर्थ्यादभिव्यज्यत इत्यर्थः । स्वतःसम्भविनालङ्कारेण पदद्योत्यं वस्तुव्यङ्ग्यमुदाहरति । **क्षणदेति** । असौ क्षणदा रात्रिरक्षणदार(अ)नुत्सवदा, वनमरण्यमवनं रक्षणहेतुः, व्यसनमव्यसनं, पक्षे अवीना(नां)मेडकानामसनं, प्रेरणं, इत्थं, हे वीर ! त्वयि पराङ्मुख(खे) { बत } । अत्र व्यङ्ग्यं वस्त्वाह—**अत्रेति** । य(या) { त् } क्षणदा सा तु(तु) कथमक्षणदेत्यादि शब्दशक्तिमूलो विरोधः । [167]अङ्गमुपादो यस्य ने(ते)नार्थान्तरन्यासाख्येन त्वयि पराङ्मुखे, तव द्विषतां सर्व(र्वं)पराङ्मुखमित्येवंरूपेणालङ्कारेण दे(दै)वमपि न(त)वानुकूलमिति वस्तु सर्वपदद्योत्यं व्यज्यत इत्यर्थः । अत्रायमर्थः । अत्र **विरोधाङ्गेने**ति । अत्र शब्दशक्तिमूलविरोधो यः सोगं(सोऽङ्गं) यस्य, एवम्भूतेनार्थान्तरन्यासेनालङ्कारेण विधि(धिः) { म } त्वामनुकूलो वर्तते इति वस्तु व्यज्यते । ननु अत्र क्षणदादिशब्दानां परा(रि)वृत्त्यसहत्वात् कथमर्थशक्तिमूलत्वमित्यतः आह—**शब्दशक्तिमूले**ति । तथा च शब्दशक्तिमूलत्वं विरोध एवाङ्गभूतेऽलङ्कारे न तु प्रधानभूतेऽर्थान्तरन्यासे वस्तुव्यञ्जके। प्रकृते तु अर्थान्तरन्यास एव प्रधानभूतो व्यञ्जको(कः) । यस्तु शब्दपरा(रि)वृत्तिं न सहते स तु प्राधान्येन व्यञ्जक एव न भवति किन्त्वङ्गभूतः । विरोधो हि अङ्गभूतः अर्थान्तरन्यासस्तु प्रधानभूतस्तत्र शब्दपरा(रि)वृत्तिं सहते इति तात्पर्यार्थः ।

स्वतःसम्भविनाऽलङ्कारेण पदद्योत्यं अलङ्कारव्यङ्ग्यमुदाहरति **तुहे**ति[168] । सखीवचनम्। हे सखि ! गोसम्मि प्रभाते। तुह वल्लहस्स अहरोऽधरः । मिलाणकमलदलो म्लानकमलदल[म्] आसि आसीत् । इयति सोऊग श्रुत्वा । नव-

तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो ।
इअ णववहुआ सोऊण कुणइ वअणं महिसंमुहम् ॥३॥ [८९]
[तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥]

अत्र रूपकेण त्वयास्य मुहुर्मुहुः परिचुम्बनं तथा कृतं येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम् । एषु स्वतःसंभवी व्यञ्जकः ।

राईसु चंदधवलासु ललिअमप्फालिऊण जो चावम् ।
एकच्छत्तं विण कुणइ भुअणरज्जं विजंभंतो ॥८४॥ [९०]
[ रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥ ]

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशातिवाह्यते इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते ।

---

वहुया वधू वयणं वदनम् । महीसन्मुखम् । कुणइ करोति । अत्राधरः पत्युर्म्लानकमलदलमेवेति रूपकेण काव्यलिङ्गं व्यञ्जितम् । अधरो म्लानकमलदलमिति पदार्थरूपेण स्वतःसम्भविना रूपकालङ्कारेण स्वभावशक्त्या ह(हि) ग्लानत्वं प्रति परिचुम्बनादिहेतुरूपं संहरति (हेतुमुपसंहरति ?) । यत्र हेतुप्रकाशनं क्रियते तत् काव्यलिङ्गमेवालङ्कारः । पदेनैव द्योत्यं तथा च पदेऽयं चतुर्थो भेदः । एष्विति । सायं स्नानमित्यारभ्य चतुर्षूदाहरणेषु । चत्वारि त(स्व)तःसम्भविस्थलोदाहरणानि । अयमर्थो बहिरपि सम्भाव्यमान एवेति स्वतःसम्भवीति ज्ञेयम् । अथ कविप्रौढोक्तिनिर्मितेन वस्तुना पदद्योत्यं वस्तुव्यङ्ग्यमुदाहरति—[रा]ईसु[169] इत्यादि । जो यः । कामः चन्द्रधवलासु रात्रिषु । ललियं ललितम् । चाऽर्थ(?)चापं, अप्फालिऊण आस्फाल्य । वियम्भन्तो विजम्भमाणः । एकच्छत्तं विय एकच्छत्रमिव । भुअणरज्जं भुवनराज्यम् । कुणइ करोति । अत्र वस्तुव्यङ्ग्यमाह—

निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥
॥८५॥ [११]

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः ।

वारिज्जंतो वि पुणो संदावकदत्थिएण हिअएण ।
थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो ॥८६॥ [१२]
[ वार्यमाणोऽपि पुनः संतापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥ ]

अत्र विशुद्धजातित्वलक्षणहेत्वलंकारेण हारोऽनवरतं कम्पमान एवास्ते इति ण चलइ पदद्योत्यं वस्तु ।

---

अत्र चन्द्रधवलासु रात्रिष्विति पदप्रकाशोद्दीपनवशात् काम एव राजा यतस्तेन रात्रावेव एकच्छत्रं राज्यं क्रियते, इत्यस्य कोऽर्थः, तदा सर्वे तदादेशकरा इति वस्तु । तेन वस्तुनाऽन्यो यथा सेवकः स्वामिनः आज्ञावशात् रात्रौ जाग्रदेव सेवां करोति तद्वत् कामिनो ये लोकास्तैर्जाग्रद्भिरै(रे)वोपभोग { रि } [सक्तै]-रेव निशातिबाह्येति वस्तु व्यज्यते । अयं कविप्रौढोक्तिनिबद्धो यतः कामो मूर्तौ बहिरसन्नपि चमत्कारकारीति भावः । अथ कविप्रौढोक्तिनिर्मितेन वस्तुनाऽलङ्कार-व्यङ्ग्यं पदद्योत्यमुदाहरति **निशितेति**। कामस्तीक्ष्णबाणधियाऽराले वक्त्रे । कुटिले वयसि तारुण्ये सति । अङ्गनाया दृशि स्वसामर्थ्यमर्पयति । सा(तत् ) च यत्र यत्र निपतति तत्र कामिनामवस्था अति(भि)लाषचिन्ताद्या(दीनां) व्यतिकरं मिश्रीभावं प्राप्या[ऽऽ]समुन्मिषन्ति प्रकटीभवन्तीत्यर्थः । अत्र व्यङ्ग्यमलङ्कारमाह—**अत्रेति** । व्यतिकरपदार्थरूपेण वस्तुना कविप्रौढोक्तिनिर्मितेनाभिलाषचिन्तादा-(दी)नामवस्थानम् । सुखदुःखरूपाणां परस्परविरुद्धानां यौगपद्यमसम्भाव्यमिति विरोधालङ्कारो व्यज्यत इत्यर्थः । अथ कविप्रौढोक्तिनिर्मितेनाऽलङ्कारेण पद-द्योत्यं वस्तुव्यङ्ग्यमुदाहरति—[170] **वारिज्जंतो** इति । वार्यमाणोऽपि पुनःसन्तापक-दर्थितेन हृदयेन । स्तनभरवयस्येन विशुद्धजाति न(र्न) चलति तस्या हारः ।

**सो मुद्धसामलंगो धम्मिल्लो कलिअललिअणिअदेहो ।**
**तीए खंधाहि बलं गहिअ सरो सुरअसंगरे जअइ ॥८७॥ [१३]**
**[ स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।**
**तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसंगरे जयति ॥ ]**

**अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति खंधपदद्योत्या विभावना । एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः ।**

---

अयमर्थः । विरहावस्थायां सन्तप्तेन हृदयेन मत्समदुःखभागित्वेन 'वयस्य, स्तनभर एव सन्तापमनुभवतु त्वं तु किमिति अनुभवसीति' वार्यमाणये(णोऽपी)-त्यर्थः । अत्र व्यङ्ग्यमाह—**विशुद्धजाति**रिति पदार्थरूपेण कविप्रौढोक्तिनिर्मितेन काव्यं(व्य)लिङ्गाख्यालङ्कारेण किमत्र भावीति कम्पमान एवास्ते न त्रुट्यतीति वस्तु व्यङ्ग्यं इत्यर्थः । हेत्वलङ्कारेणाऽनवरतकम्पमान एवास्ते इति व्यज्यते, इति स्पष्टोऽर्थः ।

अथ कविप्रौढोक्तिनिर्मितेन रूपका[लंका]रेण पदद्योत्यमलङ्कारव्यङ्ग्यमाह—**सो मुद्धे**ति[171]। सं(स) मुग्धः(ग्ध) श्यामलाङ्गो॰धम्मिल्लः कलितललितनिज-देहः । तस्याः स्कन्धास्यां(द्) बलं गृहीत्वा स्मरः सुरतसङ्गरे जयतीत्यन्वयः ॥ अथ स्कन्धोंसः । सेनानिवेशश्च । बलं सामर्थ्यं सैन्यं च । धम्मिल्लुः(ल्लः) स्मर इति रूपकम् । देहो नायिकायाः स्मरस्य च । अयमर्थः । अन्योऽपि सेनापतिः सङ्ग्रामे यदा सेनारूढो भवति तदा जयति । अयमपि मदनः । स्कन्धशब्दस्य सेनावाचकत्वमपीति भावः । अत्रेति । कविप्रौढोक्तिनिर्मितेन रूपकाल-ङ्कारेण रतिलक्षणकारणाभावेऽपि अभिलाषरूपकार्योत्पत्तिरूपविभावनाख्योऽलङ्कारो व्यज्यत इत्यर्थः । अत्र निष्कर्षोऽयम् । अत्र रूपकालङ्कारेण विभावना व्यज्यते । सा चेयं यथा—रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति अभिलाषे रतिः कारणम् । तस्या रतेर्विरतावपि कामुको(कः) रत्यभिलाष्यभूत् । अयं भावः । सुरतलक्षणः सङ्ग्रामः । तत्र सुभटो मदनः । स च यद्यप्यनङ्गं(ङ्गः) तथापि

णवपुण्णिमामिअंकस्स सुहअ को तं सि भणसु मह सच्चम् ।
का सोहग्गसमग्गा पओसरअणि व्व तुह अज्ज ॥८८॥ [१४]
[ नवपूर्णिमा मृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥ ]

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णवेत्यादिपओसेत्यादिपदद्योत्यं वस्तु व्यज्यते ।

सहि णवणिहुवणसमरम्मि अंकवालीसहीए णिबिडाए ।
हारो णिवारिओ विअ उच्छेरन्तो तदो कहं रमिअम् ॥८९॥ [१५]

---

नायिकाधम्मिल्लः श्यामोऽङ्गं(माङ्गं) तस्य; स स्कन्धाद् बलं गृहीत्वा पुना(नः)-रतिनिवृत्तावपि कामुको जनैः सुरतकार्यभूदित्यत्र रतिरूपकारणाभावेऽपि अनिवृत्ताभिलाषित्वं कार्यें(र्यम्) । स्कन्धपदेन स्कन्धारूढधम्मिल्लस्य मदनोद्दीपकत्वं जातमित्यभिप्रायः । उपसंहरति एष्विति ।

कविनिबद्धवक्तृप्रौढोक्तिनिर्मितेन वस्तुना पदद्योत्यं वस्तुव्यङ्ग्यमाह--णव पुण्णिमेति[172] । हे सुभग ! नवपूर्णिमामृगाङ्कस्य कस्त्वमसि भण, { का } सौभाग्यसमग्रा प्रदोषरजनी का इति वस्तुना, काव्यार्थौं, वस्तु । नवपूर्णिमायां मृगाङ्कशब्देन तरलत्वं सुन्दरत्वं पुरुषे व्यज्यते । प्रदोषरजनीशब्देन श्यामनायिकोच्यते । तथा च प्रदोषरजनीपूर्णिमाचन्द्रयोः किञ्चित् क्षणमेव सम्बन्धस्तद्वत् स्तोककालमनुरक्तिस्तवासीदिति वस्तु व्यज्यते । अत्र कविनिबद्धा वक्त्री नायिका । तया नायकं इत्युच्यत, इति कविना निबद्धा खण्डितस्त्रीवक्त्रात् प्रौढिनिष्पन्नेन वाच्यरूपेण । यथा रजन्यां चन्द्रोदयकाल एव रक्तस्तथा तस्याः त्वं प्रथममेवानुरक्तो न तु पश्चादिति वस्तु नवपदद्योत्यं व्यज्यते । यथा प्रदोषरजनी क्षणमात्रमेव ससौभाग्या तथा साऽपीति पओसेत्यादिपदद्योत्यं वस्तुचार्थशक्त्युद्भवतया व्यज्यत इत्यर्थः ।

कविनिबद्धवक्तृप्रौढोक्तिनिर्मितेन वस्तुना पदद्योत्यमलङ्कारव्यङ्ग्यमुदाहरति सहीप्ति(सहीति)[173] । नव निधुवनसमरे, अङ्कपाल्या सख्या निबिडया । हारो-

[सखि नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया ।
हारो निवारित एवोच्छिद्यमाणस्ततः कथं रमितम् ॥]

अत्र वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत् तत्कथय कीदृगिति व्यतिरेकः कहंपदगम्यः ।

पविसंती घरवारं विवलिअवअणा विलोइऊण पहम् ।
खंधे घेत्तूण घडं हा हा णट्ठोत्ति रुअसि सहि किं ति ॥९०॥
[प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम् ।
स्कन्धे गृहीत्वा घटं हा हा नष्ट इति रोदिषि सखि किमिति ॥]

अत्र हेत्वलंकारेण संकेतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदा अपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदद्योत्यम् ।

---

निवारित एव, उद्वृण्वन्[174] एव, ततः कथं रमितम् । उद्वृण्वन् उक्तार्थतामापन्नः प्रसिद्ध, एतेभ्योऽधिकत्वेन व्यतिरेकः । अत्राऽयमर्थः द्वयोस्तृतीयतया स्पर्शविघ्नहेतुत्वात् अधिकीभवन् हारो निवारित एव । यथा सख्या रतिकाले अन्यो निवार्यते तथा गाढालिङ्गनेन हारस्त्रोटित इत्यर्थः । एतावदेव मया दृष्ट(ष्टं), तदा ततः, कथं त्वया रमियं रमितं, कथयेति शेषः । हारस्वे(च्छे)दानन्तरं अन्यदेवरतमभूदिति । व्यतिरेकालङ्कारः । अत्र काव्यवाच्यार्थलक्षणेन वस्तुना हारस्वे(च्छे)दानन्तरमन्यदेव रतमभूदिति अलङ्कारो व्यज्यते । कथमित्यनेन पदेनेति । कविनिबद्धा काचिन्नायिका । तस्याः प्रौढोक्तिरियम् । अर्थशक्तिमूलो व्यज्यत इत्यर्थः ।

कविनिबद्धवक्तृप्रौढोक्तिनिर्मितेनालङ्कारेण पदद्योत्यं वस्तुव्यङ्ग्यमाह—**पविसंतीत्यादि**[175] । प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम् । स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि ! किमिति । घटध्वंसे स्कन्धग्रहणं हेतु { भि } रित्याह—**हेत्वलङ्कारेणेति** । अत्र घटनाशो हेतुस्तेन हेतुना यदि सङ्केतस्थानं गन्तुमिच्छसि तदाऽपरं घटं गृहीत्वा गच्छेति व्यज्यते । **किमिति रोदिषीत्यत्र** किमिति पदेन व्यज्यते । पुरुषं सङ्केतस्थाने गच्छन्तं

यथा वा

विहलंखलं तुमं सहि दट्ठूण कुडेण तरलतरदिट्ठिम् ।
वारप्फंसमिसेण अ अप्पा गुरुओत्ति पाडिअ विहिण्णो ॥९१॥ [१६]
[विश्रृङ्खलां त्वां सखि दृष्ट्वा कुटेन तरलतरदृष्टिम् ।
द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा विभिन्नः ॥]

अत्र नदीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वं व्याकुलया त्वया घटः स्फोटित इति मया चिन्तितं, तत्किमिति नाश्वसिषि तत्समीहितसिद्धये व्रज अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्ये इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु ।

जोह्णाइ महुरसेण अ विइण्णतारुण्णउत्सुअमणा सा ।
बुड्ढा वि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअम् ॥९२॥ [१७]
[ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धाऽपि नवोढेव परवधुरहह हरति तव हृदयम् ॥]

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवहूपदप्रकाश्यः ।

---

दृष्ट्वा मलिनवदनां रुदन्ती(न्तीं) दृष्ट्वा दूती प्राह—। अत्र कविनिबद्धा दूती, तस्याः प्रौढोक्तिरियम् । अस्यैवोदाहरणान्तरमाह—**यथा** चे(वे)ति । अत्रापह्नुतिः । सहि हे सखि[176] । क्षुद्रेण घटेनोपलक्षिता त्वं, विहलं विह्वलम् । खलं प्रियम् । दट्ठूण दृष्ट्वा । तरलतरदृष्टिर्जातेति शेषः । वारप्फंसणमिसेण द्वारस्पर्शमिषेण । अप्पा आत्मा । गरुउ(ओ)त्ति गुरुर(रि)ति । द्वारस्पर्शव्याजेन पातित(तः)विभिन्नः । अत्र वस्तुव्यङ्ग्यमाह—अत्रेति । कविनिबद्धा या सखी वक्त्री तत्प्रौढोक्तिनिर्मितैः वारप्फंसणमिसेणंति पदार्थेनापह्नुत्यलङ्कारेण, तव श्वश्रूं बोधयिष्यामीति वस्तु, मिसेणेति पदद्योत्यं व्यज्यत इत्यर्थः । कविनिबद्धं(द्ध)वक्तृप्रौढोक्तिनिर्मितेनाऽलङ्कारेण पदद्योत्यमलङ्कारव्यङ्ग्यमुदाहरति—**जो प(ह्ना)इ** इत्यादि[177] । ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा । वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदय[म्] । [हृदय ?] हारित्वे

एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः। वाक्यप्रकाश्ये तु पूर्वमुदाहृतम्। शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न भवतीति पञ्चत्रिंशद्भेदाः।

(सू० ६०) प्रबन्धेऽप्यर्थशक्तिभूः ॥४२॥

यथा गृध्रगोमायुसंवादादौ।

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले।
कङ्कालबहले घोरे सर्वप्राणिभयंकरे ॥९३॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥९४॥

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम्।

---

ज्योत्स्नामधुरसाभ्यां दत्तं तारुण्यं हेतुरित्याह—**काव्यलिङ्गेने**ति। काव्यलिङ्गमलङ्कारः स उच्यते यत्र हेतुः प्रतिपाद्यते। यथाऽत्रोत्सुक्त(क)तादिविशेषणविशिष्टा वृद्धा परवधूः सैव हृदयहरणे हेतुरनेनाक्षेपस्तव चरित्रं वक्तुं न शक्यत इत्येवंरूपो व्यज्यते। परवधूपदेन कविनिबद्धाऽत्र नायिका, तस्याः प्रौढोक्तिनिर्मितपरवधूत्वादि(दी)ति काव्यलिङ्गालङ्कारेणार्थशक्तिमूलतया परवधूपदद्योत्यः प्रतिषेधरूप आक्षेपालङ्कारो व्यज्यत इत्यर्थः। नायककुचेष्टायाः अशक्यवक्तव्यत्वेनाक्षेपः परवधूपदप्रकाश्ये(श्य) इत्यर्थः। उपसंहरति **एष्वि**ति। वाक्यप्रकाश्यमुदाहर्तव्यमिति शङ्कां निवारयति **वाक्ये**ति। निःशेषमित्यादौ उदाहृतमित्यर्थः। वाक्ये द्वादशभेदा उक्तास्त एव पदेऽपि उदाहृताः। वाक्येऽष्टादशभेदाः पदे तु सप्तदश भेदा भवन्ति। यतः शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न भवति, यतः पदस्थले तस्यैव पदस्य परिवृत्तिस्तस्यैवापरे(र)[तेः]ति न घटत इति सप्तदशै(शै)व भेदाः भवन्ति। तेन ३५ भेदा भवन्ति। वाक्यपदाभ्यां मिलित्वा ज्ञेया प्रबन्धे इति : अर्थशक्ति {ध्वनतौ} [भूः]ध्वनिः प्रबन्धद्योत्यो भवतीत्याह—**प्रबन्धे[ऽ]मो(पी)**ति। भारते शान्तिपर्वणि प्रबन्ध(न्धे) गृध्रगोमायुसंवादोऽस्ति। तथाहि—कस्यचिद् बालको मृतः। स च श्मशाने नीतस्तदा तदीया लोका तिष्ठन्ति। तदा गृध्रस्यायमभिप्रायो यदि रात्रि-

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविध्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥९५॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥९६॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठं च वचनमिति प्रबन्ध एव प्रथते ।

अन्ये त्वेकादशभेदा ग्रन्थविस्तरभयान्नोदाहृताः स्वयं तु लक्षणतोऽनुसर्तव्याः । अपिशब्दात्पदवाक्ययोः ।

---

पर्यन्तं लोकाः स्थास्यन्ति तदा रात्रौ गोमायुर्गृहीत्वा यास्यति । तदा च गोमायोरयमभिप्रायो यद्येते लोका दिवसे बालकं शवरूपं मुक्त्वा गृहे गमिष्यन्ति तदा गृध्रो नेष्यति इति गोमायोरभिप्रायो व्यङ्ग्योऽस्ति । यद्येते दिवसं(से) तिष्ठन्ति तदा वरमिति परस्परं तयोरभिप्रायो व्यङ्ग्यः । प्रबन्ध एवेति । दिवसे पुरुषविसर्ज्ज(र्ज)नाविसर्जनरूपं वस्तु प्रबन्धेनैव व्यज्यते । अर्थशक्तेर्भवतीति । अर्थशक्त्युद्भवो द्वादशविधः । संवादादौ तत् प्रथमतः कालधर्मो मरणं, तदुपातः-(त्तः) काचि(कश्चि)न्न जीवित इति सम्बन्धः । दिवा प्रभवत इति रात्राव(व)-न्धत्वात् । **बहुविघ्न** इति । अयं सन्ध्या[स]न्निहितः बहुविघ्नो, राक्षसकालत्वात्, तत्कालापगमे जीवन(नं) सम्भाव्यते । तदाह जीवेदपि [इति] । कनकवर्णाभं, न तु कनकात(त्त)दा कनकगतकाठिन्यस्याऽपि सम्भवात् । { यथा स्थिरत्वस्य } [अ]त्र पद(द्य)द्वये नानावाक्यानि परं सर्वेषामर्थो व्यङ्ग्यो[ऽ]यं व(य)त् अमुं बालकं मुक्त्वा गन्तव्यमित्येकवाक्यता, एवमन्यत्रापि पक्षे व्यङ्ग्यार्थो ज्ञेयः । अयमर्थः प्रबन्धप्रकाशो(श्यो ?)ऽस्ति । प्रबन्धलक्षणं यथा-नानावाक्यानां यत्रैकवाक्यता, यथाऽत्रे(त्रै)वेति । प्रबन्धवाच्योऽर्थः स्पष्ट एवेति न विव्रियते । व्यङ्ग्योऽर्थो विवृतः । कालधर्मं मरणम् । त्यक्षध्वमिति । छन्दोवत् तद्वे(द्वि)दां प्रवृत्तिरिति न्यायेन । व्यत्ययेनाऽऽत्मनेपदं टेरत्वाभाश्च । भारतोक्तगृध्रगोमायुसंवादापरप्रबन्धप्रतिपाद्येनार्थरूपेण वस्तुना गृध्रगोमाय्वोः बालभक्षणाऽभिप्रायरूपवस्तु व्यज्यत इत्यर्थः । **अन्ये** इति । अत्र प्रबन्धे शेषा एकादशभेदा नो-

**(सू० ६१) पदैकदेशरचनावर्णेष्वपि रसादयः ॥**

व्यन्ते । कि { मु } [न्]त्वेक एव भेदो दर्शितो, वस्तुना गृध्रवाक्यप्रबन्धार्थेन दिवा पुरुषविसर्जनरूपो वस्तु व्यज्यते इति । स्वतःसम्भविस्थले भेदो वस्तुना वस्तु व्यज्यते इत्येवंरूपो भेद उक्तः । शेषा भेदा एकादश ग्रन्थविस्तरभयान्नोदाह्रियन्ते । एकादशान्ये भेदा प्रबन्धे स्वयं बोध(द्ध)व्याः । **अपि शब्दादिति** । अर्थशक्त्युद्भवः पदे वाक्ये तु द्वादशविधः । स पूर्वोक्त एव । प्रबन्धेऽपि ज्ञेया अन्ये भेदाः । शब्दशक्त्युद्भवादयः । प्रबन्धेन सम्बन्धेन सन्ति, तेन, प्रबन्धेऽर्थेऽर्थशक्त्युद्भवभेदा द्वादशैव भवन्ति । एवं पूर्वं वाक्ये १८, पदे सप्तदश, एवं ३५ भेदा जातास्तन्मध्ये प्रबन्धसम्बन्धिनो द्वादश एवं मिलिताः सप्तचत्वारिंशत् ४७ भेदा जाता ध्वनेः । प्रबन्धेऽष्टादशभेदानां मध्ये द्वादशैव भवन्ति । शेषा अर्थान्तरसङ्क्रमित १ अत्यन्ततिरस्कृत २ रसादिध्वनि ३ शब्दशक्त्युत्था-(त्थो)द्वेधाऽलङ्कारवस्तुभेदादेव ५ शब्दार्थोभयशक्तिभूरित्येवं षड् ६ { न } भव(वं)तीति स्पष्टोऽर्थः । **अपीत्याद्यनुवादार्थः** । तेन पदनिष्ठा ये सप्तदश भेदा उक्ताः वाक्ये चाष्टादश १८ प्रोक्तास्तन्मध्यगता ये द्वादश भेदास्तेऽत्र प्रबन्धेऽपि सम्भवन्ति । एवं वाक्ये पदे प्रबन्धे च ध्वनिभेदा उक्ता(क्ताः) । पदैकदेशादिष्वपि तानाह—**पदैकदेशेति** । यथा पूर्वं केचित् पदनिष्ठा भेदा उक्ताः, केचिद् वाक्यनिष्ठा भेदा उक्ताः, केचित् प्रबन्धनिष्ठा उक्तास्तेषां सप्तचत्वारिंशता(तां) मध्ये कांश्चिद् रसादिभेदान् पदैकदेशे १ रचनायां २ वर्णेष्वपि ३ सम्भव(वं)ति { नो } । दर्शयति **पदैकेति** । तत्र पदैकदेशोऽपि द्विविधः । प्रकृतिः प्रत्ययश्चेति । तत्र प्रकृतिरपि द्विधा नामधातुभेदात् । प्रत्ययो द्विविधः सुबन्ततिङन्तभेदात् । पदस्यैकदेशः प्रकृतिप्रत्ययसम्बन्धकालवचनपुरुषव्यत्ययपूर्वनिपातविशेषविभक्तितद्धितोपसर्गनिपातसर्वनामप्रातिपदिकाऽव्ययीभावकर्मभूताधारादिविशेषा(षाः) । रचना सङ्घटनं, सा च द्विविधा । असमासा मध्यसमासा । ससमासा चेति । वर्णा मृदुसूक्ष्मात्मानः प्रसिद्धाः । तेषु निमित्तसप्तमी । निमित्तेषु द्योतकेषु[सत् सिध्यर्थं][178] मित्यर्थः । रसादय[इत्या]दिशब्देन भाव-

तत्र प्रकृत्या यथा

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तइअणअणं पव्वईपरिचुंबिअं जअइ ॥९७॥

[रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥]

अत्र जयतीति न तु शोभते इत्यादि । समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम् ।

---

तदाभासादयः । यद्यपि विभासा(वा)दीनां रसाभिव्यञ्जकत्वमस्ति तथापि विभावादिपदांशादि[ना....प्रकाश्यमान]त्वेन चमत्कारकारित्वात् । विभावाद्याश्रयपदांशादीनामपि द्योतकत्वमविरुद्धम् ।

अथ प्रकृत्या यथा रसादिकं व्यज्यते तदाह—रईति[179]। रतिकेलिहृतनिवसनं(न)करकिसलयरुद्धनयनयुगलस्य रुद्रस्य तृतीयं नयनं पार्वतीपरिचुम्बितं जयति ॥ रतिकेल्याहृतं निवसन येन, करकिश(स)लयाभ्यां रुद्धं नयनयुगलं यस्य, ततः कर्मधारयः । अयमत्र भावार्थः । यदा पार्वत्या सह परमेश्वरेण रतिः कृता तदा निवसनं परमेश्वरस्य चुम्बनमिसे(षे)ण स्थगितमितिभावः ॥ अत्र जयतीति प्रकृतिरत्र व्यङ्ग्यं रसमाह—अत्रेति । जयतीत्युक्तं न तु शोभत इत्याद्युक्तमित्यर्थः । शोभत इत्यादि परित्यज्य जयतीति कथम(म्) । प्रयोजनमाह—समान इति । इतरलोचनद्वयसाधारणेऽपि पिधाने लोकोत्तरेणेव चुम्बनरूपेणाऽस्य तृतीयनयनस्य पिधानमिति, तदेव, तृतीयनयनमेव, इतरलोचनद्वयादुत्कृष्टमधिकमयमर्थो जयतीति प्रयोगात्, माऽन्यस्मादतो जयप्रकृत्या सम्भोगातिशयो व्यज्यत इत्यर्थः । स्थगनमाच्छादनम् । तच्च हस्तादिना कृतं लौकिकम् । परिचुम्बनं तु प्रधानोपकरणत्वेनादृष्टत्वाल्लोकोत्तरमित्याह—लोकोत्तरेणेति । तदेव चुम्बनपिधानमेवोत्कृष्टं चमत्कारविशेषानुगुण्यं च । रागातिशयहर्षलज्जादिसम्पत्तिद्वारकसातिशयपोषणात् । तच्च { न } विषयेण जयतिना गम्यत इति न शोभते प्रयोगः, इत्यतिशयव्यञ्जकत्वं जिधातो(तोः) । नाम्नो व्यञ्जकता-

यथा वा

प्रेयान सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृता
धावित्वेव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥९८॥

अत्र पदानीति न तु द्वाराणीति ।

तिङ्सुपोर्यथा

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥९९॥

---

माह-त(य)थेति । कयाचिन्नायिकया सशपथंवादी ततः प्रेयान् तिरस्कृतः । पादानतः प्रणतः । सायं सन्ध्यासमये । सशपथं यथा स्यात् तथा । प्रणतः सन् तिरस्कृतः सन् यावदुन्मनाः सन् द्वित्राणि पदानि यावन्न याति तावद् धो(धा)वित्वा प्रत्युतकरयुगले वल्लभबन्धनाय लसन्ती,[180] नीवी, तया, निबन्धो निरोधनं, यस्मिन् कर्मणि, कृतप्रणामकं च यथा तथा धृतः प्रेयानिति । कान्तयेति । परस्परविरहाक्षमत्वम् । उन्मना सोत्कण्ठः । प्रत्युत विरोधे पाणिसंपुटे प्रणामार्थं बद्धाञ्जलौ गलन् रागोत्कण्ठ्यात् मुद्रणं त्यजन् नीवीबन्धो यत्र धारणे । प्रणामाञ्जलिनैव स्खलतो नीवीबन्धस्यालम्बनम् । अत्रेति । द्वारादिव्यवच्छेदो व्यङ्ग्यः । स च सम्भोगसञ्चार्यो(र्यौ)त्सुक्योद्दलनद्वारा(रेण) सम्भोगपरिपोषकृत् । प्रेम्णो गतिर्विचित्रा आश्चर्यम् । अत्र व्यङ्ग्यं रसमाह--अत्रेति । द्वित्राणि पदानीत्युक्तं न तु द्वाराणोति । चि(द्वि)त्राणि द्वाराणीत्युच्यमाने रसचमत्कारा(रो) न्(न) भवेत् । अतो द्वित्र्यादि पदप्रकृत्या प्रेमातिशयो व्यज्यत इत्यर्थः ।

अथ सुबन्ततिङन्तयोः प्रत्यययोर्व्यञ्जकतां दर्शयति पथीत्यादि । वायुः पथि मवि(दिशि)दिशि शुकचञ्चुवत् वा(चा)रुणां रम्भाङ्कुराणां लासको नर्तकः । कामः प्रतिमनुष्य(ष्यं) बाणान् विनिक्षिपति । प्रतिनगरं मनस्विनोनां मानचर्चे-

अत्र किरतीति किरणस्य साध्यमानत्वम् निवृत्तेति निवर्तनस्य सिद्धत्वं तिङा सुपा च तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते ।

यथा वा

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैः
तवावस्था चेयं विसृज कठिने मानमधुना ॥१००॥

अत्र लिखन्निति न तु लिखतीति तथा आस्ते इति न तु आसित इति अपि तु प्रसादपर्यन्तमास्ते इति भूमिमिति न तु भूमाविति न हि बुद्धिपूर्वकमपरं किंचिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम् ।

---

(र्चा) मानवार्ता मानप्रसङ्गो निवृत्तः । अत्र व्यङ्ग्यमाह--**अत्रेति** । किरतीत्यत्र कृतेर्यत्र वर्तमानता तत्र क्रियाया असिद्धत्वं यथा पचतीति पाकानुकूलकृतेर्यत्र विद्यमानता तत्र क्रियाया असिद्धत्वमेव । एवं प्रकृतेऽपि । **किरतीति** । किरणानुकूलयत्न[130A] स्तिङ्प्रत्ययस्य वाच्यः म च वर्तमानार्थ एव । किरतीत्यत्र तिङ्प्रत्ययेन क्रियायाः किरणस्य वर्तमानत्वेन साध्यमानत्वोत्कर्षां (त्वेनोत्कर्षं?)-व्यनक्ति । निवृत्तेत्यत्र सुप्प्रत्ययो निवर्तनलक्षणस्य धात्वर्थस्य निष्पाद्यमानत्वं दूरीकृत्य निष्पन्नत्वेनोत्कर्षं व्यनक्ति । तत्राऽपि सिद्धत्वेऽपि **क्तप्रत्ययोऽतीतत्वं** व्यनक्तीत्यर्थः । तथा चाऽयं भावार्थः । यावत्पर्यन्तं पुष्पधन्वनो बाणविमोचनानुकूलाऽऽकृतिर्जाता बाणविमोचनं तु न जातं, बाणविमोचनात् प्राक् क्षणएव माननिवृत्तिर्जातेति व्यज्यते, इति प्रत्यययोर्व्यञ्जकत्वं ज्ञेयम् । किरणपदं चिन्त्यम् । औणादिकक्युप्रत्ययेन किरणपदं सिद्धम् । किरति तमांसि । कर्तरि व्युत्पन्नस्य किरणपदस्य मयूखवाचितया क्रियानभिधानात् साध्यत्वसिद्धत्वे व्यङ्ग्ये एवेत्याह–**तिङा सुपा चेति** ।

अत्रैवोदाहरणान्तरमाह—**यथा चे(वे)ति** । लिखन्निति प्राणा इव दयित(तः) प्राणवल्लभो बहिरवनतः शिराः सन्न(न्)भूमि(मिं)लिखन्नास्ते । तव सख्योऽपि

**सम्बन्धस्य यथा**

**गामारुहम्मि गामे वसामि णअरट्ठिअं ण जाणामि ।**
**णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥१०१॥**
**[ग्रामरुहास्मि ग्रामे वसामि नगरस्थितिं न जानामि ।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥]**

**अत्र नागरिकाणामिति षष्ठ्याः ।**

**'रमणीयः क्षत्रियकुमार आसीत्' इति कालस्य ।**

---

निराहाराः सन्त्यो निरन्तरोच्छूननेत्राः सन्ति । पञ्जरस्थैः शुकैर्हसनं पठनं च परित्यक्तम् । तव चेयमवस्था । अतः कठिनेऽधुना मानं परित्यज्य(ज) । **अत्र** व्यङ्ग्यमाह—**अत्रेति** । अत्र पदद्वयेन लिखन्नास्ते भूमिमित्यत्र लिखन्नास्ते इत्येकं भूमिमित्यपरं, तत्र सुप्तिङाभ्यां मिलित्वा प्रसादपर्यन्तमवस्थानम् । लिखने बुद्धिपूर्वकसाध्यत्वाभावो व्यज्यते । अन्यत्र लिखति भूमादि(वि)त्युच्यमाने भूमावित्यधिकरणस्य कर्मण आकाङ्क्षितत्वेन लिखने बुद्धिपूर्वक(कं) साध्यत्वमेव प्रतीयेत् । एवं सुबन्ततिङन्ताभ्यां मिलित्वा लिखने बुद्धिपूर्वकत्वाभावः प्रसादपर्यन्तमवस्थानं व्यज्यत इत्यर्थः । एवं सुबादयोऽभिप्रायविशेषं व्यञ्जयन्ति ।

स्वस्वविभावावि(दि)रूपताद्वारेण रसादीन् व्यनक्तीत्यर्थः । सम्बन्धेन व्यङ्ग्यमुदाहरति । [181]**ग्रामाहो(मरुहा)स्मि** ग्रामारुह म्हि इति पाठे । ग्रामे जाताऽस्मि **वा, ग्रामे वसामि**, नगरस्थितिं न जानामि । नागरिकाणां प्रतीतीत्यत्र(पतीनित्यत्र ?)सम्बन्धार्थे षष्ठी । नागरिकाभिर्हृतचित्तानामपि मय्यासक्तिरतिशयेनेति वैदग्ध्यातिशयं व्यनक्ति । नागरिकापतीनिति समासे सम्बन्धस्य मूढतया उक्तस्य व्यङ्ग्यस्याप्रतीतेरित्यर्थः ।

कालेन व्यङ्ग्यमाह—**रमणीय** इति । अत्र वर्तमानं श्रीरामं प्रति परशुरामेण प्रयुक्तो भूतकाले(लो) विहितश्चासा(सो)दिति लङ् । अयमत्र भावार्थः । अतीतकालोपदेशाद् वर्तमानभविष्यत्वव्यवच्छेदोऽवगम्यते । मत्क्रोधकवलितस्याऽस्य स्थितेर्वर्तमानत्वं न वा भविष्यते(द्रे)त्यर्थः । **कालस्येति** । कालस्य भूतकालवि-

एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः ।

वचनस्य यथा

ताणं गुणग्गहणाणं ताणुक्कंठाणं तस्स पेम्मस्स ।
ताणं भणिआणं सुंदर एरिसिअं जाअमवसाणम् ।।१०२।।
[तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तासां भणितीनां सुन्दर ईदृशं जातमवसानम् ॥]

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते ।

पुरुषव्यत्ययस्य यथा

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।

---

हितस्य लङो व्यञ्जकत्वं उपचारात्, अन्यथा कालस्य पदैकदेशत्वाभावात् तत्राऽनुदाहरणत्वं स्यात् । ननु पदैकदेशद्योत्यो रसोऽत्र न प्रतीयते तादृश यदा(तादृशार्थ ?) प्रयोगादित्यत आह—**एषा** हीति । कुपितस्येत्यनेन रौद्रो रसोऽत्रास्तीति ज्ञेयः ।

वचनस्य व्यञ्जकत्वं दर्शयति **व्यञ्ज(वच)नस्ये**ति । **ताणे**ति[182] । तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः । तेषां भणिता(ती)नां सुन्दर ईदृश-(शं) जातमवसानम् ।। बहुत्वं नानाप्रकारता । एकत्वमैकरूप्यम् । तं सैव प्रकर्ष-काष्ठानुरूपत्वात् । बहुत्वादिसङ्ख्याविशेषस्तु वाच्य एवेति । अत्र व्यङ्ग्यमाह—**अत्रे**ति । तेषां गुणग्रहणाभा(ना)मित्यत्र बहुवचनेन हृदयाक(योत्क)र्षौ वैदग्ध्यं बहुत्वं ध्वन्यते(न्ते) । तद्द्वाराविप्रलम्भरसोऽपि द्योत्यत इत्यर्थः । तस्य प्रेम्ण इत्येकवचनेन प्रेम्ण एकत्वं अखण्डे(ण्डत्वं) द्योत्यते । तादृशेनैव प्रकर्षप्रतीतेः । तत् द्वारा रसातिशयोऽपि द्योत्यत इत्यर्थः । न च सुपां वाचकत्वेन सम्भवोति वाच्यं, स्वार्थद्रव्यलिङ्गसङ्ख्याकारकं प्रातिपदिकार्थ इति मतमाश्रित्य भाष्यका-रेण मु(सु)पा द्योतकत्वाङ्गाकारात् ।

पुरुषव्यत्ययव्यञ्जकत्वमुदाहरति । **पुरुषव्यत्यये**ति । कश्चिद् वैराग्यवान् चित्तं प्रत्याह । चञ्चललोचना वनिता । तस्यामञ्चिता रुचिर्यस्य मनसः एवं-

किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमाम्
एषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥१०३॥

अत्र प्रहासः ।

पूर्वनिपातस्य तथा

येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः ।
ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥१०४॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते ।

---

विध रे रे चित्त । रे रे इत्यादि साक्षेपं सम्बोधनम् । स्थिरप्रमाणं महिमानं हित्वाऽबलां विलोक्य किं नृत्यसि विहरिष्यामीति किं मन्यसे । बत इति खेदे । हतां निदि(न्दि)तामिमामन्तराशं(शां) अन्तर्मध्यलब्धप्रकाशां, मुञ्च । संसार-समुद्रे एषा स्त्री कण्ठतले कृताशिला खलु । व्यङ्ग्यमाह—अत्रेति । प्रकृष्टहासः परिहासः । तत्र प्रहासे मन्योपपदे किं मन्यसे विहरिष्यामीति । मध्यमोत्तमयो-रुत्तममध्यमव्यत्ययः । तथा चाऽनुशासनम् । प्रहासे मन्योपपदे मन्यतेरुत्तम एकवच्चेति । अप्रहासेनोत्तमपुरुषस्य शक्तिस्तदस्तदप्रतीतेः । न वासौ वाक्यार्थः । पदार्थसङ्गतिविरहात् । किन्तु प्रहासे विवक्षिते अनुशिष्टेन पुरुषव्यत्ययेन प्रहासो व्यज्यत इत्यर्थः ।

पूर्वनिपातस्य व्यञ्जकत्वमाह—येषामिति । येषां राज्ञां दोर्बलमेध(व) ते राजानो दोर्बलतया सम्मताः । प्रायः केवलनी[ति]रीति शरणेः(णैः)। राजभिः किं कार्यं, पराक्रमनयस्वीकारे क्रान्तक्रमाः । पराक्रमभ(न)यस्वीकारेण मनोहरग-तयो ये तेनैव स्युः । लोकत्रये भवादृशास्त्वादृशाः पवित्राः द्वित्रापरं सन्ति। अत्र व्यङ्ग्यमाह—अत्र पराक्रम इति । पराक्रमनययोर्मध्ये पराक्रमस्यैव प्राधान्यं व्यज्यते । अयमर्थः । पराक्रमनयेत्यत्र नयशब्दस्याल्पस्वरवत्त्वेऽपि पराक्रमशब्द-स्याभ्यर्हितत्वात् पूर्वनिपातः कृतः । तेन तस्य प्राधान्यं व्यज्यते । न चाऽत्र पूर्वनिपातस्य पदैकदेशत्वं नास्तीति वाच्यम् । पदधर्मस्य पूर्वनिपातस्य पदैक-देशत्वोपचारात् ।

विभक्तिविशेषस्य यथा

प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥१०५॥

अत्र दिवसेनेत्यपवर्गतृतीया फलप्राप्तिं द्योतयति ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं तत्
गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति ॥१०६॥

अत्रानुकम्पावृत्तेः करूपतद्धितस्य ।

---

अथ विभक्तिविशेषस्य व्यञ्जकत्वमुदाहरति **विभक्तीति**। **प्रधनेति** । प्रधनमेव युद्धमेवाध्वा, प्रवेशनिःश(स)रणहेतुत्वात् । हे धीर ! तद(व) विधुरैः शत्रुभिः चापशब्दधारिणि युद्धप्रदेशे दिवसमयोधि, दिवसं व्याप्य । विधिसिद्धमनाहार्यं पदं स्थानं क्रियाविशेषणम् । हे नृप भवांस्तु दिवसेन युद्धं **जयी जात** इति फलप्राप्तौ द्योत्यायां क्रियापरसमाप्तिरपवर्ग इति । **दिवसेने**त्यत्रापवर्गाविशिष्टया तृतीयया व्यज्यते । **अत्रेति** । क्रियासरगाप्तिपरवर्गः । सा च विजयलाभ एव भवति । फलसिद्धावेवेच्छाविच्छेदात् । अत एव शत्रूणां जयाभावाद्दिवसमिति द्वितीया ।

अथ तद्धितस्य व्यञ्जकत्वमुदाहरति–**भूयो भूय** इति। **मालतीमाधव**नाटके पद्यमिदम्। कामन्दक्युक्तिरियम् । मालती नायिका। माधवं नायकं दृष्ट्वा इति ताम्यति खेदं प्राप्नोति इवोत्प्रेक्षते[र]तिरभिनवं[नवं] [183]कामति (ताम्यतीति) त्वदृष्ट्वा इत्यन्वयः । कथम्भूतं माधवं किं कृत्वा ताम्यति । भूयो भूयो वारं वारम् । **सविधेति**। रथ्याविशेषणम् । समीपस्थनगरी { वी } वीथ्यापर्यटन्तं माधवं, पुनः पुनरवलोक्य । कथम्भूता मालती, भवनवलभीतुङ्गवातायनस्था । भवनस्य गृहस्य वा वलभी, प्रासादोपरि मण्डपः, तत्र यावत् तुङ्गं वातायनं, तत्र तिष्ठतीति । गृहवलभी तुङ्गगवाक्षस्था । तुङ्गमुच्चदेशस्थं वातायनं, तत्र स्थिता पश्यति । अनेन वर्त्मना कदाचिदयं पश्येदित्यभिप्रेत्य तत्र शरीरसर्पय-

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥१०७॥

अत्र प्रशब्दस्योपसर्गस्य ।

कृतं च गर्वाभिमुखं मनस्त्वया
किमन्यदेव निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम् ॥१०८॥

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य ।

---

तीत्यर्थः । यद्यस्मात् दृढोत्सुकोन(दृढोत्सौक्येन ?) ललितं यथा तथा लुलिते-(तैः)रङ्गकैस्ताम्यति । तमूचूः खेदे इति वचनात् । व्यङ्ग्यमाह अङ्गकैरिति । अनुकम्पायामित्यनुकम्पायां कप्रत्ययविधानात् अङ्गकैरिति { तद्धिते } तद्धितेन 'क'प्रत्ययेनानुकम्पा व्यज्यते । तयाऽनुकम्पया दौर्बल्याद्यवस्थादि ध्वन्यतेऽतो विप्रलम्भरसप्रकर्षो व्यज्यते इत्यर्थः ।

अत्रोपसर्गस्थ(स्य) व्यञ्जकत्वमुदाहरति परिच्छेदेति । कोऽप्यनिर्वचनीयो विकारोन्तर्मध्ये जडयति, जडं करोति, च पुनस्तापं कुरुते इत्यन्वयः । कथम्भूतो, विधु(का)रः परिच्छेदातीत इयत्तारहितः, सकलशब्दागोचरः, अस्मिन् जन्मनि द्वितीयवारं अनुभवपथं न गतवान् , विवेकस्य प्रकर्षेण नाशादुपचितमहामोह-गहनः, एवंविधो विकारः । कोऽप्यन्तर्जडयति तापं च कुरुते इत्यन्वय(यः) । व्यङ्ग्यमाह—अत्रेति । प्रध्वंसादित्यत्र प्रशब्दः प्रकर्षं द्योतवान् आत्यन्तिकं विवेकाभावं व्यनक्तीत्यर्थः ।

अथ निपातव्यञ्जकत्वमुदाहरति कृतमिति । रावणसम्बन्धी[184](न्धिः?) प्रबन्धानाम् । रावणं प्रति वक्ति—कृतमिति । हे राजन् ! त्वया गर्वाभिमुख(खं) [मनः]कृतं चाऽन्यत् । अत्र एवं नो[द्विषः] निहता(ताः) । अपि तु निहताः । तमांसि तावत् तिष्ठन्ति यावत् सूर्य उदयपर्वतं न प्राप्नोति । अत्र व्यङ्ग्यमाह—

**रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-**
**मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।**
**बन्दीवैष यशांसि गायति मरुद्यस्यैक बाणाहति-**
**श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥१०९॥**

**अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां न त्वदिति न मदिति अपि तु अस्मदित्यस्य सर्वाक्षेपिणः भाग्यविपर्यया-दित्यन्यथासंपत्तिमुखेन न त्वभावमुखेनाभिधानस्य ।**

---

**अत्रेति । चेति** निपातः वीररसनिष्ठं तुल्ययोगिताज(ल)ङ्कारं ध्वनन् वीररसप्रकर्षं व्यनक्तीत्यर्थः । यद्यपि चः पदमेव, न पदैकदेशः, तथापि पदैकदेशस्यैव चमत्कारस्य स्वातन्त्र्येण प्रयोगाभावात् पदैकदेशत्वोपचारः ।

अथ सर्वनामवचनप्रातिपदिकवचनानां व्यञ्जकत्वमुदाहरति--**रामोऽसाविति**। इदं पद्यं [185]**राघवानन्द**काव्येऽस्ति । रावणमुद्दिश्य कुम्भकर्णस्य वचनम् । यथा—असौ रामो भुवनेषु विक्रमगुणैः सन्धिविग्रहादिभिः परां प्रसिद्धिं प्राप्तः । अस्माकं भाग्यानां नाशात् यदि देवस्तं रामं न जानाति एव । वायुः बन्दीव सन् यस्य रामस्य एकबाणादन्या(णहत्या) कृतानि श्रेणीभूतं(त)विशालतालानां विवराणि, तेभ्यः उद्गीर्णैः सप्तभिः स्वरैः यशांसि गायति । अत्र व्यङ्ग्यमाह—**अत्रेति** । असाविति सर्वनाम एकवचनं चाऽसावेव रामोऽस्तीति व्यनक्ति । अयमर्थः । सर्वादिगणोक्तं तत् सर्वनामवचनानामेकचित्र्यादिरूपाणां व्यञ्जकत्वमिति योगः । तेना(न) सुप्रसिद्धो, अद्वितीयः, भुवनेषु । नन्वेकस्मिन् भुवने गुणैरनन्तैर्न त्वेकेनेति व्यज्यते । न त्वदिति तदिति । त्वदित्युक्ते वक्तुरेव भाग्यव्यत्ययो व्यज्यते । अस्मच्छब्दे तु बहुवचनम् । तयोक्ते(तेनोक्तेन) तव मम च कुलस्येति सर्वेषामाक्षेपे । अन्यथेति भाग्यानामभावादिति नोक्तं किन्तु विपर्ययादित्युक्तम् । यान्येव भाग्यान्यस्माकं प्रभुत्वसाधकान्यभू(भु)वन् तान्येवाऽन्यथा सम्पन्नानीति क्षयहेतुत्वात् व्यग्ररूपाणि जातानि । पुण्याभावे प्रभुत्वमेव न स्यात् । प्रत्युत क्षयः स्यात् । पुण्यान्येवापुण्यतया परिणतानि । अस्मत्कुलं क्षयं नेति[इति]भावः । अत्र सर्वत्र रामविषयो भावः पदैकदेशद्योत्या(त्यः) ।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥११०॥

अत्र इमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य तरुणत्वे इति धनुषः समीपे इति मौलौ वसतीति त्वादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित् स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति।

एवमन्येषामपि बोद्धव्यम् । वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते । अपिशब्दात् प्रबन्धेषु नाटकादिषु ।

एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः ।

(सू० ६२) भेदास्तदेकपञ्चाशत्

व्याख्याताः ॥

---

अद्वे(थे)मनिजव्ययीभावानां कर्मभूताधाराणां व्यञ्जकत्वमुदाहरति—**तरुणिमनि(नी)**ति । इयं चकितमृगचलनयना स्त्री सर्वस्त्रीणां मौलिमधिवसति इत्यन्वयः । अधियोगे सप्तम्यर्थे द्वितीया । कस्मिन् सति, तरुणिमनि तारुण्ये कलां कलयति सति । भ्रुवोरग्रे अनुमदनधनुर्मदनधनुष उपाध्यायभूतस्य समीपे पठति सति । अत्र व्यङ्ग्यमाह—**अत्रे**ति । इमनिजव्ययीभावकर्मभूताधारैः स एव विशेषो व्यङ्ग्य इति शेषः । **कश्चिद् विशेष** इति । कश्चित् श्रुतिकट्वादिहीनो माधुर्यावियुक्तौ(क्तो) वचनागोचरः स्वसंवेद्यो विशेषः, इमनिजादीनां स्वरूपेण विभावादिद्वारतया पारम्पर्येण व्यज्यत इत्यर्थः । उक्तप्रकारेणान्येषामपि पदे(दै)कदि(दे)शादीनां व्यञ्जकत्वमुदाहार्यमित्याह-**एवमित्यादि** ।

पदे(दै)कदेशादीनां व्यञ्जकत्वोदाहरणानन्तरं वर्णानां रचनानां च व्यञ्जकत्वमुदाहर्तव्यमित्याशङ्क्य गुणस्वरूपनिरूपणे प्रस्तावादुदाहरिष्यत इत्याह-**वर्णेष्वपी**ति । सूत्रगताऽपिशब्दार्थमाह--**अपि शब्दादि**ति । नाटकादिप्रबन्धेषु व्यञ्जकेषु सत्सु रसादयो व्यङ्ग्य(ङ्ग्या) इत्यर्थः । उपसंहरति । **एवमिति** । पूर्वगणितभेदो(दौ) पदवाक्यप्रकाश्यौ । ताभ्यां पदे(दै)कदेशद्योत्यः, रचनाद्योत्यः, वर्णद्योत्यः, प्रबन्धद्योत्यः, पदद्योत्यो, वाक्यद्योत्यश्चेति षड्भेदा इत्यर्थः । मिलिता

**(सू० ६३) तेषां चान्योन्ययोजने ॥४३॥**
**संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ।**

---

कियन्तो भवन्तीत्याह--**भेदास्तदेकपञ्चाशद्** । व्याख्याता इति । अयमर्थः । वाक्येऽर्थान्तरसङ्क्रमितवाच्यादयोऽष्टादश १८, पदे च सप्तदश १७, प्रबन्धे चार्थशक्तिमूला द्वादश १२, रसादीनां च पदैकदेशरचनावर्णप्रकाश्यत्वेन चत्वार इति सर्वसङ्कलने एकपञ्चाशत् ५१ ध्वनिभेदा इत्यर्थः । वाक्यं पूरयति **व्याख्याता** इति ।

अथ ध्वनेर्मिश्रभेदानाह—**तेषा**मिति । तेषामेकपञ्चाशत् सङ्ख्या(ङ्ख्य)कानां शुद्धानां ५१ स्वप्रभेदैरेकपञ्चाशद्भेदैरेकपञ्चाशता गुणने एकाधिकषड्विंशतिशतानि भेदा भवन्ति । तत्र योजनप्रकारोऽयम् । अर्थान्तरसङ्क्रमितवाचो(च्ये)नोत्तरभेदानां योजनेऽर्थान्तरसङ्क्रमितवाच्यस्यार्थान्तरसङ्क्रमितवाच्येनात्यन्ततिरस्कृतवाच्यस्य एवमर्थान्तरसङ्क्रमितवाच्येनेतरभेदानां योजनेऽर्थान्तरसङ्क्रमितवाच्यस्यैकपञ्चाशद् भेदा, एवमवशिष्टानामप्येकं(क)पञ्चाशद् भेदा भवन्ति ।

अथ सर्वे पूर्वोक्ता विविच्यन्ते । अथ सर्वे विवक्षिते वाच्यो य इत्यारभ्य कियन्तो भेदा जाता इत्यत आह—**भेदा** इति । पूर्व(र्वं)ध्वनेः शुद्धा एकपञ्चाशद् भेदाः ५१ । लि(ले)खनप्रकारो यथा अविविक्षितवाच्यो द्विविधोऽर्थान्तरे सङ्क्रमितोऽत्यन्तं वा तिरस्कृतः २ विवक्षितवाच्योऽपि द्विविधः, एको[ऽ]लक्ष्यक्रमः अन्यो लक्ष्यक्रमः । एवं ४ भेदा(दाः) { एवं } ।अथ लक्ष्यक्रमभेदा यथा शब्दशक्त्या(क्त्यु)द्भवोऽर्थशक्त्युद्भवः २ उभयशक्त्युद्भवश्चेति त्रिविधः । अथ शब्दशक्त्युद्भवभेदा यथा पूर्वं शब्दशक्त्युद्भवे द्विधा वस्तुना १ अलङ्कारेण २ चेति द्वैविध्यम् । अर्थशक्त्युद्भवस्त्रिविधः स्वतःसम्भवी १ कविप्रौढोक्तिसिद्धः २ कविनिबद्ध[वक्तृ]प्रौढोक्तिसिद्धः ३ । एते त्रयोऽपि प्रत्येकं वस्त्वलङ्काराभ्यां षड् भेदाः । एते षडपि भेदा वस्त्वलङ्काराभ्यां समुदिताभ्यां जाता द्वादश १२ । पूर्वोक्तत्रिभिर्युक्ता जाता पञ्चदश १५ इति । लक्ष्यक्रमध्वनेर्भेदा १५ जाता(ताः) । अलक्ष्यक्रमस्य एक एव भेदो रसात्मकपदं षोडश १६ । अथ अविवक्षितवाच्यस्य द्वौ भेदौ अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतमित्येवं द्वयं २ ।

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वप्रभेदैरेकपञ्चाशता संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन संकरेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने ।

(सू० ६४) वेदखाब्दिवियच्चन्द्राः (१०४०४)

शुद्धभेदैः सह

(सू० ६५) शरेषुयुगखेन्दवः (१०४५५) ॥४४॥

---

एवं १८ भेदा वाक्यप्रकाश्या अष्टा[दश] १८, पदप्रकाश्याः १७, पदप्रकाश्य उभयशक्त्युद्भवो नास्ति । पदे शब्दार्थोभयशक्त्युद्भवो नास्ति । यथा एकस्यैव पदस्य पर(रि)वृत्तिरपरा(रि)वृतिश्च [न] भवतीति । एवं ३५ भेदा ध्वनेः सम्पन्नाः ।

अथ पदैकदेशेत्यादि । पदैकदेश १ रचना २ वर्ण ३ प्रबन्ध ४ मिलिता जाता ३९ । अलक्ष्यक्रमस्य रस १ रसाभास २ भावाभास ३ रूप(?) मिलिता(ताः) ।

अथ प्रबन्धस्य द्वादशभेदा(दाः)। अर्थशक्त्युद्भवा द्वादश । एवमेकपञ्चाशद्भेदा ध्वनेः। अथाऽन्योन्ययोजने पूर्वोक्ताः परस्परं गुणने एकपञ्चाशदेकपञ्चाशद्भिर्गुणने जाताः पूर्व(र्ण)चन्द्रवियत्रसनेत्रभेदा २६०१ भवन्ति । अयं परस्परसंयोजनप्रकारो दर्शितः । एते २६०१ भेदा सङ्करेण त्रिरूपेण ३ [सं]सृष्ट्या ४ चैकरुपयेति च चतुर्भिर्गुणने । तथा च षड्विंशतिशतानां चतुर्भिर्गुणने वेदखाब्धिवियच्चन्द्राः १०४०४ भवन्ति । अथ शुद्धभेदे ५१ सह मीलितास्तदा जाता १०४५५ उत्तमकाव्यस्य एतावन्तो भेदाः सम्पन्ना इति ।

अथ श(स)ङ्कर [सं]सृष्टिव्याख्यानद्वारेण चतुर्गुणनं स्पष्टं मूलकारो व्याचष्टे। **सङ्करेति** । सूत्रं व्याचष्टे । **न केवलमिति** । त्रिरूपेणेत्येतद् व्याचष्टे। **संशयेति** । को मुख्यः कौ(को) वा गो(गौ)ण इति संशयः। अनुग्राह्यानुग्राहकता च । अङ्गाङ्गिभावः, अङ्गीप्रधानं अङ्गं गौणो(णः) । व्यञ्जकः शब्दः । तत एकव्यञ्जकानुप्रवेशः। एकेनैव पदादिना युगपद्द्वयप्रतिपत्तिः । एकरूपयेत्येतद् व्याकरोति ।

तत्र दिङ्मात्रमुदाह्रियते ।

खणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिआ ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥१११॥

[क्षण प्राघुणिका देवर जायया सुभग किमपि ते भणिता ।
रोदिति गृहपश्चाद्भागवलभीगृहेऽनुनीयतां वराकी ॥

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः किमनुरणनन्यायेनोपभोगे एव व्यङ्ग्ये व्यञ्जकः इति संदेहः ।

---

**परस्परे**ति । सङ्करस्त्रिरूपः । संसृष्टिरेकरूपा । एवमेकाधिकषड्विंशतिशतानामुक्तरूपचतुर्भिर्गुणने परस्परयोजनेऽपि अन्ये भेदा भवन्तीत्यर्थः । **टीकान्तरे**[186]योजना, यथा—शुद्धभेदा एकपञ्चाशत् ५१, अथ [सं]कीर्णभेदानाह **संकरेणे**त्यादि । स्वभेदैरेकपञ्चाशता सह तेषां सङ्करेण त्रिप्रकारेण संसृष्ट्या चैकरूपया चेत्यन्वयः । साधकबाधकप्रमाणाभावेन संशयास्पन्दता १ एकव्यञ्जकव्यङ्ग्यत्वेनैकव्यञ्जकानुप्रवेशः २ उपकार्योपकारकत्वमनुग्राह्यानुग्राहकता परस्परसापेक्षत्वं सङ्करः ३ । साधकप्रमाणैर्निश्चितानां पृथक्व्यञ्जकानुप्रविष्टानां स्वातन्त्र्येण विश्रान्तानामैकपद्याभिनिवेशः संसृष्टिस्तत्र नान्योन्यापेक्षणमित्याह—**निरपेक्षये**ति । अयं चतुर्णामर्थो यथा एकः संशयास्पदत्वं १ अनुग्राह्याऽनुग्राहकत्वं, एकव्यञ्जकानुप्रदे(वे)शः ३, परस्परनिरपेक्षरूपा संसृष्टिः ४ । प्रथमः व(ख)णपाहुणिया इत्यत्र व्यक्ति करिष्यते । शेषत्रयां(यं) ३ स्निग्धपानलिते(श्यामलकान्तिलिप्ते)त्यत्र काव्ये । रामोऽस्मीत्यत्र । सङ्कराद्युदाहर्तुमाह—**तं(त)त्रे**ति । संशयास्पदत्वेन ध्वनिद्वयसङ्कीर्णस्योदाहरणमाह—**खणे**ति[187]। सुहया सुभग, देअर देवर, जायाए { जायाए } जायया, किंपि किमपि तेन च भणिया भणिता सती । छणपाहुणिया क्षणे उत्सवे प्राघुणिका निमन्त्र्याहृता रोदती(दिति) । पडाहरवतेभी गृहपश्चाद्भागवलभीगृहे । वराई वराकी । अणुणिज्जओ अमु(नु)नीयताम् । क्षण प्राघुणिका उत्सवा तिथिः । पडोहरो पश्चाद् गृहभागः । संशयमभिनीय दर्शयति—अनुनीयतामुपयुज्यताम् । सान्त्वा-

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥११२॥

(न्त्व)[नेन] रोदनानि(न्नि)वर्त्यतां चेति । साधकबाधकप्रमाणविरहेण तात्पर्य-सन्देहा(हे) कं(सं)देहः । एकस्योपभोगस्योद्देशत्वेन । सन्देहस्य न दोषताम् । रोदननिवर्तनेऽप्युपभोग एव तात्पर्यम् । किन्तु बाधकविरहान्न लक्षणेत्याह—**उपभोग एव** । व्यङ्ग्य इति । वस्तुनाऽनुनयलक्षणेन वस्तूपभोगलक्षणं व्यज्यते ।

अत्र पूर्वं अर्थान्तरे सङ्क्रमितः(त)रूपमेकं लक्ष्यक्रमस्य । अथ वस्तुना वस्तुव्यञ्जनरूपलक्ष्यक्रमस्य च सङ्करस्ततेः (तः)[सं] शयोऽप्येतयोः । तथा चाऽयमर्थः । दे देवर स्वभार्यावचनेन रोदनात् अनुनयकरणे सिद्धेऽपि अनुनीयतामित्येतत् मुख्यार्थस्य बाधे सति, स्वविषयीभूतार्थविषये सम्बन्धे सति, उपभोगलक्षणमर्थान्तरं सङ्क्रमितवाच्यविवक्षितान्यपरवाच्ययोरन्यतरनिर्णायकाभावात् सन्देहास्पदत्वेन सङ्कर इत्यर्थः इति सन्देहरूपः सङ्कर उदाहृतः ।

अथ संसृष्टि(ष्टिं) अनुग्राह्यानुग्राहकसङ्करं एकव्यञ्जकानुप्रविष्टसङ्करं चैकस्मिन्नेव श्लोके दर्शयति **स्निग्धेत्यादि** । स्निग्धा निबिडजलसम्बन्धात् श्लक्ष्णा श्यामला या कान्तिस्तया लिप्तं छुरितं, वियन्नभो यैस्ते । हर्षवशा थे(वे)ल्लन्त्यो बलाका येषु । वेल्लनं सविलासखेलनम् । एवंविधा ये मेघा, अनेन नभसो दुर्दर्शनत्वमुक्तम् । प्रतिदिशं वायवः शीकरेण सूक्ष्मजलोद्गारिणो वाताः । तर्हि गुहासु प्रविश्य क्वचिदास्यतामित्यत आह—**पयोदसुहृद** इति । शीतला, अनेन दिक्षु गमनं निवारितम् । मयूराणां हर्षेण केकारूणः(पाः) कला वर्तन्ते । अनेन पयोदवृत्तान्तस्मरणात् गुहादौ निलीयावस्थानं निवारितम् । एवमुद्दीपनविभावोद्बोधितविप्रलम्भे रामे, रतेरुभयनिष्ठत्वाद् विभावानां साधारण्यं मन्यमानोऽत एव प्रियां मनसि निधाय स्ववृत्तान्तमाह—**काममित्यादि** । उद्दीपका मेघादयः। कामं **प्रभूतम्** । दृढबत्वत् । अर्थान्तरसङ्क्रमितवाच्यलक्षणया रामो दुःखसहिष्णु । न तु दर्शनश्रवणविरोधनादयोऽतिवाह्यन्तामित्याह—**सर्वमित्यादि** । **नैते** मम

अत्र लिप्तेति पयोदसुहृदामिति च अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः । ताभ्यां सह रामोऽस्मीत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः संकरः । एवमन्यदप्युदाहार्यम् ।

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम
चतुर्थ उल्लासः ॥४॥

---

द्वेष्याः । तत्र हेतुमाह—**कठोरे**त्यादि । कठिनहृदयस्य किमपि न दुःख[म]सहमित्यर्थः । **वैदेही**ति । विदेहराजपुत्री स्त्रीत्वेन राज्ञाऽ(जा)पत्यत्वेन च सुकुमारतया दुःखाक्षमत्वे (दुःखाक्षमा) भविष्यति । तस्या जीवनं न सम्भाव्यत इत्यर्थः । खेदातिशये **हह हे**ति त्रयो निपाताः । स्मृतिसंकल्पोपनीतं(तां) सम्बोध्याह—**देवी**ति । मनुष्येषु तद्रूपस्यादृष्टत्वाद् देवित्वेन सम्बोधनम् ।[188] { अवन्न } देवत्वेन धैर्यमुचितम् । अत्र संसृष्टिमाह—**अत्रे**ति । लिप्तेत्येतत् पदं कान्तेः कुङ्कुमादिवल्लेपनसाधनत्वासम्भवाद् बाधितमुख्यार्थं सत् निबिडत्वसम्बन्धात् सम्पर्कातिशयं लक्षयन् विर[हि]णामतिदुःखकारित्वं व्यनक्ति । लिप्तसुहृच्छब्दावत्यन्ततिरस्कृतवाच्यौ । अतो वाच्यस्य बाधितत्वेनात्यन्ततिरस्कृतवाच्यध्वन्योः(नेः) प्राधान्यात् परस्परनिरपेक्षत्वेन तिलतन्दुलवत् संसृष्टिरित्यर्थः । अनुग्राह्यानुग्राहकभावेन सङ्करं दर्शयति—**ताभ्यामि**ति । राम इति पदं रामेणैव प्रयुक्तत्वेन प्रतिपन्नत्वादनुपयुक्तमुख्यार्थं सत् सामान्यविशेषभावसम्बन्धात् सकलदुःखभाजनत्वं लक्षयत् सीताभावेऽप्यहं जीवितुं शक्त इत्यर्थान्तरं व्यनक्ति । अतो[ऽ]यमर्थान्तरसङ्क्रमितवाच्यो ध्वनिस्ताभ्यामुक्ताभ्यामत्यन्ततिरस्कृतवाच्याभ्यां लेपनसुहृद्भावरूपाभ्यामुद्दीपनत्वेनानुग्राहकाभ्यां न(अ)नुगृह्यते । अस्यानुग्राह्यानुग्राहकाभ्यां ताभ्यां सहानुग्राह्यानुग्राहकत्वेन संकर इत्यर्थः ।

एक व्यञ्जकानुप्रवेशेन संकरं दर्शयति—**रामे**त्यादि । रामोऽस्मीत्यनेन द्योतितस्यार्थान्तरसंक्रमितवाच्यध्वने रामो[ऽ]स्मीति द्योत(त्य)स्यालंबनोद्दीपनविभावस्य दैन्याद्यनुभावस्यावेगादि व्यभिचारिणो विप्रलंभरसध्वनेश्चैकमेव रामपदं व्यञ्जकम् । अत एव व्यञ्जकानुप्रवेशेन तयोः क्षीरनीरवत् संकर

इत्यर्थः । अत्यंततिरस्कृतवाच्याभ्यां सह तयोः संसृष्टिरस्ति । रामो[ऽ]स्मि सर्वं सहे इत्यत्रार्थान्तरे संक्रमितो रामशब्दो दुःखसहिष्णुत्वलक्षणे, यतो रामत्वेन रूपेण सर्वे(र्वं)सहत्वमनुपपन्नं इति कृत्वा दुःखसहत्वलक्षणै(णे)ऽर्थान्तरे रामशब्दः, रामस्य दुःखसहि[ष्णु]त्वलक्षणेऽर्थान्तरसंक्रमण मनुग्राह्यम् । अत्यन्ततिरस्कृतवाच्ययोः स्निग्धेत्यादिरूपयो(पदयो ?)र्यद् व्यङ्ग्यं तदनुग्राहकं भवति; यतोऽनयोर्व्यं(र्व्यं)ग्यातिशयोर्व्यंग्यः(?)तस्य चोद्दीपकत्वात् रामपदेन विरहदुःखसहि[ष्णु]त्व लक्षणेऽर्थान्तरसंक्रमणमनुग्राह्यम् । रामपदव्यङ्ग्यो विप्रलंभो रसस्तस्य च व्यंजकं रामपदम् । इदमेकं(क)पदव्यञ्जकानुप्रवेशः । एवमन्येऽपि भेदा उदाहर्तव्या इत्याह—**एवमिति** ।

**इति श्रीकाव्यप्रकाशटीकायां सारदीपिकायां**
**वाचनाचार्यगुणरत्नगणिकृतायां चतुर्थोल्लासः**
**उत्तमकाव्यविषयकः संपूर्णः ॥४॥**

## ॥ अथ पञ्चमः उल्लासः ॥

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह ।

(सू० ६६) अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥४५॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।

कामिनीकुचकलशवत् गूढं चमत्करोति अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ।

---

सभेदमुत्तमं काव्यं चतुर्थोल्लासे दर्शितम् । साम्प्रतं मध्यमकाव्यस्य च पञ्चमस्य [च] निरूपणावसर इति चतुर्थपञ्चमोल्लाससङ्गतिं कथयन्नुत्तरसूत्रमवतारयति, **एवमिति** । तथा चोपसर्जनीकृतशब्दार्थं व्यङ्ग्यं ललनालावण्यप्रख्यं भवति । तत्र व्यङ्ग्यप्राधान्ये उत्तमकाव्यं ध्वनिर्भवति । यत्र च व्यङ्ग्य(ङ्ग्यं) वाच्याङ्गभूतं भवति, तत्काव्यं मध्यमं, पूर्वमतादृशि गुणीभूतेत्यादिना सामान्यप्रकारेण लक्षितं प्रागस्ति । तस्य विशेषान् भेदान् , रसवदाद्यलङ्कारविषयविभागं च पञ्चमोल्लासे निरूपयति—**अगूढमिति**। एवमष्टप्रकारं यद्व्यङ्ग्यं तद्गुणीभूतव्यङ्ग्यमुच्यत इत्यर्थः । तत्र प्रथम[म]गूढमस { हृ } हृदयैरपि झटिति संवेद्य(द्यं) १अपरस्याङ्गं, अपरस्य वाच्यस(स्य) व्यङ्ग्यस्य चार्थस्याङ्गमुत्कर्षकम्[1] २ वाच्यस्य वाक्यार्थस्य कुतोऽपि वैगुण्याद्विश्रान्तस्य सिद्धिवि(र्वि)श्रान्तिरङ्गं निदानम् , ३ अस्फुटं सहृदयैरपि झटिति [अ] संवेद्यम् ४, संदिग्धं प्राधान्यं ५ तुल्यप्राधान्यं ६ अनयोरर्थो यथा—संदिग्धं तुल्यं वा प्राधान्यं चमत्कारिता यस्येति, क्रमेण संदिग्धवाचां(चा)कृतं व्यङ्ग्यकृतं चेति न निश्चितम् । तुल्यं प्राधान्यं तु चमत्कारे वाच्यव्यङ्ग्ययोर्द्वयोरप्यङ्गत्वेन तुल्यत इत्यर्थः । काकुर्ध्वनेवि(र्वि)कारः।तेनाक्षिप्तं, झटिति प्रकाशितम् ७। असुन्दर(रं) चमत्कारिवाच्यमुखनिरीक्षकम् । एवमगूढत्वादिभिरन्योन्यविलक्षणैर्धर्मैर्गुणीभूतस्य काव्यभेदाः प्रकाराः । न नु(तु)वैजात्यानि, एकस्यैव काव्यस्याव्यवच्छेदकभेदेनैव ध्वनित्वाद्गुणीभूतव्यङ्ग्यत्वाच्च । **अष्टाविति** । न्यूनाधिकसंख्याव्यवच्छेदाय । अथ यथोद्देशं निर्देश इति न्यायादष्टावपि यथाक्रमं व्याचष्टे । अगूढस्य वाच्यत्वाभावात्

अगूढं यथा

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न संप्रति भवामि किमावहामि ॥११३॥

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य ।

---

न मुख्यत्वं, गुणत्वमेव । न गुणत्वमित्याशङ्कां निवारयितुं गूढरसस्य मुख्यत्वं सदृष्टान्तमाह–**कामिनी**ति । यथाऽगूढं व्यङ्ग्यं वाच्यवन्न चमत्करोति । यथा वाच्यार्थो न चमत्करोति तथाऽगूढव्यङ्ग्यमपि न चमत्करोति इत्यर्थः । **कामिनी**त्यादि । कुचकलशो विदग्धेष्वेव यथा प्रकाश्यते तद्वत् । तदुक्तम्–

नान्ध्रीपयोधर इवातितरां[अ]गूढो(प्रकाशो) ?
{ वो } नो गौर्जरिस्तन इवातितरां प्रकाशः (निगूढः) ।
[अर्थो] गिरामपिहितः पिहितश्च कश्चित्
सौभाग्यमेति मरहट्टवधूकुचाभ (भः) ॥

इति । अपिहितो विदग्धेषु । पिहितस्तन....(विदग्धेष्वपिहितस्तदन्यत्र )।

**अगूढं यथे**ति । यद्यपि वाच्यत्वं नास्ति, तथापि अगूढं स्फुटतया वाच्यसदृशमिति गुणीभूतस(म)प्रधानव्यङ्ग्यमेवेत्यर्थः । व्यङ्ग्यं वस्त्व[4] [लंकाररस] स्वरूपतया त्रिविधम् । तत्र वस्तुमात्रव्यङ्ग्यस्यार्थान्तरसंक्रमितवाच्येभ्यः शब्देभ्यो वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यत्वेन तदुदाहरति **अगूढं यथे**ति, **यस्या सुहृ**दिति । यदार्जुनो विराटे स्थितस्तद्देशे शरणागतपारदेशिकानां तप्तसूच्या कर्णवेधः क्रियते, तदस्मिन् कृते, कश्चित् स्वदेशीयो जनस्तत्रागतस्तदवै(दैवा ?)र्जुनस्य वाक्यं, यथास्माकं(क)मसुहृत्तिरस्कृतिरीदृशी जाता तथा तप्तसूची(चीं) कृत्वा कर्णवेधो जातः । कथभूतोऽहं–काञ्चीगुणग्रथनभाजनम् । तस्य राज्ञः स्त्रीणां काञ्चीगुणग्रथनं यतः करोमि सोऽहं, व्यतिकरेण युनक्ति एष सोऽहं काञ्चीगुणप्र(ग्र)थम(न)भाजनं, स्वरूपोऽस्मि । अतः सम्प्रति जीवन्न भवामि, किमाह { जो } वामि, किं करोमि । अस्ती(स्मी ?)-त्यव्ययं, अहं शब्दपर्यायो वा एकस्मिन् श्लोके प्रकृतोपयुक्तमंशमाह–**अत्रे**ति ।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बिबिम्बम् ॥११४॥

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य ।

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥११५॥

---

जीवनाभावः पराक्रमाभावे सङ्क्रमितः । जीवन्न भवामीत्यनेन स्वार्थस्यानुप्र(प)युक्तत्वात् जीवत्कार्याकरणं लक्ष्यते। लक्षितोऽर्थान्तरे सङ्क्रमितवाच्यः शब्दस्तस्य व्यङ्ग्यं विक्रमराहित्यम् । अतिस्फुटत्वेनाप्रधानम् । वाच्यस्यैव चमत्कारकारित्वात् । झगिति पराक्रमरहितत्वं प्रतीयत इति अगूढव्यङ्ग्यत्वमित्यर्थः। अथवा जीवन्नभवामीत्यनेन कष्टजीवनत्वं लक्ष्यते। मरणमेव श्रेय इति व्यङ्ग्यम् । अथात्यन्ततिरस्कृतवाच्यस्यागूढव्यङ्ग्यत्वमुदाहरति—उन्निद्रेति । भृङ्गाः विकसितरक्तोत्पलरागपिङ्गलीकृताङ्गाः सन्तो गृहदीर्घिकासु मञ्जु यथा स्यात्तथा गायन्ति । नूतनबन्धूककुसुमदलाभं उदयाचलचुम्बि चकास्ति । अत्र चुम्बनस्य वक्त्रसंयोगत्वेन चेतनधर्मत्वात् रविबिम्बेऽचेतने न सम्भवतीति सम्बन्धो लक्ष्यते। प्रातः कालो व्यङ्ग्यः । स तु स्फुट एव। चुम्बितपदमत्यन्ततिरस्कृतवाच्यं, तस्य व्यङ्ग्यमुदयकालः । शोभावहत्वं वा वस्तु स्फुटमिव प्रतीयत इति अगूढव्यङ्ग्यत्वमित्यर्थः ।

शब्दपरिवृत्तिं सहते इति कृत्वा अर्थशक्तिमूलानुरणनरूपस्यागूढव्यङ्ग्यत्वमुदाहरति, अवा(त्रा)सीदिति । अयोध्यागमनावसरे पुष्पकविमानविहारे प्रतिप्रयाण(णे) श्रीरामः श्रीसीतां प्रत्याह—हे मृगाक्षि सीते! अत्राऽस्मिन् प्रदेशे फणिन एव पाशास्तैः कृतं बन्धनं, तस्य विधिः, अस्माकमासीदत्रभवत्याः

अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य। 'तस्याप्यत्र' इति युक्तः पाठः।

देवरे लक्ष्मणे, शक्त्या अस्त्रविशेषेण, वक्षसि गाढं ताडिते सति, हनुमता द्रोणाद्रिः { स } संजी[वनी]विशिष्टोप्रा(ऽत्रा)नीतः । अत्र दिव्यैर्लक्ष्मणशरैरिन्द्रजिल्लोकान्तरं प्रापितः। अत्र केनापि राक्षसपतेः रावणस्य कंवा(ठा)टवी कृत्ता छिन्ना। अत्र प्रकृतोपयुक्तमंशमाह—अत्रेति। केनापीत्युक्ते मयेति व्यङ्ग्यं झटित्येव प्रतीयत इत्यगूढव्यङ्ग्यत्वमित्यर्थः । प्रसिद्धिवशादगूढव्यङ्ग्यता ज्ञेया। अत्र विशेषव्याख्यानं यथा-बन्धनविधिरिति, विधेर्ह(र्दु)रतिक्रमेण स्वां(स्वा)वमा { न } न(ना)च्छादनं, भवद्देवर इति सम्बन्धोद्भावनेन वात्सस्या(ल्या)पादानतया पराभवज्ञाननि(ति)रोधानं, द्रोणाद्रिपर्वताव(ह)रणप्रभृत्युत्कर्षप्रकटनं, इन्द्रजितोऽपि जयेन लक्ष्मणे वीरप्रकर्षः, दिवमर्हतीति दिव्यास्तैः लोकान्तरमिन्द्रलोकं यस्तेन जितस्तस्येव सविधं प्रापितः, अनौहन्नपि बलादिव प्रस्थापितः, क्षिप्तस्यैकस्य बहूनामारम्भकत्वात् शरैरिति बहु वचनं, लक्ष्मणस्य शरैः शक्त्या विहत्य प्रत्यावर्तनात् सदातनसान्निध्यप्रकाशनं, अत एव लक्ष्मणेनेति नोक्तम्। अहङ्कारप्रकटनप्रसङ्गभयाद्वीरो वार्तेन(तेन ?) मयेत्यपहाय केनापीत्युक्तम्। अपिरवहेलायाम्। छिन्नप्रकटनच्छेदनेनाटवीत्वरूपाणाम् । दिदृक्षितानां स्थानानां सीतायाः ।[4A] { नवमवगूढश्च } केनापीति पदान्तरोपादानेऽपि संप्रतीयन्त इत्याथा(र्थ)शक्तिमूलता। प्रतीतावगूढत्वं प्रतिपादयति तस्येत्यादि। अयमाशयः—अपिना चेत्यनेन लक्ष्मणशरसमुच्चयरूपसाहित्यतात्पर्यग्राहकाभ्यां तत्तात्पर्यग्रहः, रामकर्तृकस्य प्रसिद्ध्या च तद्बाधः, ततो मयेत्यध्याहारादस्मदर्थ(र्थः)प्रतीतो,, गूढताविरोधितात्पर्यग्रहान्तरायिणः प्रतीतिविलम्बात्। तेन केनेति पदप्रयोज्यमेवागूढत्वम्। न च न्यूनपदत्वम्। प्रसिद्धिवशान्मयेत्यध्याहारे विलम्बाभावात् विरोधितात्पर्यग्रहायेव विलम्बनात्, यत्र यदाऽनुसन्धाने विलम्बस्तत्रैवावसरः यथा तथा तत्पादौ तत्र वल्कलधरैरित्यत्रास्माभिरिति विशेष्यपदस्य झटित्युपस्थापकाभावात्।

ननु कथं शब्दशक्तिमूलवस्त्वलङ्कृत्यो नो(र्नो)दाहृतमिति चेन्मैवम्। प्र-

**अपरस्य रसादेर्वाच्यस्य वा (वाक्यार्थीभूतस्य) अङ्गं रसादि अनुरणनरूपं वा ।**

**यथा**

**अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।**
**नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥११६॥**

**अत्र शृङ्गारः करुणस्य ।**

---

कृतवाक्यार्थप्रतीतिव्यवधानेन प्रतीत(य)मानस्य व्यङ्ग्यस्य द्वितीयार्थस्यालङ्कारस्य वा झटित्यसंवेद्यत्वेन गूढत्वात् । एवं विभावादिव्यङ्ग्येष्वपि लक्ष्यत्रयेषु(अलक्ष्यक्रमेषु) न तत्प्रसङ्गः । विभावाद्यनुसन्धानस्य व्यवधायकत्वात् । अत एवा(व) पदव्यङ्ग्येष्वेवोदाहृतं, वाक्यव्यङ्ग्येषु तु वाकचार्थप्रतीत्या व्यवधानेन झटित्यवभासः । एवमन्यत्र स्वयमभ्यूह्यम् ।

एवं सप्रपञ्चमगूढमुदाहृत्यापरस्याङ्गमुदाहर्तुमपरपदार्थमाह—**अपरस्येति** । अपरस्य रसादेरथवा वाच्यस्य, वाकचार्थीभूतस्य वाच्यार्थस्य वा, यदङ्गं भवति व्यङ्ग्यं, गुणीभूत { व्यङ्ग्य } व्यङ्ग्यत्वे च द्वितीयम् २ । रसादेरङ्गिनोऽङ्गभूतं रसमुदाहरति, **अयमिति** । भूरिश्रव(वा) { सा } मृतो वर्तते । तत्पत्नीवाक्यम् । प्रकरणवशात् करुणो रसः प्रधानस्तदङ्गे शृङ्गाररसः । स च गुणीभूतोऽपरस्याङ्गभूतत्वात् । शृङ्गारांशे गुणीभूतता । करुणांशे प्राधान्यम् । अत्राङ्गभूतेन शृङ्गारेण चमत्कारकरणाद्गुणीभूत[त्व]मुच्यते ।

अयं सरस(श)नोत्कर्षी पीनस्तनविमर्दन(नः) ।
नाभ्यूरुजघनस्पर्शी नीविविस्रंसतः(नः)करः ॥

इति युक्तः पाठः । संभोगक्रमलाभात् तथापि शोकार्तोक्तत्वेन व्यत्ययो न दोषाय । अत्र को रसः कस्याङ्गमित्याकाङ्क्षायामाह—**अत्रेति** । युद्धस्थले पतितकरावलोकनानुभूतप्राक्तनवृत्तान्ता स्मर्यमाणसम्भोगानाम् इदानीं विध्वस्ततया शोकस्य विभावनां प्रतिपद्येत इति । कारुण्यस्य वाकचार्थीभूतस्याङ्गिनः पोषकत्वेनोपकारकत्वात् अङ्गभूतो विप्रलम्भः शृङ्गार इत्यर्थः ।

अथ भावस्याङ्गभूतं रसमुदाहरति **कैलाशे(से)ति** । गिरिभुवः पार्वत्याः पाद-

**कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-**
**व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।**
**स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः**
**कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥११७॥**

**अत्र भावस्य रसः ।**

---

नखद्युतिः सा काप्यनिर्वाच्या । वो युष्मान् । त्रायतामित्यन्वयः । कथम्भूता नखद्युतिर्विशेष्यते **कैलाशा(सा)लयेति** । कैलाश(स) आलयो यस्य स शिवः । तस्य ललाटलोचनरू(रु)चारुणकान्त्या, निर्वर्तिता निष्पादिता, अलक्तकस्य व्यक्ति(क्तिः)प्रकाशो, लाक्षाकान्तिर्यस्याः प्रसादनार्थं गौरीपादयोः शिवस्य पतनात् स(सा) पादनखद्युतिर्वो युष्मान् सदा त्रायताम् । **स्पर्द्धाबन्धसमि(मृ)द्धये-श(वे)ति** । दीप्तये { ऽ } वस्थिततया यया पदनखद्युत्या सुदृढरूढा कोकनदस्यानुकारोऽनुकरेण तेन सरसनेत्रयोः कान्तिः सद्यः समुत्सार्यते तिरस्क्रियते । शम्भौ प्रणते सति गौर्याः कोपकृताऽरुणता गतेत्यर्थः । तथा च नेत्राभ्यां रक्तत्वं गतं पादनखेष्वागतम् । अत्र पार्वतीनखद्युतिर्वि(वि)षयको भावो मुख्यः, रसः शृङ्गाररूपो गौणः । यतो भावस्य प्राधान्यं रसस्या(स्यां)गतेति । व्यङ्ग्यो रसः, स तु गुणीभूत इत्यर्थः । ईर्ष्यारूपो विप्रलम्भो रसस्तस्य गुणीभावः । रते(ति)र्देवादिविषयेति भावः । पार्वतीविषयिणी या रतिः सा भाव इत्यर्थः । तस्य प्राधान्यं शृङ्गारस्य गौणता ।

[6]**अत्रेति**, भूविषयिणी रतिः सामाजिकानां कश्चिदानन्दरूपो भावः । यतो नायिकाया एव रतिः शृङ्गारोऽन्या रतिर्भावोऽतो राजविषयस्याङ्गं स इति । अत्र राजविषयकरतिभावानेव (व एव ?) चमत्कारो, भूविषयकरत्याख्यो भावस्तस्याङ्गमिति गौणता । राजविषयस्य भावस्य व्यङ्ग्यस्य व्यञ्जक(कं) { त्वं } तद्विभावादिकमेव; भूविषयस्यापि भावस्य व्यङ्ग्यस्य व्यञ्जक(कं) तद्विभावादिकं(कम्) ।

[7]**अत्र भावस्येति** । पूर्वार्थं(र्धं) शृङ्गाराभासो [ऽ] नौचित्यप्रवृत्ता नायिकाविषयिणी रतिः शृङ्गाराभासोऽपरार्द्ध(र्द्धं) भावाभासः । प्रत्यर्थिभिः सुभटैरेवं स्तुतिः क्रियत इत्यनौचित्येन प्रवृत्तिः । अथ राजा(ज)विषयको भाव उद्बुद्धो भवति सामाजिकानां रसाभासभावाभासौ तस्याङ्गभूतौ, चमत्कारस्तु राजविषय-

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्विभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥११८॥

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥११९॥

[7]अत्र भावस्य रसाभासभावाभासौ प्रथमार्धद्वितीयार्धद्योत्यौ ।

---

कभावेनेत्यर्थः । अत्र भावो व्यङ्ग्यो विभावादिकं तस्य व्यञ्जकं, वक्ष्यमाण-काव्यद्वयस्यायं भावार्थो दर्शितोऽन्वययोजनं यथा भावस्याङ्गभूतं भावमुदाहरति, **अत्युच्चा** इति । कश्चिद्राजानं स्तौति—हे पृथ्वि परितोऽत्युच्चाः गिरयः स्फुरन्ति, स्फाराः विशाला अम्भोधयस्तथा स्फुरन्ति, तानपि बिभ्रत्या(ती) किमपि क्लान्ता श्रान्तानासि(सी)र्न दृश्ये; तुभ्यं नमः, इति आश्चर्येण मुहुर्मुहुर्यावद्भुवः स्तुतिं प्रस्तौमि, हे राजन् { तावदिमां भूतानि बिभ्रत्या किमपि क्लान्ता श्रान्ता नासि(सी)र्न दृश्ये तुभ्यं नमः इति आश्चर्येण मुहुमुहुर्यावद्भुवः स्तुतिं प्रस्तौमि हे राजन् } तावदिमां भूमिं बिभ्रत्त(न्त)व भुजः स्मृतौ(तो), वाचो मुद्रिताः । राजप्रभावख्यापने कवेरतितरां रतिस्तस्याश्च भूविषयरतिरे { वस्थायोभा } -वाङ्गम् । न चात्र शृङ्गारः परस्परावस्थाबन्धात्मिकायाः रतेरभावात् । ततोऽत्र प्रेयस्विवदलङ्कारः । प्रेया(यः) प्रियतराख्याम(नं) विद्यते, यन्निबन्धन इति वचनात् ।

भावस्याङ्गभूतौ रसाभासभावाभासौ दर्शयति **बन्दीकृत्येति** । कश्चिद्राजा-न(नं) स्तौति । हे भूपते ! तव सैनिकैः द्विषां मृगदृशः प्रियाः वदी(बन्दी)कृत्य, ताः पश्यतां प्रेयसां, अनादरे षष्ठी, पश्यतः प्रियाननादृत्येत्यर्थः । ताः श्लिष्यन्ति प्रणयन्ति, परितो लांति परित आददते, चुम्बन्ति । हे औचित्य-

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥१२०॥

अत्र भावस्य भावप्रशमः ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥१२१॥

अत्र त्रासोदयः ।

---

वारांनिधेः(धे) औचित्यसमुद्र त्वं सुकृतैरस्माकं दृशोर्निपतितोऽसि । यतः तस्मादखिलाः विषये(पदो) विध्वस्ता इति तैः प्रत्यर्थिभिस्त्वं ब्रूयसे । अत्र कस्य को वाङ्गमित्याकाङ्क्षायामाह—**अत्रे**ति । शत्रुस्त्रीणां रत्यभावे सैनिकानामनौचित्यप्रवृत्तत्वात् रसाभासः प्रथमार्द्धेन द्योतितः । शत्रूणां चानुचिते दैन्यादा-(दौ) { ति } भावाभासो द्वितीयार्धेन द्योतितः । तौ च वर्णनीयत्वेनाङ्गिनो राजविषयस्य रतिभावस्याङ्गमित्यर्थः । ओजस्वि[व]दलङ्कारः(ऊर्जस्विअलंकार),—

अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात् ।
भावानां च रसानां च बन्ध ओज(ऊर्ज)स्वी कथ्यते॥"

इति वचनात् ।

भावशान्तिमुदाहरति **अविरले**ति । हे राजन् ! तव वैरिणां यो मदो, मधुरविरलैः करवालकम्पनैर्भ्र(भ्रु)कुटीतर्जनैश्च सह दृष्टः, समदः, तव नेत्रेक्षणात् क्वापि गतः । अत्रापि राजविषयकरतिभावस्य मदलक्षणव्यभिचारिभावस्याभावःप्रशमो(ऽ)ङ्गम् । अत्र भावपरिहाररूपं समाहितमलङ्कारः । प्रशमसमाहितयोरेकार्थत्वात् । अयमर्थः,—वैरिविषयक भावोपशमो व्यङ्ग्यो, राजविषयकभावस्याङ्गं, यतोऽङ्गेनैव चमत्कारो; राजविषयको भावः प्रधानः { वैरिविषयकभावस्य मुख्यता } वैरिविषयकभावस्य गौणता इति स्पष्टोऽर्थः ।

अथ भावस्याङ्गं भावोदया(य)मुदाहरेत । **साकि(क)मि**ति । हे राजन् तव वैरिणि, कुरङ्गदृशा स्त्रिया सुहृद्भिरपि साकं, मधुपानलीलां मद्यपानक्रीडां कर्तुं प्रवृत्ते सति, केनापि ते तव नाम सजातीयं गृहीतम् । तत्र वैरिणि विषमा-

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥१२२॥

अत्रावेगधैर्ययोः संधिः ।

पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर ह हहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कंचित् फलकिसलयान्याददानाभिधत्ते ॥१२३॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता ।

---

वस्थां(स्था)हङ्कारदक्प्रेरणापस[रण]मूर्छादिरूपामकरोत्[८] । अथ नृपविषयो भावो व्यङ्ग्यः । शत्रोस्त्रासोदयोऽपि व्यङ्ग्यस्तत्र नृपविषयरूपेण भावेन प्रधानेन शत्रोस्त्रासोदयो भावो गौणौ(णो) विधीयत इति व्यङ्ग्यमन्यस्याङ्गतां गतम् । इत्यप्रधानं व्यङ्ग्यम् । अत्र काव्ये राजविषयकरतिभावस्य शत्रूणां विषमावस्थया, त्रासलक्षणभावोदयो नामालङ्कारः[९] ।

अथ भावस्याङ्गं भावसन्धिमुदाहरति, असौ(सो)ढेत्यादि । स्मरहरः प्रमोदं वो दिश्यात् इत्यन्वयः। कथम्भूतस्त्वराशैथिल्याभ्या(भ्यां) { स्यां } युगपत् कपटच(ब)टुवेषापनयनेऽभियुक्तः प्रेरितः । पार्वतीं दृष्ट्वा अस्यां शीघ्रं गन्तव्यमिति त्वरा, शैथिल्यं तु रक्तारक्तेति निश्चायाभावात्। कथम्भूतस्तपसोऽसोढा । कथम्भूतस्य तपसस्तत्कालो(ले) शैलदुहितुस्तस्मिन् काले, उल्लसन् असहभावो शि(वोऽश)क्तत्वं, पार्वतीदौर्बल्यं, यत्र तत् तस्य तपसः । कर्मणि षष्ठी । असोढा तपो मुञ्च त्वमिति भगवतो[ऽ]प(पे)क्षितमिति असहत्वं तपसः इत्यर्थः । अथ च कथाना(नां)विश्रंभि(भे)षु रसिकः । अस्या विश्रब्धं जल्पितं शृणोमीत्यभिलाषवानित्यर्थः । कपटेन यो ब्रह्मचारिवेषः तस्यापनयने त्वराशैथिलाभ्यां युगपदभियुक्तः प्रेरितः । अत्रावेगा(ग)धैर्ययोः सन्धिर्व्यङ्ग्यो, महादेवविषयको भावो व्यङ्ग्यस्तस्याङ्गमिति व्यङ्ग्यं गुणीभूतं महादेवविषयस्य रतिभावस्यप्राधान्यम् । अत्र भावसन्धिरलङ्कारः ।

**एते च रसवदाद्यलंकाराः । यद्यपि भावोदयभावसंधिभावशबलत्वानि नालंकारतया उक्तानि तथापि कश्चित् ब्रूयादित्येवमुक्तम् ।**

---

अथ भावस्याङ्गभूतां भावशबलतामाह—**पश्येदिति** । वने काचित् कन्यारत्यर्थिनं पान्थं प्रत्याह—**कश्चित् पश्येत्** । हे चपल चल गच्छ का त्वरा, अहं कुमार्यस्मि । हस्तावलम्बं वितरेति, पान्थेनोक्ते सा च वदति, व्युत्क्रमः { व्युत्क्रमो } जायते । असीत्यव्ययं युष्मदर्थे, । क्व यासि । पृथ्वीपरिवृढ भूमी(मि)प्रभो, राजन् ! इत्थं पूर्वोक्तप्रकारेणारण्यवृत्तेर्भवद्द्विषस्तव शत्रोः कन्या, किश(स)लयान् पादं दाता (आददाना) सती, कञ्चिदभिधत्ते, इति राजानं कश्चित् स्तौति । अत्र केषां शबलतां(ता) { गं } । तत्राह, **अत्रेति** । पश्येत् कश्चिदिति शङ्का १ । रे इत्याक्षेपसम्बोधनं चपलेत्यसूया २ । का त्वरेति धृतिः ३ । अहं कुमारीति स्मृतिः ४ । हस्तावलम्बं विरतौत्सुक्यं (वितरेत्यौसुक्यं) ५ । इहेति संभोगस्य प्राथमिकत्वेन श्रमः ६ । हेति दैन्यम् ७ । युक्त मे (व्युत्क्रम) इति विबोधः ८ । क्व यासीत्यौत्सुक्यम् ९ । तेषां शबलता । पूर्वपूर्वोपमर्देन परपरोदयः । एते शङ्कादयो भावाः व्यङ्ग्याः । राजविषय[क]भावोऽपि व्यङ्ग्यः । परं राजविषयकभावस्यैव प्राधान्य(न्या) { त्याय } [त्][चम]त्कारस्तेनैव क्रियत इत्यर्थः । भावाः शङ्कादया गता, इति व्यङ्ग्यं गौणम् । एते रसभावः(व)रसाभासः(स)भावशान्तिभावोदयभावसन्धिभावशबलतानां व्यङ्ग्यरूपाणामप्यप्राधान्यता । अन्यस्य राजविषयादिभावस्याङ्गभूतत्वादिति । अयं सरस(श)नोक(त्क)र्षीत्यादरि(द्या र)भ्य ज्ञेयाः । स्वोक्तं वचनं समर्थयति, **एत इति** । व(स) एवार्थो प्राधान्ये सति ध्वनिना व्याप्तविषयत्वात् रसः शृङ्गारादिः । प्रेयः प्रियतराख्यानं ऊर्जो बलं, तानि विलम्भानि विद्यन्ते येषु निबन्धनेषु, ते रसवदाद्यलङ्कारा उक्ता इत्यर्थः । रसवदलङ्कारस्तु यत्र रसो[ऽ]ङ्गं तत्र रसवदलङ्कारः । यथा[ऽ]यं स रस(श)नोत्कर्षीति १ । यत्र रसाभासोऽङ्गं, तत्र प्रेयस्वी अलङ्कारः २ । यत्र च भावो[ऽ]ङ्ग तत्रोर्जस्वो अलङ्कारः ३ । यत्र च भावाभासो[ऽ]ङ्गं तत्र समाहितोऽलङ्कारः ४ । यत्र च भावोदयो[ऽ]ङ्गं, तत्र ऊर्जस्वी ५ । यत्र च भावशान्तिरङ्गं तत्रापि ऊर्जस्वी ६ । यत्र च भावशबलता, तत्रापि ऊर्जस्वी ७ । एवं

**यद्यपि स नास्ति कश्चिद्विषयः यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह संकरः संसृष्टिर्वा नास्ति तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद्व्यवहारः ॥**

**जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया**
**वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।**

---

चालंकार्यस्याप्यलंकारता[10]। अलङ्कार्यो रसः सर्वत्र यद्यस्ति परं { यत्र } गुणीभूतव्यङ्ग्ये रसोऽलङ्कार एव, गौण एवेत्यर्थः । अथ भावोदय १ भावसन्धि २ भावशबलानि ३ पूर्वमुक्तानि न सन्ति इति यदि कैश्चित्[11](द्) ब्रूयात्तदा तं प्रत्युक्तिस्तथा च, यत्र भावोदयादीनि अङ्गभूतानि तत्राऽप्यूर्जस्विदे(स्वी ए)वालङ्कार इति भावार्थः ।

ननु अयं स रेस(श)नोत्कर्षीत्यादौ करुणस्य प्राधान्यानुभवात् ध्वनिकाव्यमेवेदं, यतो रसस्य प्राधान्यानुभवः [ततः] कथं मध्यमकाव्यमध्य { म } गणनेत्यत आह–**यद्यपीति** । अप्राधान्यात्, रसादिचतुष्टयस्यालङ्कारत्व(त्वं), { वङ्का } [भा]वोदयादीनामप्राधान्यात् अलंकारत्वं दुर्वारम् । भावोदयभावसन्धिभावशबलताश्च पृथगलङ्कारा इत्यलंकारं (रान्) सर्वसूत्रानुरोधेन कश्चित् ब्रूयात् तदप्यङ्गीकार्यमित्येवमुक्ते(क्तमि)ति परिहरति; **तथापीति** । **एव**मित्यलंकारतयेत्यर्थः ।

ननु गुणीभूतव्यङ्ग्यस्य मध्यमकाव्यस्यापि रसभावनार्थपर्यालोचनया अधम(उत्तम)काव्य एव पर्यवसानात्, मध्यमोत्तमकाव्ययोः संकरः संसृष्टिः वा स्यादित्याशंकामनुवदति, **यद्यपीति** । स्वप्रभेदादिभिरित्यादि शब्देना { ऽ } -लंकारो ग्राह्यः । स्वशब्देन मध्यमोत्तमशब्दयोः काव्ययोर्ग्रहणम् । सालंकारैर्ध्वनिः प्रभेदैः सालङ्कारैर्गुणीभूतव्यङ्ग्यैरित्यर्थः । यद्यपि साङ्कर्यादिकमस्ति तथापि न्यायान्निर्णय इति परिहरति, **तथापीति** । प्राधान्यमत्र वर्णनीयतया द्रष्टव्यं; अयं स रशनोत्कर्षीत्यादौ कविना शृङ्गारादेर्वर्ण्यमान(ण)त्वात् प्राधान्यमध्यमकाव्यत्वमस्तीति भावः[12] ।

शब्दशक्तिमूल(ला { न } परस्याङ्गमुदाहरति, जनपदे **जनस्थान** इति ।

कृतालंकाभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ।।

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः ।।

---

इदं याचकवचनं राजादिकं प्रति । मया याचकेन रामत्वं रामचन्द्रत्वं प्राप्तं, तदेव विशेषणैराह । जनानां स्थाने, वा { रामलोकसभायां[13] } सपक्षे दण्डकारण्ये । कनकस्य मृगे मार्गणं, अन्वेषणं, तत्र तृष्णा तद्युक्ति(क्त)धिया । पक्षे कनकमृगे तृष्णा तदन्वितधिया । भ्रान्तं पर्यटितम् । वै प्रसिद्धादौ । देहि विश्राणयेति । पक्षे वैदेहि, हे सीते ! इति वचः प्रतिपदं उदश्रु यथा भवति तथा प्रलपितम् । अलं अत्यर्थं काभर्तुः ईषद्भर्तुः । अल्पत्वेन कुत्सितत्वं लक्ष्यते । ईषदर्थे, कोः कादेशे विधानात् । कुत्सितभर्तुः वदनपरिपाटीषु, वचः श्रेणिषु घटना शरयोजना कृता । कुशलेन सहितं वसु धनं कुशलवसुता नत्वधिगता, न प्राप्ता । पक्षे कुशलवौ सुतौ यस्याः सा, कुशलवसुता सीता, नाधिगता, न प्राप्ता । अत्र वक्तुः कवेः प्राकरणै(णि)कत्वाच्च रामस्याऽप्राकरणिकत्वाद्रामेण सहोपमानोपमेयो(य)[भावमूलोऽ]लङ्कारो व्यङ्ग्यः । स च वाच्यस्य मयाऽऽप्तं रामत्वमित्येतस्य वाच्यार्थस्याङ्गं भवति । यतोऽलंकारेणोपमानोपमेयभाव एव परिपोष्यते । उपमानोपमेयभावेन चमत्कारात् गुणीभूतव्यवहारस्तस्य । यतः शब्दशक्तिरेवात्र वैदेहीत्यादौ शब्दपरावृत्तिं न सहते तेन [शब्द]शक्तिमूलानुरणनरूपता । अत्र वाच्योऽर्थः प्रधानः । उपमानोपमेयभावो हि तस्याङ्गतां प्राप्त इति व्यङ्ग्यमङ्गभूतमिति कृत्वा गुणीभूतव्यङ्ग्यम् । अथवा **व्याख्यानानन्तरं**—अशकंका(अत्र किं क)[14]स्याङ्गमित्याकाङ्क्षायामाह, अत्रेति, शब्द { इति } शक्तिमू(र्मू)लं यस्यानुरणनरूपो, व्यङ्ग्यता योग्या, अनुरणनसदृशः रामवृत्तान्तस्याप्राक्(क)रणिकला(त्वा)त् सविशेषणोपमेयकथनेनैव रामत्वे सिद्धे; रामत्वमिति शब्दोपादानादुपमानोपमेयभावो वाक्यार्थीभूतस्य वाच्यार्थस्याङ्गमित्यर्थः । वाच्यस्यालङ्कारस्य वस्तुरूपं व्यङ्ग्यमिति, स्पष्टोऽर्थः ।

अथार्थशक्तिमूलानुरणनरूपमङ्गमुदाहरति । यथोपमालङ्कारस्या(स्यां)गता दर्शिता तथाऽलंकारान्तरस्यापि दर्शयति, **आगत्येति** । संक्षेपार्थो यथा—

आगत्य संप्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥१२५॥ [२]

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः ॥

वियोगौ(गो) द्वीपान्तरसञ्चारेण सम्बन्धाभावो, विरहश्च । विसंष्ठुलं सङ्कुचितम् । शोकादिना पूर्वावस्थातो विसंवादि । क्वचिद् द्वीपान्तरे नायकान्तरगृहे प्रा(प्र)सादनं विकासनं मानापनयनं च । पादो रश्मिश्चरणं(णे) च पतनमात्मसंकोचः प्रणामश्च । कश्चिन्नायको नायिकां प्रत्याह—हे तन्वङ्गि ! सहस्ररश्मिः सूर्यः एतामम्भोजिनीं कमलिनीं प्रसादयति । केन, पतनेन किरणपतनेन । त्वं पश्येत्यन्वयः । किम्भूतामम्भोजिनीं वियोगविसंस्थू(ष्ठु)लाङ्गी-(ङ्गीं) वियोगेन कृशाङ्गीं, शनैः शनैः प्रसादयति । लक्षणया विकाश(स)यतीत्यर्थः । कथम्भूतः सहस्ररश्मिः । क्वचिदपि द्वीपे क्षपिता त्रियामा रात्रिर्येन सः; प्रभाते आगत्य । अत्र चाभ्य(पर)स्याङ्गं किमित्याकाङ्क्षायामाह—अत्रेति । अत्राश्लिष्टपदोक्तो(क्तेन)प्रस्तुतं(त)रविकमलिनीं(नी)वृत्तान्तेन नायकनायिकावृत्तान्त उक्तो भवति । अथवा[ऽप्रा]करणिकः सूर्यो(र्यः) प्राकरणिको नायकनायिकावृत्तान्त(न्तः) । रविकमलिनीवृत्तान्ते आरोपयति । अत्रायमर्थः । अप्रकृतो यो नायकनायिकावृत्तान्तः स निरपेक्ष इति । अत्र नायकनायिकावृत्तान्त[स्य] रविकमलिनीवृत्तान्तस्य च परस्परमपेक्षा नास्तीति कृत्वा रविकमलिनीवृत्तान्तेन नायकनायिकावृत्तान्त आरोप्यते । तेन व्यङ्ग्यं वाच्यस्याङ्गं जातमित्यर्थः । तेनेदं वाच्यसिध्यङ्गत्वेन गुणीभूतव्यङ्ग्यम् ।[16] **टीकान्तरे** व्याख्या यथा अत्रेति । श्लिष्टपदोक्तौ प्रस्तुतरविकमलिनीवृत्तान्तस्याप्रधानस्यासामर्थ्याद्वाच्यसंस्कारकत्वेनागतो नायकवृत्तान्तोऽङ्गम् । ननु वियोगविसंस्थु(ष्ठु)लाङ्गी पाठ(द)पतनेनेति क्लिष्टशब्दसद्भावात् किमुभयशक्तिमूलोऽर्थशक्तिमूलो वेति शङ्कायामाह—अर्थेति । मूलानु(म्ना तु?)[16]व्यपदेशा भवन्तीति न्यायात् । अर्थस्यैवाधिक्यादर्थशक्तिमूल

**वाच्यसिद्ध्यङ्गं यथा**

**भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।**
**मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥ ॥१२६॥**

**अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत् ।**

---

एवेति भावः । ननु किमयमुपमालङ्कारध्वनिरुतवस्तुध्वनिरित्याकाङ्क्षायामाह— **वस्तुरूप** इति । उल्लास्य { कत्वे } [काल]करवालेत्यादाविव । श्लिष्टशब्दाभावेन पार्थक्येनार्थद्वयप्रतीत्यभावान्नोपमालङ्कारः । किन्तु वस्तुरूपालङ्कार एवेत्यर्थः । नन्वयं वाच्यसिद्ध्यङ्गमस्तु मा स्व(स्त्व)परस्याङ्गमित्यत आह, **निरपेक्षेति** । रविकमलिन्यौ न हि नायकनायिकावृत्तान्तमपेक्षेते । अध्यारोपेणेत्यनेन एकप्रतिपन्नः साध्यते । एवकारेण गुणभावं प्रकारान्तरेणान्वयाभावः । निरपेक्षत्वेन सिद्धस्य वाच्यस्य यदुपोद्वलकं(पकारकं) तदपराङ्गम् । यत्तु वाच्योत्पत्तावेवोपकारकं तद(द्)वाच्यसिद्ध्यङ्गमिति विवेकात् नायं वाच्यसिद्ध्यङ्गमिति तात्पर्यार्थः ।

अपरस्याङ्गं सप्रपञ्चमुदाहृत्य क्रमप्राप्तं वाच्यसिद्ध्यङ्गमुदाहरति, **वाच्येति** । जलदभुजगजं विषं प्रसह्य वियोगिनीनामित्यादि, करोतीत्यन्वयः । किं करोतीत्याह—**भ्रमिमि**त्यादि । भ्रमिर्मुखविकारकारी भ्रमणमिव दर्शनफलं कश्चनान्तरो[17] धर्मः । अरतिर्विषयवैराग्यं, प्रण(ल)यो बहिरिन्द्रियचेष्टाविरहः, मूर्छा मनसो बहिरिन्द्रियासम्बन्धः, तमो[ऽ]न्धकारदर्शितम् । ननु जलदभुजगयोः साम्याप्रसिद्ध्या कथं भूषणमित्याह, **अत्र हालाहलमि**त्यादि । जन इव लोकाविरुद्धसाधर्म्येण जलदभुजगयो रूपणमुपपन्नमित्याह, **सिद्धिकृदि**ति । जलदा त(ए)व भुजगा इति । जलदानां भुजगरूपणं वाच्यम् । हालाहलं वस्तुव्यङ्ग्यं विना न सिध्यतीति हालाहलं वाच्यस्य भुजगार्थस्य निर्वाहाय विषमिति । { य(प)दप्रकाश्यशब्दशक्तिमूलो हालाहलो(ल)[रूपो] व्यङ्ग्योत(ग्यस्त) एव सापेक्षत्वादयः [18]रसस्याङ्गा दशभेदाः । } अत्रैवोदाहरणं **यथात्रे(वे)**ति । हे अच्युत कृष्ण । **अक्षरणशील** । अहं गच्छामि । भवतो दर्शनेन सुरतसेवाविकलेन प्रीतिः किमुतप(त्प)द्यते । किन्तु हतजनः, एवं विजनस्थयोरेकावस्थितयोरावयोरन्यथा सम्भावयति मन्यते इति

**यथा वा**

**गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते**
**किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।**
**इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्**
**आश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥ ॥१२७॥ [३]**

**अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य ।**

**एतच्चैकत्र एकवक्तृगत्वेन अपरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः ।**

**अस्फुटं यथा**

**अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।**
**नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥ ॥१२८॥ [४]**

**अत्रादृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम् ।**

---

[वाच्योऽर्थः] । अनेन प्रकारेण(णा)मन्त्रणभङ्गि[अ]च्युतेत्यामन्त्रणप्रकारस्तेन सूचितं, यत् वृथा स्थाने तज्जनितः खेदस्तेनालसाङ्गोपीं [आ]श्लिष्यन(न्), पुलकानामुत्करस्तेना(नां)चिता तनुर्यस्य स हरि र्वः पातु । अत्र किमङ्गमित्याकाङ्क्षायामाह—**अत्रे**ति । अच्युतादिपदवाच्य(च्यः) धैर्याभावः । स आमन्त्रणादिभङ्गि शब्दवाच्यसिद्धौ अङ्गं भवति, साधकमिति । व्यङ्ग्यं चात्र धैर्यच्यवनाभावस्तद्व्यञ्जकमच्युतपदम् ।

ननूदाहरणद्वयस्य परस्परं को भेदस्तत्राह, **एतच्चि(च्चे)**ति । एतद्व्यङ्ग्यं(ङ्ग्ये) एकत्र स्वम(भ्रमि)मरतिमित्यादौ, एक एव कविर्वक्ता । अपरत्र गच्छाम्यच्युतेत्यादौ पूर्वार्द्ध(र्द्धे) गोपी वक्त्री, अपरार्द्धे कविर्वक्तन्य(क्तेत्य)नयोरुदाहरणयोर्भेद इत्यर्थः ।

वाच्यसिद्ध्यङ्गमुदाहृत्य तदुत्तरमस्फुटमुदाहरेति **अस्फुटं यथे**ति । काचिन्नायिका प्रियं प्रत्याह—त्वयि अदृष्टे दर्शनोत्कं[ठा]वा, दृष्टे सति परित्यज्य गमिष्यसीति दर्शनविच्छेदभीरुताऽतो दृष्टेन भवता कृत्वा मया सुखं न लभ्यते[ऽ]दृष्टेन कृत्वाऽपि सुखं न लभ्यते । अत्र किं व्यङ्ग्यमस्फुटमित्याकाङ्क्षा-

संदिग्धप्राधान्यं यथा

हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि । ॥१२९॥ [५]

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति संदेहः ।

---

यामाह, अत्रेति । अत्र व्यङ्ग्यं यथा वियोगो न भवति अदर्शनं च न भवति तथा कर्तव्यं इदमस्फुटं व्यङ्ग्यम् । अदर्शनेऽपि न सुखं दर्शनेऽपि न सुखं, ततस्तृतीयप्रकाराभावात् [अ]स्फुटव्यङ्ग्यता ज्ञेया । क्लिष्टं [अ][19]युक्तम् । शब्दार्थशक्त्या प्रकाश्यमानं व्यङ्ग्य(ङ्ग्यं) स्फुटं, इतरदस्फुटमिति विवेकः ।

संदिग्धेति । संदिग्धं च तुल्यं प्राधान्यं च, संदिग्धतुल्यप्राधान्ये प्रथमे व्यङ्ग्यं संदिग्धं, द्वितीये वाच्ये तुल्यप्राधान्यम् । वाच्यमपि प्राधान्यं (प्रधानं) व्यङ्ग्यमपि प्रधानमित्यर्थः । अ[थ] [क्र]मप्राप्तं संदिग्धप्राधान्यमुदाहरति, संदिग्धेति । चन्द्रोदयारम्भे अम्बुराशिरिव किञ्चित् परिवृत्तधैर्यो हरस्तु, बिम्बफलमधरयतः बिम्बफलाधरौ ओष्ठौ यस्य, तस्मिन् मुखे विलोचनानि व्यापारयामास । ओष्ठद्वय(यं) मुखं चेति स्थानत्रये व्यापारणार्थं विलोचनानीति बहुवचनम् । अत एवैतत् सचमत्कारम् । अत्र संदिग्धप्राधान्यं कथमित्यत आह, अत्रेति । चुम्बितुमे(मै)च्छदिति प्रतीयमानं व्यङ्ग्यं प्रधानं, किं वा विलोचनव्यापारणं व्यङ्ग्यं प्रधानमिति सन्देहः । उभयोश्चमत्कारकारित्वादिति भावः । तथा चायमर्थः । विलोचनव्यापारेण प्रतीयमानं, यद्वाच्यं रागातिशयपूर्वमवलोकनं, तत्प्रधानं तच्चमत्कारकारि, किं वा परिचुम्बनं व्यङ्ग्यं प्रधानं चमत्कारकारि । परिचुम्बनस्य बिम्बफलाधरोष्ठे 'इति'पदं व्यञ्जकं तथा कर्तव्यं यथा व्यङ्ग्यं वाच्यार्थापेक्षया किञ्चिदधिकानन्दजनकं भवति । प्रकृते चोभाभ्यां रागातिशयावलोकनचुम्बनाभ्यां तुल्यचमत्कारः क्रियते इति व्यङ्ग्यं संदिग्धम् ।

अथ तुल्यप्राधान्यमुदाहरति, ब्राह्मणेति । जामदग्न्योः(ग्न्यः) रावणस्य प्रधानपुरुषं[20] प्रत्याह,—ब्राह्मणाज्ञामु(नु)ल्लङ्घनं भवतां रक्षसां भूतय एव

तुल्यप्राधान्यं यथा

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथा मित्रम् अन्यथा दुर्मनायते ॥१३०॥ [६]

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

काक्वाक्षिप्तं यथा

मथ्नामि कौरवशतं समरे न कोपात्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥१३१॥ [७]

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम् ।

---

भवति; यथा ब्र(ब्रा)ह्मणाज्ञानुल्लङ्घनं भवद्भिर्यदि विधीयते तदे(दै)व जामदग्न्यो मित्रं भवति । अन्यथा यदि ब्राह्मणाज्ञा न क्रियते तदा जामदग्न्यौ(ग्न्यो) दुर्मनायते । क्षत्रियाणामिव रक्षसामपि क्षयं करिष्यति । प्रथमार्द्धप्रतिपाद्यो वाच्योऽर्थः साम । चतुर्थचरणप्रतिपाद्यो व्यङ्ग्योऽर्थो निग्रहः । यतो दौर्मनस्ये निग्रह एव भवति । सामनिग्रहयोरनर्थनिवारकत्वेन समं प्राधान्यम् । वाच्यस्य दौर्मनस्य, लक्षणस्य रक्षा(क्षो)क्षयकरणलक्षणस्य व्यङ्ग्यस्य च, समकाले तुल्यप्राधान्यमित्यर्थः ।

क्रमप्राप्तं काका(क्वा)क्षिप्तमुदाहरति, काका(क्वा)क्षिप्तमिति । मथ्नामीति । वैरि (वेणी)संहारे नाटके भीमसेनस्य वचः, सहदेवं प्रति । भवतां नृपतिः युधिष्ठिरः पणेन सन्धिं करोतु । परमहं कौरवशतं न मथ्नामि । अपि तु मथ्नाम्येव । समरे, संग्रामे । दुःशासनस्योरस्तो रुधिरे(रं) न पिबामि । सुयोधनस्यौ(स्यो)रू गदया न संचूर्णयामि । अपि तु संचूर्णयाम्येव । अथ किं व्यङ्ग्यं, कथं वा तस्य गुणभावस्तत्राह, अत्रेति । मथ्नामीति । निषेधो वाच्योऽर्थः । मथ्नाम्येवेत्य { वेत्य } वधारणं, व्यङ्ग्योऽर्थः । तस्या(स्य) काका(क्वा)क्षिप्तत्वाद्व्यङ्ग्यं गुणीभूतम् । भिन्नकण्ठ-

**असुन्दरं यथा**

**वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए ।**
**घरकम्मवावडाए बहुए सीअन्ति अंगाइं ॥१३२॥ [८]**
**वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।**
**गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥]**

**अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम् ॥**

---

ध्वनिर्धा(र्धी)रैः काकुरित्यभिधीयते, इति व्याख्याऽत्र । [21]**टीकान्तरे** यथा वाच्येति । सहभावेन समकालं प्रतीयमानत्वेन, व्यङ्गचकृतचारुत्वस्य वाच्यानिर्वाह्यत्वाग्रहान्न ध्वनित्वमित्यर्थः अत एवाक्षिप्तपदम् । आक्षिप्तं झटिति प्रत्यायितम् । त्य(य)त्र काकुतोऽपि विलम्बेन प्रतीतिस्तत्र ध्वनित्वमेव यथोदाहृते गुरुः खेदं खिन्ने इत्यत्र । अत एव काकुव्यङ्ग्यस्य पदार्थस्थानीयत्वेन बाधानवतारान्न लक्षणा । वाच्यश्चास्यै(स्य) निषेधश्च, तव(स्य) सहभावेन वाच्यप्रतीत्यनन्तरं प्राधान्येन व्यङ्ग्यस्य प्राधान्यम् । अत्र तु शब्दशक्तिरेव स्वाभिधेयाक्षिप्तकाकुसह(हा)या सती, { अत्र } विशेषप्रतिपत्तिहेतुर्न काकुमा { न् } त्रमिति उभयोर्वाच्यव्यङ्गचयोर्युगपत्प्रतीतत्वात् गुणीभूतव्यङ्गचत्वमित्यर्थः । न चात्र विपरीतलक्षणास्त्विति वाच्यम् । उच्चारणकाल एव कोपाद् गद्गदस्वरादिसाकाङ्क्षकाकुबलान्निषेधस्य निषिध्यमानतयैव युधिष्ठिराभिमतसन्धिमार्गेक्षमारूपत्वाभिप्रायेण प्रतीति(त)मुख्यार्थबाधाद्यभावात् । इत्यलं विस्तरेण[22] ।

**अथासुन्दरव्यङ्गचमुदाहरति, असुन्दरेति** । 'वानीरकुञ्जेही(ञ्जोड्डी)न शकुनिकोलाहलं शृण्वन्त्याः । गृहकर्मव्यापृतायाः वध्वाः सीदन्त्यङ्गानि ॥' शृण्वन्त्या इति वर्तमानोपदेशात् कार्यकारणयो[र्पौ]र्वापर्यव्यत्यासः । **अत्रेति** । वाच्यो[ऽ]ङ्गावसादः । स च विप्रलम्भा(म्भ)भावो झटिति संपद्यमानस्त स्योत्कर्षः व्यङ्गचस्तन्मुखप्रेक्षितत्वेन । न स्वतस्तदुपकार इति चमत्काराप्रत्यासन्नत्वेन व्यङ्गचस्यासुन्दरता । अत्रायं प्रघट्टकोऽर्थः । अत्र व्यङ्ग्ये-

(सू०६७) एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥४६॥

यथायोगमिति

"व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥"

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालंकारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् ।

---

ऽर्थो वाच्यार्थसापेक्षतया चमत्कारी न नु(तु) स्वातन्त्र्येण । अत्र संकेतभङ्गो व्यङ्ग्यः । वाच्योऽर्थस्तु सीदन्त्यङ्गानि । गृहकर्मव्याकुलाया इत्यौत्सुक्यविषादादयः सञ्चारिणः । एतैर्यथा विप्रलम्भौ(म्भो)रसः परिपुष्टो भवति तथा संकेतभङ्गो व्यङ्ग्यस्तेन विप्रलम्भः परिपुष्टो न भवतीति । विप्रलम्भस्य परिपोषकत्वेन वाच्यार्थस्य प्राधान्य(न्यं)स्ते(ते)न वाच्यार्थस्य तात्पर्यविषयत्वं, न नु(तु) व्यङ्ग्यार्थस्य तात्पर्यविषयत्वमिति भावार्थः । अङ्गानीति बहुवचनेन एकमपि न तादृशमङ्गं यदात्मानं सञ्चरी(रि)तुं शक्नोति । एवं शकुनिकोलाहलश्रवणमात्रेणाङ्गसादौ(दो)[ऽ]भूदिति वाच्यस्य स्मरपारवश्यप्रतीतिहेतुत्वेन चमत्कारकारित्वाद्व्यङ्ग्यमसुन्दरमिति । अपि विशेषार्थः । अगूढादीनामन्योन्ययोजनं, सङ्कर[सं]सृष्टीव पूर्वपदे च द्रष्टव्यमित्यादि । **एषामी(मि)**ति । एषामगूढादीनां भेदाः शुद्धध्वनिवत् द्रष्टव्याः । तथा च यावत(न्तः) शुद्धध्वनेर्भेदास्तावन्तः सर्वेऽपि मध्यमकाव्यस्यापि किं सन्ति, नेत्याह **यथायोगमिति** । यथासम्भवमित्यर्थः । चतुर्थोल्लासोक्तध्वनिभेदानां ५१ मध्यादेको भेदोऽन्यतः कार्यः । यत्र वस्तुनालङ्कारो व्यज्यते तदा ध्वनिसंज्ञैव कर्तव्याः(व्या) । न नु(तु) गुणीभूतसंज्ञा । कथं [?] वस्त्वपेक्षयाऽलङ्कारस्य चमत्कारकारित्वं सर्वत्रेति ध्वनिसंज्ञैव । अयमभिप्रायः । यत्र वस्तुनाऽलङ्कारो व्यज्यते तत्र ध्वनिः संज्ञा प्राप्ता । अगूढत्वादिनिमित्तवशाद्गुणीभूतसंज्ञाऽपि प्राप्ता । तत्र का संज्ञा इति प्रश्ने उच्यते, तत्र ध्वनिसंज्ञैव कर्तव्या, यतो वस्त्वपेक्षयाऽलङ्कारेणाधिकचमत्कारानुभवः । वस्तुतस्तु नानानिमित्तसमावेशेऽपि यत्र यत्र येन येन निमित्तेनाधिकचमत्कारो भवति तत्र

**(सू० ६८) सालंकारैर्ध्वनेस्तैश्च योगः संसृष्टिसंकरैः ।**

**सालंकारैरिति तैरेवालंकारैः अलंकारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता**

**"स गुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः स्वैः ।**
**संकरसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥" इति ।**

**(सू०६९) अन्योन्ययोगादेवं स्याद्भेदसंख्यातिभूयसी ॥४७॥**

तत्र तत्तत् (सा सा) संज्ञा कर्तव्येति सारं, यतोऽलङ्कारविषयत्वात् । अत्रायमर्थः । यत्र वस्तुनाऽलङ्कारो व्यज्यते, तदा ध्रुवं वस्त्वपेक्षयाऽलङ्कारेणाधिक एव चमत्कारः क्रियते । यथाऽन्धग्रामे काणस्तदपेक्षयोत्तम एव । द्व्यक्षाणां ग्रामे काणो हीन एवेत्यत्रापि वस्त्वपेक्षयाऽलङ्कारेणाधिक एव चमत्कारकरणेन ध्वनिव्यवहार एव । तत्र गुणीभूतव्यङ्ग्यता नास्ति । यतो वस्त्वपेक्षयाधिक्येनैव चमत्कारो न नु(तु) गुणभूतोक्तरीत्या चमत्कारो[ऽ]स्ति । तथा च न तदन्तर्भाव(वोऽ)स्येति ।

अत्र संसृष्टिसङ्कराभ्यां कृत्वा ध्वनिगुणीभूतभेदयोः सङ्करमाह, **सालंकारैरिति** । तैः शुद्धैर्गुणीभूतव्यङ्ग्यैः यत्र वस्तुना वस्तु व्यज्यते तद्गुणीभूतव्यङ्ग्यं, तत् शुद्धगुणीभूतव्यङ्ग्यम् । अथवाऽलङ्कारस्वरूपं व्यङ्ग्यं यत्र गुणीभूतम् । तैर्गुणीभूतव्यङ्ग्यैर्द्विविधैः सह ध्वनेर्योगः संकरः । अयमपि काव्यभेदाः-(दः) । अथवा ध्वनिस्तैर्वाच्यालङ्कारसहितैरित्यर्थः । तथा च ध्वनेरेताभ्यां वाच्यालङ्कारसहितैर्गुणीभूतव्यङ्ग्यैः । अथ च व्यङ्ग्यालङ्कारसहितैर्गुणीभूतव्यङ्ग्यैर्योगः । तदपि काव्यभेदान्तरम् । अत्र ध्वनिकारसङ्गतिमाह **तदुक्तमिति** । सकाव्यभेदो बहुधा द्योतते । स पूर्वोक्तः । बहुधा । कथं कैः(तैः)र्गुणीभूतव्यङ्ग्यैः सालङ्कारैः । इयं कर्तरि तृतीया । अथ च संसृष्टिसङ्कराभ्यां कृत्वा, इयं करणार्थे तृतीया । स्वैर्मतभेदैः सह, इयं सहार्थे तृतीया । एवं चात्र तृतीयात्रि(त्रै)विध्यम् । अत्रायमर्थः । स भेदो बहुधोद्यत (धा द्योतत) इत्यन्वयः । पूर्वं गुणीभूतव्यङ्ग्यस्य ये स्वप्रभेदा उक्तास्तैः स्वप्रभेदैः सह सालङ्कारैः गुणीभूतव्यङ्ग्यैर्भेदैः बहुधा द्योतते । कथं बहुधा द्योतते । सङ्कर[सं]सृष्टिभ्यां कृत्वा । **अन्योन्येति** । ये पूर्वोक्तभेदा एते च भेदास्तेषामन्योन्ये(न्य)योग(गे) भेदसंख्या

**एवं अनेन प्रकारेण अवान्तरभेदगणनेऽतिप्रभूततरा गणना । तथाहि । श्रृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यम् । का गणना तु सर्वेषाम् । संकलनेन पुनरस्य ध्वनेस्त्रयो भेदाः । व्यङ्ग्यस्य त्रिरूपत्वात् । किंचिद्वाच्यतां सहते किंचित्त्वन्यथा ।**

**तत्र वाच्यतासहमविचित्रं विचित्रं चेति । अविचित्रं वस्तुमात्रं विचित्रं त्वलंकाररूपम् । यद्यपि प्राधान्येन तदलंकार्यम् तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते । रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः । स हि रसादिशब्देन श्रृङ्गारादिशब्देन वाभिधीयेत । न चाभिधीयते । तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयते इति निश्चीयते । तेनासौ व्यङ्ग्य एव । मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः ।**

---

भूयसी विद्यत इत्यर्थः । श्रृङ्गारस्यानन्ता भेदा, यथा द्विविधः श्रृङ्गारः, संयोगो विप्रलम्भश्च । तत्र तयोरपि नायिकालम्बनादिभेदेन । उद्यानोपवनचन्द्रोदयजलक्रीडासौधारोहणाद्युद्दीपनभेदेन । तत्रापि मुग्धा, प्रौढा, मध्यमा, स्वीया, परकीया, सामान्याज्ञातयौवनादिभेदेनानन्ता एव । ततस्तदालम्ब्य श्रृङ्गारस्यानन्त्यम् । का गणनाऽन्येषां रसानाम् । कथं गणना इत्यर्थः । अथ विभाजकोपाधिमाह—**संकलनेने**ति । संग्रहेण विभागकरण इति शेषः । त्रीन् भेदानाह **किञ्चिदि**ति । व्यङ्ग्यस्य त्रैविध्यम् । तदाह—किञ्चिद् व्यङ्ग्यं वाच्यतां सहते, किञ्चिद्व्यङ्ग्यं वाच्यं भवति १ ।, किञ्चिद्व्यङ्ग्यं कदापि वाच्यं न भवति २ । आद्य(द्यं) शोतं(त)[त्व]पावनत्वादि व्यङ्ग्यं कदाचिद्वाच्यमपि भवति, यथा शीत[त्व]पावनत्वादिमान् घोषः । द्वितीयं यथा रस(सः) । श्रृङ्गारादिः । कदापि वाच्यो न भवति । सर्वदा व्यङ्ग्य एव । तत्र(न्न) वाच्यं(च्य)ता(तां) सह[ते][23] । व्यङ्ग्यं द्विविधं, अचित्रितमिति (अविचित्रं विचित्रं चेति)। ननु यत्रालङ्कारो व्यङ्ग्यस्तत्रालङ्कारोऽलङ्कार्यो जातस्तत्रालङ्कारत्वं कुत इत्याशङ्क्याह **ब्राह्मणे**ति । भूनपूर्वन्यायेन सोलंकार्योऽप्यलंकार एव, यथा

**अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम् । शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलंकारस्य च निर्विवादं व्यङ्ग्यत्वम् ।**

---

ब्राह्मण(णः) { स्य } श्रमणीभूतोऽपि ब्राह्मण एव । न वाच्य इति सिद्धं, न नु(तु)रसाद्यर्थो लक्षणायै भवतु इत्यत आह **मुख्यार्थे**ति । मुख्यार्थबाधो नास्ति यथा,

काठिन्यं कुचयो(योः) सुधाधरतले, ज्योतिः कपोलोद्गता
चाञ्चल्यं नयनाञ्चले सरलता बाह्वोर्गतौ मन्दता ।
एतावत् सकलं सरोरुहदृशामङ्गेषु संस्थीयते,
रे विश्वैकवनं सयौवन पुनर्यावत् तन्वया(त्वया) स्थीयते ॥

इत्यादौ शब्दे त्वयाः मुप(ऽन्वयानुप)[24] पत्तेरभावान्न लक्षणा ।

नन्वर्थान्तरसङ्क्रमितादिस्थले व्यङ्ग्ये लक्षणैवास्तु किमर्थं व्यञ्जनावृत्तिरङ्गि(ङ्गी)क्रियते, इत्यत आह **अर्थान्तरे**ति । लक्षणास्त(त)दा स्याद्यदा व्यङ्ग्यं किञ्चित् सिद्धं भवेत् । तथा व्यङ्ग्योपस्थितौ व्यञ्जनैव व्यापारः । न तु लक्षणयाऽन्यथा सिद्धिः ।

लक्षणामूलकव्यञ्जन(ना)मुक्त्वा शब्दशक्तिमूलिकां व्यञ्जनामाह—**शब्दशक्ती**ति । यत्र (च्च) शब्दपरावृत्तिं न सहते तत् शब्दशक्तिमूलम् । यच्च शब्दपरावृत्तिं सहते तदर्थशक्तिमूले(लम्) । अभिधाया नियन्त्रणेनार्थान्तरस्यानभिधेयस्य व्यङ्ग्यत्वम् । यथा सशंखचक्रो हरिरित्यत्र वाच्योऽर्थो हरिर्विष्णुः । व्यङ्ग्योऽर्थो(र्थ) { ऽ } श्च सूर्यादिरूपः । अनभिधेये(यो)ऽर्थोऽश्वादिरूपः । शब्दशक्तिमूले तु भद्रात्मनो दुरधिरु(रो)हेत्यादिस्थले प्रकरणादिना अभिधाया राज्ञि नियन्त्रणेनाऽपरार्थे च गजौ(जे)न सहोपमानोपमेयभावस्य निर्विवादं व्यङ्ग्यत्वम् ।

ननु अभिधे(ध)यैव व्यङ्ग्यार्थस्य बोधो भविष्यति, किमर्थं व्यञ्जनावृत्तिरित्याशङ्क्यार्थं(र्थ)शक्तिमूलेऽपि व्यञ्जनावृत्तिं समर्थयितुं नानामतैर-

**अर्थशक्तिमूलेऽपि विशेषे संकेतः कर्तुं न युज्यते इति सामान्यरूपाणां पदार्थानामाकाङ्क्षासंनिधियोग्यतावशात्परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्ता व्यङ्ग्यस्याभिधेयतायाम् ।**

भिधानिरूपणमाह—**अर्थशक्तीति** । अत्र द्वौ वादिनौ । एके अभिहितान्वयवादिनौ(नो) नैयायिकादयोऽन्ये चान्विताऽभिधानवादिनः प्र(प्रा)भाकराः । प्रथमं [25]अभिहितान्वयवादिनां मते, अन्वय एवादौ शक्तिर्नास्ति तर्हि व्यङ्ग्यरूपेऽर्थे कुतः शक्तिः । पदपदार्थान्वयाभ्यां व्यङ्ग्यस्य भिन्नत्वात् । तथा चाऽभिहितान्वयवादिनां मते वाच्यस्यैवार्थस्य भानमिति नियमो नास्ति । तथा च शक्तिं विनापि कयाचित् सामग्र्या अन्वयो यथा भासते तथा कयाचिद्वृत्त्यन्तररूपया सामग्र्या व्यङ्ग्योऽप्यर्थो भासत इति समुदायार्थः । **अर्थशक्तिमूलेऽपि** व्यञ्जनां विना व्यङ्ग्यस्य गतिर्नास्तीत्यन्वयः । एतदेवोपपादयति, **विशेषेति** । घटपदस्य कुत्र शक्तिरिति विचारणायां न आनयता(ना)न्विते घटे शक्तिः, कुतः, घटं पश्येत्यादौ घटबोधो न स्यात्, घटे आनयत्वितत्वाभावात्[26] (आनयनत्वाभावात् ?) नापि प्रेक्षणान्विते घटे शक्ति(क्तिः) { घटे शक्ति } घटो भविष्यतीत्यादौ घटबोधो न स्यात्, घटे प्रेक्षणान्वितत्वाभावात्, किन्तु घटपदार्थमात्रे एवेत्यर्थः । ननु आनयनान्वितघटे शक्ति(क्ते)रभावे घटानयनान्वयबोधो न स्यादित्यत आह **सामान्येति** । तथा चाशक्यत्वेऽपि आकाङ्क्षायोग्यतासन्निधिवशात् वाक्यार्थः, संसर्गमर्यादयैव वाक्यार्थो भासते इत्यर्थः । **अपदार्थ इति** । पदशक्त्यभावेऽपीत्यर्थः । **विशेषरूप इति** । घटानयनान्वयरूपो भासते । तथा चान्वयस्याशक्यत्वेऽपि सामग्र्यंतरेणाकांक्षायोग्यतासन्निधिवशाद्भानं तद्वद्व्यङ्ग्यस्याशक्यत्वेऽपि व्यञ्जनारूपसामग्र्यन्तरेण भानं भविष्यतीति पूर्वोक्तमेव स्मर्तव्यम् । इदमेवोपसंहरति—**तत्रेति** । नैयायिकमते व्यङ्ग्यस्याऽभिधेयतायां का वार्ता । न काऽपीत्यर्थः ।

अथान्विताभिधानवादिनां मतेऽपि व्यङ्ग्यं(ञ्जना)शक्तिर्नास्तीत्याह—[27] **येऽपीति** । तत्रादौ शक्तिग्रहप्रकारं निरूपयति **शब्दवृद्धेति** । शब्दो गामान-

येऽप्याहुः

''शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥

येति रूपः । आद्या व्युत्पत्तिर्व्यवहारात् । तत्र व्युत्पादको वृद्धः प्रयोज्यः, प्रयोजकश्च, व्युत्पादनीयश्च प्राथमिको बालः । स तु वृद्धव्यवहारदर्शनाद् व्युत्पद्यते । तदाह शब्देत्यादि । शब्दो गामानयेति वाक्यं, वृद्धौ प्रयोज्यप्रयोजकौ । अभिधेयो गवानयनादिरूपः । संसर्गः प्रत्यक्षेण, तद्धेतुना चाक्षुषा श्रावणेन च । अत्र व्युत्पत्तिकाले, पश्यति जानाति । श्रोतुः प्रतिपन्नत्वं ज्ञानवत्त्वम् । चेष्टया अङ्गक्रियया । अनुमानेनाऽनुमितिकरणेन । चेष्टया हेतोरित्यर्थः प्रघट्टको यथा—वृद्ध एकः प्रयोज्योऽपरः प्रयोजकश्च । अभिधेया गवादयः । तान् प्रत्यक्षेण पश्यति । तन्मध्ये शब्दं श्रोत्रेण, वृद्धाभिधेययोश्चक्षुषैवेति यथायोगं बोद्धव्यम् । शब्दश्च वृद्धो(द्धः) चाभिधेयाश्च तान् । वृद्धयोर्व्यवहरमाणयोः । कियद्व्युत्पन्नः श्रोतुर्मध्यमवृद्धस्य प्रतिपन्नत्वं, अर्थावगतित्वं चार्थानयनलक्षणाचेष्टानुमानेन पश्यति । ततो मध्यमवृद्धबुद्धयन्यथानुपपत्त्या शब्दे प्रतिपादका(कां) अर्थे च प्रतिपाद्यां चावगच्छेत् । एवं च प्रत्यक्षानुमानार्थापति[पत्ति]लक्षणत्रिप्रमाणकसम्बन्धम् । ते लोकाः । अनुमानं यथा—अयमेतच्छब्दजन्यैस्तदर्थगोचरज्ञानवान् एतच्छब्दश्रवणानन्तरमेतदर्थं गोचरे चेष्टावत्त्वादित्यनुमित्याकारः । चकारः प्रतिपन्नत्वमित्यनन्तरं योज्यः । श्रोतुः प्रतिपन्नत्वमपि जानातीत्यर्थः । अनुमानप्रकारौ(रो) यथा—इयं गवानयनक्रिया चेष्टारूपा प्रयत्नसाध्या क्रियात्वात्, स्रग्निर्माणक्रियावान् (वत) । विपक्षबाधकतर्कस्तु प्रयत्नक्रिययोः कार्यकारणभाव एव । कारणाभावे कार्यं न स्यात्, प्रयत्नः कारणं कार्यं क्रिया । स प्रयत्न इच्छासाध्यः जीवनयोनि(निः) च यन्ने(त्नो)त्तरजन्यप्रयत्नत्वात् । तेन सुषुप्तिदशायां प्राणपञ्चकसञ्चारामुक्त { स } प्रयत्ने व्यभिचारवारणार्थं जीवनयोनीत(ति) { र } पदम् । ईश्वरं(र) प्रयत्नवारणार्थं जन(न्य)पदम् । विपक्षबा(सा)धकतर्कस्तु इच्छाप्रयत्नयोः कार्यकारणभाव एव । इच्छा कारणं, प्रयत्नः कार्यरूपः । सा चेच्छा

**अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।**
**अर्थापत्त्यावबोधेत संबन्धं त्रिप्रमाणकम् ॥"**

ज्ञानसाध्या, जन्येच्छात्वात्, स्वर्गेच्छावत् ।, तच्च यत् गवानयनज्ञानं गामानयेति वाक्यसाध्यं; कुतः, कारणान्तरापेक्ष(क्षा)या(याः) सन्निहितत्वात् । अन्वयव्यतिरेकानुविधायित्वादित्यर्थः । तच्च गवानयनज्ञानं गामानयेति वाक्यसाध्यम् । कथमित्यत आह,—**अन्यथाऽनुपपत्त्ये**ति । समानविषयकं ज्ञानं स्वविषयप्रतिपादकशब्देन विनाऽनुपपन्नं, परं [च] स्वविषयभिन्नप्रतिपादकशब्देन विनामु(नु)पपन्नं इत्यन्यथाऽनुपपत्त्या । सा चान्यथाऽनुपपत्तिः प्राभाकरमते प्रमाणान्तरं, नैयायिकमते व्यतिरेकानुगतमित्यर्थः । नन्वेतावता गवानयनज्ञाने गवानयनवाक्यस्य शक्तिरागता । तन्मध्ये गामिति पदस्य इतरान्विते आनयने शक्तिः, किंवा इतरान्विते गोपदार्थे गोव्यक्तौ वा शक्तिरिति कथं निर्णय इत्यत आह—**अर्थापत्त्ये**ति । शब्दवृद्धाभिधेयान् प्रत्यक्षेण श्रोता पश्यति; आदौ जानाति, तदनन्तरं किमित्यत आह—**श्रोतुश्च प्रतिपन्नत्वं** अनुमानेन स्वेच्छया(चेष्टया)पश्यति जानातीत्यर्थः । ततोऽपि किमित्यत आह--**अन्यथाऽनुपपत्त्या** । नैयायिकमते व्यतिरेकानुमानेन प्रमाणसहकारिविपक्षबाधकतर्केण वा प्राभाकरमतेऽन्यथाऽनुपपत्त्या प्रमाणान्तरेणैव । वाच्यवाचकभावद्वयरूपां शक्तिं बुद्धेरिति ज्ञानस्य पश्यति गृह्णातीत्यर्थः । पश्यतीति पदं त्रिष्वन्वेतीति प्रघट्टकार्थः । नैयायिकमते यथा स्वसमानविषयकशाब्दज्ञानस्वविषयकप्रतिपादकशब्देन विनाऽनुपपन्नमतः स्वसमानविषयकशब्दजन्यमेवेयमनुपपत्तिः, प्राभाकराणां मते प्रमाणान्तरं, नैयायिकमते व्यतिरेक्यनुमानं प्रमाणसहकारी विपक्षबाधकतर्को वा बोद्धव्य इति । तथा तथा चायमर्थः—अर्थापत्या, प्रमाणान्तरेण प्राभाकरमते, नैयायिकमते तु व्यतिरेक्यनुमानेन, प्रमाणकं सम्बन्धं बुध्यते इत्यन्वयः । **त्रिप्रमाणकमि**ति । प्रत्यक्षानुमानार्थापत्तिरूपं प्रमाणत्रयमित्यर्थः । तथा चावापोद्वापाभ्यां प्रत्यक्षानुमानाभ्यां सहार्थापत्त्यैवेतरान्विते गोपदार्थे गोपदस्य शक्तिरितरान्विते आनयनादिपदार्थे आनयनपदस्य शक्तिसम्बन्धं गृह्णातीत्यर्थः । एतदेव कारिकाद्वयं विवृणोति-**प्रतिपाद(दि)ते**ति । उत्तमवृद्धेति प्रयोजकवृद्धेत्यर्थः, मध्यमवृद्धेति प्रयोज्यवृद्ध इत्यर्थः ।

इति प्रतिपादितदिशा

'देवदत्त गामानय' इत्याद्युत्तमवृद्धवाक्यप्रयोगादेशादेशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्नः' इति तच्चेष्टयानुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं संबन्धमवधार्य बालस्तत्र व्युत्पद्यते ।

परतः 'चैत्र गामानय देवदत्त अश्वमानय देवदत्त गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीति अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव संकेतो गृह्यते इति विशिष्टा एव पदार्था वाक्यार्थः । न तु पदार्थानां वैशिष्ट्यम् ।

---

प्रतिपादितेत्यारभ्य सत्यंतेन ग्रन्थेन शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यतीति कारिकार्थं व्याख्यातम् । अनेनेत्यारभ्य तच्चेष्टया [ऽ] [नु] मायेत्यन्तेन ग्रन्थेन श्रोतुश्चेत्यपरं कारिकार्थं व्याख्यातम् । **तयोरिति** । अखण्डवाक्यं गामानयेति वाक्यम् । अखण्डवाक्यार्थो ज्ञायमानो गवानयनरूपोऽर्थोऽथवा गवानयनार्थं ज्ञानं वा । प्राचां मते ज्ञाने पदानां शक्तिरित्यभिधानात् गवानयनज्ञाने शक्तिरत एवाह **बुद्धेः (बोधेत्) शक्ति(क्तिं) द्वयात्मिकामिति** । नवीनानां मते तु गवानयनरूपोऽर्थशक्त्याऽत एवाह **वाक्यार्थयोरिति** । तथा च यथामतं व्यवस्था ज्ञेयेति । एतेनान्यथामु(नु)पपत्त्या { ऽ } नु(तु) बुद्धिः (बोधेत्) शक्ति द्वयात्मिकामिति द्वितीयकारिकाप्रथमार्द्धं(र्धं) व्याख्यातम् । तयोरित्यारभ्य व्युत्पाद्यन्ते इत्यनेन ग्रन्थेन श्रोतुश्चेत् परं कारिकार्द्धं(र्धं) व्याख्यातम् । **तयोरिति**[30] । अखण्डं वाक्यं, गामानयेति वाक्यं, अखण्डवाक्यार्थो ज्ञायमानो गवानयनरूपोऽर्थः शक्योऽत आह— वाक्यार्थयोरिति । तथा च यथामतं व्यवस्था ज्ञेयेति । एतेनान्यथानुपपत्त्या { ऽ } नु (तु)बुद्धेः (बोधेत्) शक्ति द्वयात्मिकामिति, द्वितीयकारिका प्रथमार्द्ध(र्धः)व्याख्यातं(तः) । तयोरित्यारभ्य व्युत्पद्यत इत्यनेन ग्रन्थेन अ(आ)वापो[द्]वापाभ्यां विशेषशक्ति निरूपयति, **परत इति** । एतावता गामानयेति वाक्यस्य गवानयनादि-

रूपेऽर्थे शक्तिरागता । कस्यांशस्य कुत्र शक्तिरिति निर्णयो न जात इत्यत आह-**परत इति । त(तं) तमर्थमवधारयति तटस्थ** इति योजना । तं तमर्थमित्यस्य व्याख्या—यथा गोपदस्य इतरान्वितं गोपदार्थं आनयनपदस्य इतरान्वितमानयनपदार्थं शक्यमवधारयति इत्यर्थः । तत्राऽवधारणेऽ[ऽ]वापोद्वापौ हेतू आह । परत इति । प्रयोगान्तरे यथा गामानयेत्यत्र गोपदस्य ग्रहणं अश्वमानयेत्यत्र गोपदस्य परित्यागः । एवम(मा)वापो ग्रहणमुद्वापस्त्याग इत्यर्थः । तेन गां नयेत्यत्र आनयनपदाभावात् गोपदस्य गोरूप एवार्थः शक्यः । एवमश्वमानयेत्यादौ गोपदाभावेऽप्यानयनरूपोऽर्थः प्रतीयते, इत्यानयनमेवानयनपदस्यार्थः । तथा चावापोद्वापाभ्यां निर्णीतं गोपदस्यार्थो गोरूपः, आनयनपदस्यार्थोऽप्यानयनमेवेति परस्परव्यतिरेकेण परस्परार्थस्य प्रतीयमानत्वात् तत्तत्पदयोरेव तत्तत्पदार्थस्य एव शक्तिरिति अनेनार्थापत्त्यैवेत्यारभ्य सम्बन्धं त्रिप्रमाणकमित्यन्तो ग्रन्थो व्याख्यात इत्यर्थः । विशेषशक्त्यवधारणे हेतुमाह,—**अन्वयव्यतिरेकाभ्यामिति** । अन्वयव्यतिरेकाभ्यां वाक्यार्थबोधं प्रति वाक्यस्य कारणत्वे गृहीते, तत्तदन्वितपदार्थबोधं प्रति तत्तत्पदानां कारणत्वे गृहीते, तत्राशक्तेन गोपदादिना गवादिपदार्थबोधः कर्तुं न शक्यत इति तत्तदन्वितपदार्थे तत्तत्पदानां शक्तिः कल्प्यत इत्यन्विता एव पदार्थाः पदस्यार्थाः । तथा चेतरान्वित एवार्थो गोपदस्यार्थः । केवलं गौरेव गोपदस्यार्थो न भवतीति प्राभाकराणां मतम् । ननु तथाऽप्याकांक्षायोग्यतासन्निधिवशादेव पदार्थवैशिष्ट्यरूपस्य बोधो भविष्यतीति किमर्थं तत्रान्वये शक्तिरित्यत आह—**प्रवृत्तोति** । तथा च[३१] प्रवृत्तिनिवृत्तिकारि अन्वयज्ञानं वाक्यार्थः, ज्ञानं न चा(च ना)कांक्षायोग्यतासन्नि[धि]वे(व)शादेवाशक्तस्य वाक्यार्थरूपान्वयस्य बोधो भविष्यतीति । अन्यथाऽशक्तस्याऽपि बोधे घटमानयेति वाक्यस्य स्थले देवदत्तीयनीलघटस्यान्वयबोधः स्यादिति प्राभाकराणामाशयस्तेषां मतेऽन्वये शक्तिरिति सिद्धम् । ननु प्रकृतप्रयोगातिरिक्तपदानामेव पदार्थे शक्तिरस्तु न तु प्रयोगास्थितानामित्यतः आह —**वाक्यस्थितानामिति** । लाघवात् प्रकृतवाक्यस्थितानामेव पदानां पदार्थे शक्तिर्न तु प्रकृतप्रयोगातिरिक्तपदानां पदार्थे शक्तिगौरवात् । तथा च लाघवमेव मूलं तत्रेति भावः । पूर्वोक्तयुक्त्या

यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययनेन तान्यैवेतानि पदानि निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वितः पदार्थः संकेतगोचरः तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः ।

वाक्यस्थितानामेव पदानामितरान्वितैः पदार्थैः सहेतरान्वितानामेव पदानां शक्ति-गृह्यते तथा च गोपदशक्य इतरान्वितो गौरेवेति सिद्धम् । एतावता किं सिद्ध-मित्यत आह **विशिष्टा एवेति** । गवादिपदानामितरान्वितो गौः शक्यो न तु गोमात्रम् । विशिष्टा इत्यस्यार्थो हि इतरान्विता इति । तदेवाह—विशिष्टा एव पदार्था वाक्यार्थो ननु(तु) पदार्थानां वैशिष्ट्यं वाक्यार्थः । अस्यार्थो, यथा नैया-यिकानां मते पदार्थानां वैशिष्ट्यं यत्तदेव वाक्यार्थः । गोपदस्यार्थो गौः, आन-यनं पदस्यार्थ आनयनं, वैशिष्ट्यं तु वाक्यार्थः । गवानयनरूपं वैशिष्ट्यम् । गोकर्मकानयनक्रियाकोऽन्वयबोधः सम्बन्धमात्रम् । प्राभाकराणामितरान्विता एव पदार्थाः वाक्यार्थः । तथा चैतेषां मते आनयनान्वितौ (तो) गौर्वाक्यार्थः । अथवा गवान्वितमानयनं वाक्यार्थः, पदार्थानां वैशिष्ट्यं वाक्यार्थो न भवतीति सिद्धम् । न त्वेतावतानयनान्वितौ गौरेव गोपदस्यार्थः, प्राभाकराणां मते, तथा च गामपसारयेत्यादौ आनयनान्विते गौरूपेऽर्थोपसारणान्वितत्वं न सम्भवतीति गामपसारयेत्यादौ अपसरणान्वितो गौर्गौ(र्गो)पदस्यार्थो न स्यात् । कथं-यत आनयनान्वितगोव्यक्तेरेव गोपदार्थत्वात्, गोपदस्य चैकत्वात्, अपसरणान्वितो गो(गौ)र्गोपदस्यार्थो न स्यात् । न च गामानयेत्यत्र गोपदं भिन्नं, अपसारयेत्यत्र गोपदं भिन्नमिति वाच्यम् । तदेवेदं गोपदमिति प्रत्य-भिज्ञा न स्यात् । न च सामान्येतरान्वितो गौर्गौ(र्गो)पदस्यार्थ इति । तथा चानयनान्वयस्याशक्तत्वात् तस्य भानं स्यात् । तद्भानं त्वनुभवसिद्धेतरसामान्या-न्वितशक्तावप्यानयनान्वयस्तु आकांक्षायोग्यतासन्निधिवशात् संसर्गमर्यादया वाक्यार्थमर्यादया च भासत इत्यवश्यमभ्युप[ग]म्येत्याशङ्कते **यद्यपीति** ।

तथा चान्वयः शक्त्यैव भासत इति मतं गतमित्यर्थः । **पदार्थान्तरमात्रेणेति** । इतरसामान्यान्वितमात्रेणेत्यर्थः । समाधत्ते **तथाऽपीति** । गोपदस्यार्थो

**तेषामपि मते सामान्यविशेषरूपः पदार्थः संकेतविषय इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसंकेतितत्वाद्वाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरे अर्थान्तरभूतस्य निःशेषच्युतेत्यादौ विध्यादेश्चर्चा ।**

विशेषरूप एवानयनान्वितो गौरेव गोपदस्यार्थो, न तु आनयनान्वित गोत्वपुरस्कारेण, किन्तु इतरान्वितगोत्वपुरस्कारेणानयनापसारणाद्यन्वित एव गौरेव गोपदस्यार्थः । यथा वह्नित्वपुरस्कारेण चत्वरीयगा(प)र्वतीयादिवह्निरेवानुमितिविषयस्तद्वत् इतरान्वितत्वं पुरस्कारेणानयनापसारणाद्यन्वित एव गौरेव गोपदस्यार्थः । एतदेवाह—**सामान्येति** । सामान्यमितरान्वितगोत्वं, तदवस्था(च्छा)दितस्तत्प्रकारविशिष्ट एव विशेषरूप एवानयनापसारणाद्यन्वित एव गोः(गौः) गोपदस्यार्थः । असौ विशेषरूपः श्रोत्रा प्रतिपद्यते ज्ञायत इत्यर्थः । नन्वत्र सामान्यावस्था(च्छा)दितो विशेष एव पदार्थः सङ्केतरूपः प्रतिपद्यतेऽत्र किं प्रमाणमित्यत आह । **व्यतिरि(ष)क्तानामिति** । अपरपदार्थसंसृष्टानामित्यर्थः । **तथाभूतत्वादिति** । वाक्यार्थबोधविषयत्वादित्यर्थः । एतावता आनयनाद्यन्वित एव गोपदस्यार्थः परं तु इतरान्वितत्वरूपसामान्यपुरस्कारेणैवानयनाद्यन्विते गवि गोपदस्य शक्तिः । तथा च गवानयनान्वयस्य अशक्यधर्मिणो सा { म } [ऽ]स्येव, किन्तु योग्यताबलात् आनयनान्वितगोत्वरूपधर्मस्य लाभः । तथा च सिद्धं नाशक्यस्य धर्मिणोऽन्वयादिरूपस्य भानमिति । अन्वयो विशेषरूपः सामान्यरूपः [च] । सामान्यरूपेण शक्य एव विशेषरूपधर्मः आनयनाद्यन्वितत्वं, तस्य भानं योग्यताबलात् अशक्यस्यापि भवति न तु धर्मिणोऽशक्यभानं भवतीत्यर्थः । इदमन्विताभिधानवादिनां प्राभाकराणां मतम् ।

**तेषामिति** । सामान्यरूपेण विशेषपदार्थः सङ्केतविषयो न तु विशेषरूपेण विशेषपदार्थः सङ्केतविषयः । सामान्यं इतरान्वितगोत्वं, [ते]न रूपेण विशेषरूपः पदार्थः आनयनाद्यन्वितगोरूप इत्यर्थः,[32] न तु आनयनाद्यन्वितगोत्वेन गोपदार्थः सङ्केतविषय इति हेतोः । अयमर्थः । सामान्यतः कृताशेषविशेषाणि भवन्ति तत्प्रतीतिनान्तरीयकतयैवेति विशेषसिद्धिः । निर्विशेषं न सामान्यं भवेच्छशविषाणवत् । ततः सामान्यावच्छादितो विशेष एव सङ्केतविषयः । ततश्च

**अनन्वितोऽर्थोऽभिहितान्वये पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने अन्वितविशेषस्त्ववाच्य एव इत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः ।**

---

सामान्यरूप एव पदार्थोऽसङ्केतितत्वादनभिधेय इत्यर्थः । **अतिविशेषभूत** इति । विशेषमतिक्रान्तोऽतिविशेषस्तं भूतः प्राप्नोति विशेषभूतः, सामान्यपदार्थ इत्यर्थः । यत्र तु सामान्यरूपोऽपि पदार्थः प्रतिपद्यते प्रतीतिविषयो, न वाच्यः, तथा चानयनाद्यन्वितः गोत्वरूपोऽर्थो[ऽ]वाच्य एवेति । यथा प्राचां मते व्याप्तिबलात् वह्नित्वेन रूपेण पर्वतीयवह्निर्भासते न तु पर्वतीयवह्नित्वेन रूपेण, तस्याव्यापकत्वात्, पर्वतीयवह्नित्वं तु पक्षधर्मताबलात्, तथा प्रकृतेऽपि सामान्यरूपेणानयनाद्यन्वितो गौः शक्त्या भासते, तेन रूपेण सङ्केतितत्वात्, आनयनाद्यन्वितगोत्वपुरस्कारेणाऽसङ्केतितत्वादवाच्यत्वेऽपि तद्भानं योग्यताबलादिति प्रघट्टकार्थः । प्रकृतमुपसंहरति **तत्रेति** । यदि विशेषरूपेणेतरान्वितत्वसामान्यरूपेणान्वयः शक्यो न भवति तदा निःशेषच्युतेत्यादौ विधेः कथं शक्यत्वमिति तदेवाह—**दूरेति** ।

अथ प्राभाकरनैयायिकमतयोरुपसंहारमाह—**अनन्वितेति** । अभिहितान्वये नैयायिकमते । यतो नैयायिकमते अभिहिताः शुद्धाः पदार्था अन्वयं लभन्ते इत्यभिहितान्वयवादो(दः) । नैयायिकानां मते नैयायिकमतेऽनन्वितोऽर्थः केवल एव शुद्ध एव भासते यथा गोपदात् गौर्भासते आनयनपदात् क्रिया, अन्वयस्तु तयोः संसर्गमर्यादया भासत इति । प्राभाकराणां मते इतरान्विताभिधानवादः । यत इतरान्वितत्वसामान्यमात्रेण पदार्थभानमित्यन्विताभिधानवादः प्राभाकरमतमित्यर्थः । एतावतोभयनये किं पर्यवसन्नमित्यत आह—**अन्वितेति** । अन्विता विशेषा यत्र, संसर्गा इत्यर्थः, यतोऽवाच्यस्ततः पक्षद्वयेऽपि अपदार्थ एव वाक्यार्थः, उभयमतेऽपि विशेषरूपेण गोत्वेन रूपेण गोकर्मक आनयनत्वरूपेण आनयनक्रियाको यः संसर्गाः(र्गः) सोऽवाच्य एवेति, एतदेवाह । वाक्यार्थस्याऽप्यशक्यत्वे निःशेषेत्यादौ विधेः का वार्ता शक्यतायामित्यर्थः ।

अन्विताभिधानवाद्येकदेशि[32A]मतं दूषयितुमाह—**यदप्युच्यत** इति । नैमित्तिकार्थानुसारेण वाक्यार्था(र्थ)तात्पर्यानुसारेण निमित्तानि पदार्थाः कल्प्यन्ते,

यदप्युच्यते 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इति। तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा, शब्दस्य प्रकाशकत्वान्न कारकत्वम्, ज्ञापकत्वं तु अज्ञातस्य कथम्, ज्ञातत्वं च संकेतेनैव स चान्वितमात्रे एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितम् तावन्नैमित्तिकस्य प्रतीतिरेव कथम् इति 'नमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इत्यविचारिताभिधानम्।

ये त्वभिदधति 'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति 'यत्परः शब्दः स शब्दार्थः' इति च विधिरेवात्र वाच्य इति।

---

ततो नैमित्तिक एवायं न व्यङ्ग्य इति वदन् वादी प्रष्टव्यः, किं **निमित्तत्वं कारकत्वं [ज्ञापकत्वं]** वेति विकल्प्याद्य(द्यं) दूषयति। शब्दस्य निमित्तत्वं नामार्थं प्रति न कारणत्वं अर्थस्य शब्दाजन्यत्वात्। अथ ज्ञापकत्वं वाच्यं, ज्ञापकत्वं तदा स्यात् अ(य)द्यर्थशक्तिः स्यात्; शक्तिं विना शब्दस्य ज्ञापकत्वरूपनिमित्तत्वासम्भवात्। ततोऽर्थस्यापि नैमित्तिकत्वं न स्यात्तथा च व्यङ्ग्यज्ञापकत्वलक्षणं यन्नैमित्तिकत्वं शब्दस्य, तच्छक्तिं विना कथं स्यात्ततो व्यङ्ग्ये शक्तिरवश्यं वक्तव्या। स(सा) चेति { स } सङ्केतशक्तिरिति यावत्। **निमित्तस्येति**। शब्दस्य निमित्तत्वं शक्तिरूपं यावन्न निश्चितं तावन्नैमित्तिकस्याऽप्यर्थस्य प्रतीतिरेव कथं स्यात्, इति कृत्वा सर्वेष्वप्यर्थेषु अभिधेयलक्ष्यव्यङ्ग्येषु शब्दानां शक्तिरेवेति व्यङ्ग्यार्थेऽपि व्यञ्जनाव्यापारा(रो) नास्तीति केषाञ्चिन्मतं तद्दूषयति। **अविचारिताभिधानमिति**। अत्र दूषणं यथा वक्ष्यमाणमप्युपरितनमपि यथा शब्दाद्यावानर्थः प्रतीयते तत्रापि चेच्छक्तिस्तदा धूमोऽस्तीति वाक्यात् वह्निरस्तीति प्रतीतिर्जायते, तदा वह्निरपि धूमपदशक्यः स्यादित्यादिदूषणं पूर्वमते बोद्धव्यम्।

[32B]एकदेशिमतं दूषयति **ये त्वभिदधति** इति। यत्परः शब्दः स शब्दार्थ इति, यमर्थं प्रति शब्दः स शब्दार्थः, ततो व्यङ्ग्यरूपमर्थ(र्थं) यदि शब्दः प्रतिपादयति तदा व्यङ्ग्यरूपोऽप्यर्थ शक्य एवेति। अत्र दृष्टान्तमाह—**सोऽयमिति**। यथा इषोदी(र्दी)र्घदीर्घो व्यापारः स सर्वो[ऽ] { पी } षोरेव, तद्वत् याव-

तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानां प्रियाः । तथा हि 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाभिसंबन्धात् साध्यायमानतां प्राप्नुवन्ति ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते यथा ऋत्विक्प्रचरणे प्रमाणान्तगात् सिद्धे "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यत्र लोहितोष्णीषत्वमात्रं विधेयम् हवनस्यान्यतः सिद्धेः "दध्ना जुहोति" इत्यादौ दध्यादेः करणत्वमात्रं विधेयम् ॥

च्छब्दात् प्रतीयते तावत् सर्वं शब्दव्यापार्यमेव । शब्दव्यापारो वृत्तिरूपोऽत्र शक्तिरेव । तथा च निःशेषेत्यादौ विधेरपि प्रतीयमानत्वेन शब्दव्यापार्यत्वात् विधावपि शक्तिरेवेति । इदं दूषयति–त(य)दिति । यदुक्तं प्राक् यत्पर इति तस्यायमर्थः । यमुद्दिश्य शब्दः प्रयुज्यत इत्यर्थः । तथा वाऽभिधा यत् पर्य्यन्ता तत्रैवाभिधायकत्वं शब्दस्योचितम् । सा चाभिधा प्रधानीभूतव्यङ्ग्ये स्यादिति तत्राप्यऽभिधाव्यापारेण भवितुं युक्तम् । वृत्तिं विना ज्ञापने[ऽ]तिप्रसङ्गः स्यात्तत्रापि विधेः प्राधान्येन वाच्यत्वमेव न्याय्यमिति तेषामभिप्रायस्ते तात्पर्यवाचोयुक्तेर्यत्पर(रः)शब्दः स शब्दार्थ इति वचनस्यातात्पर्यज्ञा(ज्ञाः) । अभिप्रायं न बुध्यन्त इत्यर्थः । **तात्पर्यवाचोयुक्ते**स्तात्पर्यशब्दप्रयोगस्यातात्पर्यज्ञाः । किमुद्दिश्य यत्परः शब्द इति प्रयुज्यते इत्यस्यानभिज्ञा **देवानां प्रियाः** पशव इत्यर्थः । यद्वा देवानामिन्द्रियाणां प्रियाः सुखिनोऽज्ञा इति यावत् । वाचोयुक्तिरिति देवानांप्रिया इति चालुक् समासः ।

एतदेव व्याचष्टे **तथा हीति** । तात्पर्यविषये शब्दः प्रमाणमिति उपात्तशब्दप्रतिपाद्येष्वर्थेषु यदंशे विधेयत्वं तत्रैव तात्पर्यं न तु प्रतिपाद्ये । अत एव सिद्धार्थानामप्रामाण्यमिति । विधेयापेक्षया शब्दप्रामाण्यनियामकं तात्पर्यमित्यप(ति यत्प ?)रः शब्दः स शब्दार्थ इत्यस्य तात्पर्यमिति सिद्धान्तयति, तथा हीत्यादिना । भूतं प्रमाणान्तरेण सिद्धं, भव्यं साध्यम् । तथा च यमर्थं प्रतिपादयति शब्दः स शब्दार्थ इत्ययमर्थो यत्पर इत्यादेर्न भवति, किन्तु यदंशे तात्पर्यं तदंशे शब्द-

स्य प्रामाण्यमिति यत्परेत्यस्यार्थो बोद्धव्यः । तात्पर्यं तु सिद्धेष्वर्थेषु न भवति किंतु साध्येष्वर्थेषु । तच्च साध्यत्वं घटमानयेत्यादावुपपादयति ।**भूतभव्येति** । भूतभव्यसमुच्चारणे सिद्धसाध्यसमभिव्याहारे इत्यर्थः । तेन भूतं सिद्धं, भव्याय साध्यायोपयुज्यते । तत्र किं सिद्धं, किं वा साध्यमित्यत आह—**कारकेति** । कारकपदार्थाः सिद्धाः क्रियापदार्था असिद्धाः । यथा घटमानयेत्यत्र घटपदार्थः सिद्ध आनयनक्रिया असिद्धा । न तु घटमानयेत्यत्र घटानयनसाध्यमिति प्रतीतिर्जायते । विशिष्टे घटानयनरूपे साध्यत्वाद्विशेषणे घटेऽपि साध्यत्वमेवेति । तत्र पदार्थेषु कारकरूपेषु कथं सिद्धत्वमित्यत आह—**प्रधानेति** । प्रधानक्रिया आनयनक्रिया । स(सा) च समीपदेशगो(स्थ)घटस्य तस्या(स्य) अभिनिर्वर्त्तिका{ या } क्रिया, पूर्वदेशसंयोगध्वंसहेतुविभागजनकः स्पन्दः । तत्सम्बन्धात् स्पन्दसम्बन्धात् घटे तादृशस्पन्दवत्त्वात् साध्यमानता भवतीत्यर्थः । यत्र च क्रिया न दृश्यते सुरसाम्रफलमित्यादौ तत्र पदार्थेषु साध्यत्वाभावेन तात्पर्याभावादप्रामाण्येऽपि न क्षतिः, साध्यत्वाभावात् , तस्याः प्रामाण्यमेवेति भावः । एतावता प्रबन्धेन साध्यत्वमर्थेषु तात्पर्यनियामकमुपपादितम् । इतः परं कस्मिन् वाक्ये कुत्र किमंशे तात्पर्यमिति दर्शयति । दहनस्तु दग्धं भस्म न दहति, अदग्धं काष्ठमेव दहति, तद्वत् अप्राप्तमेवासिद्धमेव तावत् शब्देन विधीयते । तेनाप्रसिद्धेष्वेव शब्दस्य तात्पर्यं वि { द } धेयार्थेष्वेव प्रामाण्यं सर्ववादिसिद्धम् । तत्र किं विधेयं, कुत्रेति दृष्टान्तपुरस्सरं विवृणोति, **यथेति** । यागमात्रे ब्राह्मणानां चरणं क्रियते, निमन्त्रणं क्रियते यथा लोहितोष्णीषवन्तो विप्रा रक्तोष्णीषवन्तो ब्राह्मणाः, प्रवरणोयाः । यजमानो वदति, देवदत्त, त्वयात्र कर्मणि होतृत्वं कर्तव्यमित्यादिप्रचरणं ज्ञेयम् । तत्र पूर्ववाक्ये यागमात्रे चरणं कर्तव्यमृत्विज(जा)मित्युक्तम् । अनेन वाक्येन चरणे सिद्धे रक्तोष्णीषाणामृत्विजां चरणं कर्तव्यमिति वाक्ये, चरणं न विधेयं, चरणस्य पूर्ववाक्येनैव सिद्धत्वात्, किन्त्वप्राप्तं रक्तोषीष्ण(ष्णीष)त्वमेव विधेयं तत्रैवार्थे तात्पर्यात् । अथोदाहरणान्तरमाह—**दध्नेति** । दध्ना होमः कर्तव्य इत्यत्र स्वर्गकामो ज(जु)हुयात् अनेन वाक्येन होमस्य प्राप्तत्वात्, दध्ना होमः कर्तव्य इत्यत्र होमो न विधेयः कन्तु वधूः(दधि)करणत्वमात्रं

**क्वचिदुभयविधिः क्वचित्त्रिविधिरपि यथा 'रक्तं पटं वय' इत्यादौ एकविधिर्द्विविधिस्त्रिविधिर्वा ततश्च 'यदेव विधेयं तत्रैव तात्पर्यम्' इत्युपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे एवं हि 'पूर्वो धावति' इत्यादावपराद्यर्थेऽपि क्वचित्तात्पर्यं स्यात् ।**

---

विधेयं, होमस्तु पूर्ववाक्यान्तरेण जा(ज्ञा)त एवास्ति । परं दधिकरणकं होमत्वेन न ज्ञातमस्तीति । यथा घटमानयेत्यत्र घटो ज्ञातोऽप्यानयनत्वेन [न] ज्ञात इतिवत् ।

**क्वचिदि**ति । देवदत्तः किं करोतीति प्रश्ने रक्तं पटं वयतीति त्रयः । [३४]गंगास्नानमेव यमुनामाघस्नानयोरपि विधिः । यथा ब्राह्मणं स्नानं(तं) भोजयित्वा समानयेत्यत्र स्नानं प्राप्तो (प्तस्य?) भोजनानयनयोर्विधानम् । अत्रे(त्रै)व स्नपयित्वेत्युक्तो त्रिविधिः । एका(क)प्राप्ताउ(वु)भयाप्राप्तौ त्रितया(य)प्राप्तौ चैकविधिर्द्विविधिस्त्रिविधिः । एतावता यो न ज्ञातस्तस्यैव विधेयत्वमिति { द्वे } प्रकृतमनुसरति । **ततश्चे**ति । विधेयमज्ञातं तत्रैव शब्दस्य तात्पर्यं, तत्रैवार्थे शब्दस्य प्रामाण्यमिति, यत्पर इत्यादेर्वाक्यस्यार्थो न तु त्वयोक्त इति । अथ यत्पर इत्यादेर्वाक्यस्य स्वाभिप्रेतमर्थं वर्णयति **उपात्तस्ये**ति । उद्देश्यभिन्नस्यैव शब्दस्यार्थे विधेयेऽर्थे तात्पर्यमिति कृत्वा विधेयोऽर्थः, शब्दार्थस्तत्रैव विधेयार्थे शब्दप्रामाण्यमिति यावत् । परोक्तमर्थमनूद्य दूषयति—**नत्वि**ति । यावान् शब्दान्(त्) प्रतीतोऽर्थः स शब्दार्थो न भवतीत्यर्थः । अत्र दूषणमाह—**एवं ही**ति । यदि प्रतीतमात्रेऽर्थे शक्तिस्तदा पूर्वो धावतीत्यादौ पूर्वत्वज्ञानमुत्तरत्वज्ञाननियमितमिति पूर्वपदस्योत्तराद्यर्थेष्वपि शक्तिः स्यादित्यर्थः । एतावता प्रबन्धेनोक्तं व्यङ्ग्योऽर्थः शब्दशक्तिविषयो न भवति, किन्तु व्यञ्जनाविषय एवेति प्रघट्टकार्थः

यदुक्तं उपात्तशब्दस्य सहोच्चरितशब्दस्य वृत्तिविषय एवार्थे तात्पर्यमित्यत्र मतान्तरमाशङ्क्य निराकरोति । विषं भक्षय माचास्य[३३A] गृहे भुंक्ष्व इत्यत्र { वृक्ष } विषये गृहाभोजने तात्पर्यमस्तीति कृत्वा त्वदुक्तनियमो व्यभिचारी । यथा पूर्वे त्वयोक्तं उपात्तशब्दस्य वृत्तिविषय एवार्थं तात्पर्यमयं नियमो व्यभिचारी । यथा गृहाभोजने प्रथमवाक्यस्य विषं भक्षयेत्यस्य वृत्तिर्नास्ति, परं तात्पर्यमस्य वा-

यत्तु 'विषं भक्षय मा चास्य गृहे भुङ्क्थाः' इत्यत्र 'एतद्गृहे न भोक्तव्यम्' इत्यत्र तात्पर्यमिति स एव वाक्यार्थ इति उच्यते तत्र चकार एकवाक्यतासूचनार्थः न चाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति 'विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुङ्क्थाः' इति उपात्तशब्दार्थे एव तात्पर्यम् ।

---

क्यस्य गृहाभोजने वर्तते । वृत्तिस्तु गृहाभोजने नास्ति । वृत्तिस्तु [मा] चास्येति वाक्यस्य गृहाभोजनं(ने) वर्ततेऽतो[ऽ]यं नियमो व्यभिचारि(री) जातो, यदुपात्तशब्दस्य वृत्तिविषय एवार्थे तात्पर्यमिति । गृहागृहाभोजनरूपवृत्त्यविषयेऽपि प्रथमवाक्यस्य मित्रवक्तृकत्वेन गृहाभोजन एव तात्पर्यं यतो विषपदस्य विषमर्थो भक्षयेत्यस्य भक्षणं, परं गृहाभोजनमर्थो न भवतीति । न च व्यञ्जनया भविष्यतीति वाच्यं, व्यञ्जनाया अद्यापि सिद्धत्वाभावात् । **स एवेति** । विषं भक्षयेत्यस्यैवायमर्थो मा चास्य गृहे भुंक्ष्व इतिरूपः । तथा च यद्यपि तत्र वृत्तिर्नास्ति तथापि तत्र शब्दस्य तात्पर्यं वर्तत इति । तद्वद् व्यञ्जनावृत्तेरभावेऽपि शब्दस्य व्यङ्ग्येऽर्थे तात्पर्यं भविष्यतीति किमर्थं व्यञ्जनावृत्त्यङ्गीकार इत्याशं-{ कार्थः } [क्य] इदं दूषयति **तत्रेति** । विषं भक्षयेत्यस्य वाक्यस्य गृहाभोजनं नार्थः तस्योत्तरवाक्यार्थत्वात्, किन्तु तदेकवाक्यतापन्नमिदं वाक्यम् । एतदेवाह **चकार इति** । ननु आख्यातवाक्ययोः विषं भुंक्ष्व मा चास्य गृहे भुंक्ष्वेत्येवंरूपयोरंगांगिभावेन विना एकवाक्यत्वमेव न निर्वहति कथं चकारेणैकवाक्यता सूच्यते । यत्रैकं वाक्यं प्रधानभूतं द्वितीयं गुणभूतं तत्रैवाङ्गाङ्गिभावो, यथारुण्यादिगुणवाक्यानां प्रधानक्रयक्रियार्थत्वं तद्वत् प्रकृतेप्यङ्गाङ्गिभावेन विना नैकवाक्यतेत्याशङ्कते—**न चेति** । समा { र्थं } धत्ते । **विषभक्षणेति** । पूर्ववाक्यस्य द्वितीयवाक्यैग(क)तामुपपादयति—**सुहृदिति** । तथा च विषभक्षणादप्येतद्द[दु]ष्टं एतद्गृहा(हे) भोजनमिति । सर्वथा मास्य गृहे भुंक्ष्व इत्यस्य शब्दस्य सर्वथा दुष्टत्वरूपोऽर्थः । तत्प्रतिपादनद्वारा सर्वथाऽस्य गृहे न भोक्तव्यमित्येकवाक्यतोपपद्यत इत्यर्थः । तथाच सिद्धप्रवृत्तिविषय एवार्थे शब्दस्य तात्पर्यमिति । ततो दुष्टस्वरूपेऽर्थे विषं

**यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारः ततः कथं 'ब्राह्मण पुत्रस्ते जातः ब्राह्मण कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम् कस्माच्च लक्षणा लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वम् इत्यन्विताभिधानवादेऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम् ।**

---

भक्षयेत्यस्य लक्षणावृत्तिः । यतो लक्षणया दुष्टत्वं प्रतिपादयति तत्प्रतिपादनद्वारा मा चास्य गृहे भुंक्ष्व इत्यत्रैकवाक्यतोपपद्यते । तथा च दुष्टत्वे तात्पर्यम् । दुष्टत्वं तु लक्षणाविषय एवेति ततो वृत्तिं विना तात्पर्यं नास्तीति यदि व्यञ्जना नास्ति तदा व्यङ्ग्येऽर्थे तात्पर्यं न स्यादिति व्यञ्जना सिद्धेति प्रघट्टकार्थः ।

अथ पूर्वोक्तं यच्छब्दाद्यावत् प्रतीयते, तावदभिधाव्यापारेणेति तत्र दूषणमाह । **यदि चेति** । तथा च पुत्रस्ते जात इति शब्दश्रवणानन्तरं हर्षः, कन्या ते गर्भिणीति शब्दश्रवणानन्तरं शोकः प्रतीयते, तत्राप्यभिधाव्यापारः स्यात् । कन्या नोढा, तस्या गर्भश्रवणाच्छोकः, तच्छब्दश्रवणानन्तरं हर्षशोकयोर्जायमानत्वात् ततस्तयोरपि कथं न वाच्यत्वं स्यादित्यर्थः । यदि च यस्माच्छब्दाद्यावत् प्रतीयते तावत्यर्थे यदि शब्दस्यैव तात्पर्यं तदा लक्षणाऽपि न स्यात्, यतस्तीरादेरपि गङ्गाशब्दश्रवणानन्तरं प्रतीयमानत्वमस्ति । लक्षणीयेऽप्यर्थे तीरादौ दीर्घदीर्घो योऽभिधाव्यापारोऽस्ति, यतः पूर्वं प्रवाहे शक्तिस्तदनन्तरं तीरे शक्तिरिति शक्त्यैव तीरादेः प्रतीतिरस्तु । किमर्थं तीरादौ लक्षणा । न चेष्टापत्तिः, तर्हि शब्दस्यानन्यलभ्यताभङ्गप्रसङ्गः स्यात् । कथं यस्यार्थस्य प्रकारान्तरेण ज्ञानं न जायते तत्रैव शब्दशक्तिः, यत्र तु प्रकारान्तरेण ज्ञानं जायते तत्र न शब्दशक्तिः यथा धूमोऽस्तीति वाक्ये धूमपदस्य वह्नौ न शक्तिः यतोऽनुमानेनापि वह्निबोधात् । तथा च यत्रान्यलभ्यता नास्ति तत्र शब्दशक्तिः । यथा घटमानयेति वाक्ये घटपदशक्तिं विना घटस्योपस्थितिरेव न जायत इति कृत्वा घटपदस्य तत्र घटे शक्तिः । व्यङ्ग्यार्थस्य लाक्षणिकार्थस्य च व्यञ्जनालक्षणाभ्यामेवोपपत्तौ लाक्षणिकार्थे च शब्दशक्तिर्नास्तीति

सिद्धम् । यतः शब्दस्य शक्योऽर्थोऽनन्यलभ्यः । लक्षणाव्यञ्जनाभ्यां यस्य प्रतीतिस्तत्रानन्यलभ्यत्वानन्यशक्तिरिति प्रघट्टकार्थः ।

तत्रैव दूषणान्तरमाह—**किमिति चेति** । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वमिति जैमिनीयसूत्रम् । यदाह जैमिनिः **श्रुतिलिङ्गेत्यादि** । अयमर्थः । शब्दश्रुत्यनन्तरं प्रतीयमानानां सर्वेषामर्थानामभिधेयत्वेनोपस्थितौ विलम्बाभावाद्विप्रकर्षविरहेण पूर्वपूर्वस्य बाधकत्वमुत्तरोत्तरा(र)स्य बाध्यत्वमिति व्यवस्था न स्यादित्यर्थः । किमिति पूर्वपूर्वबलीयस्त्वमित्यन्वयः । श्रवणं श्रुतिः, यदर्थस्याभिधानं शब्दश्रवणाद् ज्ञायते । लिङ्गं चिह्नं, अर्थसमाप्तिर्वाक्यं, प्रकरणं प्रस्तावः, स्थानं कण्ठप्रभृतिर्वर्णोत्पत्तिस्थानं, समाख्या सार्द्ध(र्थ)कसंज्ञा । एतानि ध्वनिरूपस्याङ्गिनो[ऽ]ङ्गानि । श्रुत्यादीनां च विकल्पः सम्भवेत् । पूर्वपूर्वस्याद्याद्यस्य बलीयस्त्वम् । तत्र लिङ्गात् श्रुतेर्बलीयस्त्वं, यथा प्राप्तश्रीरेष इत्यादि[35] । अत्र प्रथमं श्यादिचिह्नौ विष्णुरयमिति प्रतीतिः, पश्चात् त्वयीति, विष्णुरूपो राजा प्रतीयते १ । वाक्याल्लिङ्गस्य बलीयस्त्वं यथा यदेहं(यं?) मेघजलमित्यादि । अत्र श्लेषरूपवाक्यात् लिङ्गेन कोपरूपेण समुद्रे सम्भवता बलीयस्तया(स्त्वेन) कामुकरूपस्यार्थस्याभिधेयत्वं कृतम् । समुद्ररूपस्य निबद्धम् २ । प्रकरणाद्वाक्यस्य बलीयस्त्वं, यथा उदाहृते भद्रात्मन इत्यादौ । अत्र प्रकरणेन गजरूपार्थस्य वाच्यत्वे नियन्त्रिते वाक्यस्यासम्बद्धार्थत्वं मा भूदिति वाक्येन द्वितीयार्थो ध्वन्यते ३ । स्थानात् प्रकरणस्य बलीयस्त्वं यथा—

उन्नतप्रोल्लसद्धारकालागुरुमलीमसः ।
पयोधरभरस्तस्याः कं न चक्रेऽभिलाषिणम् ॥१॥

अत्र प्रोल्लसद्धार इत्यादौ ऋट(लृतु) वर्गलसा दन्त्या इति वचनात् ।

समं स्थानं प्रावृषो[ऽ]नुगुणपरं, प्रकरणेन बलीयस्तया(स्त्वेन) वाच्यं निषिद्धम् ४ । समाख्यातः स्थानस्य बलीयस्त्वं यथा उन्नतप्रोल्लसद्धार इति । समाख्या सार्थकसंज्ञा, उभयोरप्यर्थयोः समाना । परं लृतुलसानां दन्ता(न्त्या) इति स्थानसादृश्यात् प्रावृषआनुगुण्यं झगिति प्रतीयते ५ । श्रुत्यादीनां सर्वेषामपि विकल्पसम्भवे पूर्वस्यैव बलीयस्त्वं यथा—अतन्द्रचन्द्राभरणेति । श्यामादिना-

पेक्षया कृष्णा रात्रिरिति समाख्या । समुद्दीपितेति दन्त्यं स्थानम् । यस्य हि अभिधेयेनार्थेन सह नैकट्यं भवति स बलीयान्, यस्य हि व्यवहितत्वं स दुर्बलः । तथा च व्यङ्ग्यमेव यदि भवद्भिर्नाभ्युपगम्यते तत् कथमेकस्य बलीयस्त्वम् । सर्वेषां श्रुत्यादीनां अभिधाव्यापारस्य समानत्वादिति भावार्थः ।

जैमिनीयसूत्रसंवादिभ्यः कारिका लिख्यन्ते–

अभिधातुं पदेऽन्यस्मिन्ननपेक्षो रवः श्रुतिः ।<br>
सर्वत्राऽवगता शक्तिर्लिङ्गमित्यभिधीयते ॥१॥<br>
संहत्यार्थं वु(ब्रु)वद्वृन्दं पदानां वाक्यमुच्यते ।<br>
प्रधानवाक्यस्याङ्गोत्तरा(क्त्या)कांक्षा प्रकरण(णं) मतम् ॥२॥

स्थानं समानदेशत्वं, समाख्या यौगिको रवः । कारिकार्थो लिख्यते । अभिधातुमित्यादि । अभिधातुं प्रकृत्यर्थेन सह स्वार्थान्वयमनुभावयितुं पदान्तरविषयाकांक्षाशून्यो रवः शब्दः । अत एव श्रवणमात्रेणार्थमनुभावयन्ती श्रुतिरुच्यते । ताश्च कारकविभक्तयः उपपदविभक्तयस्तु सहार्था तृतीयादयः सहादिसापेक्षा इति मतास्तथा एतन्मु(न्मू)लकमेवोपपदविभक्तिभ्यः कारकविभक्तिर्बलीयसीति वचनम् । श्रुतिर्यथा व्रीहीनवहन्तीत्यत्र द्वितीयाश्रवणमात्रेण व्रीहीणामवहननक्रियायां विनियोगोऽवगम्यते । मासं गुडधानाः, क्रोशं कुटिला नदीत्यत्र द्वितीया न श्रुतिरन्तर्भूतक्रियासापेक्षत्वात् । सर्वत्रेति । शक्तिक्षमता यथा दाहे वह्नेर्योग्यतालिङ्गमित्यर्थः । यथा बहि(र्हि)र्देव सदानीति । दानीति दाप्लव[न] इत्यस्य रूपम् । देवाश्रयदर्भच्छेदनोऽयं मन्त्र इति । दानीति द(प्ल)वनलिङ्गादनेन मन्त्रेण बर्हींषि लुनीयादिति प्रतीयते । योग्यताबलाद्बर्हिच्छेदे अस्य मन्त्रस्य विनियोगः । संहत्येति । संहत्य विशेषेण विशेष्यभावेन तेनाकाङ्क्षादिपरिग्रहः । यथा श्वेतं छागमालभेतेत्यन्वये श्वेतस्य छागस्य च प्रत्येकमालभनक्रियान्वयित्वेऽप्याकांक्षादिमहिम्ना श्वेतस्य छागावच्छेदकांता(क्षा) । प्रधानेत्यादि । यथा दध्ना जुहोतीत्यत्र दधियागस्य दर्शपौर्णमासा[ङ्] गतावगमः, दर्शपौर्णमासाभ्यां यजेतेत्यस्य प्रधानवाक्यस्य कथमित्यङ्गाकाङ्क्षया तदभिधानात् । स्थानमित्यादि, समानदेशत्वम् । यो यद्देशे तस्य विनियोगः

त { द्व } [द्] द्विविधः सन्निकर्षक्रमश्च । यथा—हव्यकव्ये स्वाहा स्वधेत्यत्र हव्ये स्वाहेत्यस्य कव्ये स्वधेत्यस्य विनियोगः तुल्यक्रमत्वात् । **समाख्येति** । योगेनावयवशक्त्यार्थं प्रत्याय[य]तीति यौगिको रवः शब्दः । यथा च हौत्रमौद्वा(द्गा) व(त्र)माध्वर्यवमिति । होतु(तृ)विदमित्यादियोगबलेन हवनं होव(त)रि गानमुद्गातरि विनियुज्यते । न चेदं लिङ्गम् । गानेऽपि होतुः क्षमता । तत्र श्रुतिलिङ्गविरोधो यथा—ऐन्द्र्या गार्हपत्यं समुपतिष्ठत इत्यत्र ऐन्द्र्या ऋचा गार्हपत्यमग्निविशेषमुपतिष्ठते, आराधयति । उपान्मन्त्रकरणे इत्यात्मनेपदम् । अत्र द्वितीया श्रुतिश्रवणमात्रेण स्वप्रकृत्यर्थस्याराधनक्रियाया विनियोजनात् । सकर्मकक्रियाकर्मणोराकांक्षाया औत्सर्गिकत्वात् ऐन्द्रेत्यनेन ऐन्द्र्या ऋचः करणत्वमवगम्यते । तच्चैन्द्र्याराधने लिङ्गम् । तत्रैव तस्य योग्यत्वात्, गार्हपत्याराधनत्वं समवेतम् । तथा हि कदाचन स्व(स्त)रीरसिनेद्रसश्र(श्च)सिदाशुष इत्यैन्द्री ऋक् । अस्यार्थः । हे इन्द्र नोऽस्माकं कदाचिदपि नस्तरीरं(र)सि न हि सश्चो-(श्च)सिदाशुषे, आहुतिदत्तवते जनाय सश्चसि प्रीणासीत्यनेन मन्त्रेण लिङ्गेनेन्द्रस्य प्रकाशनं श्रुत्या च गार्हपत्यस्येति श्रुतिलिङ्गयोर्विरोधः । विवक्षितस्यैन्द्रीकरणकगार्हपत्यकर्मकाराधनस्य शेषशेषै(षि)भावेनान्वयस्यानुपपत्तेः । अत्रोच्यते । { नाम } यो [नाम] विरोधः [सः] श्रुत्यर्थबोधनेन्द्रपदस्य परमैश्वर्येण योगेन न गार्हपत्यपरतया, शेषशेषिभावोपपत्तेः, स्वप्रकाशनदाहवरशापादौ स्वक्रियायां गार्हपत्यस्याप्यैश्वर्यात् । रूढ्यर्थं विहाय योगमात्रानुसरणेन लक्षणादिति चेत्, स्यादेव, बाधकाभावात् । न च लिङ्गानुरोधेन गार्हपत्यस्य पदस्यैवेन्द्रपरता, औत्सर्गिकाकाङ्क्षया सकलक्रियाकर्मणोरन्वयो[पप]{ पृ }-त्तेः । तद्गाहपत्यस्याराधनं कथमित्याकाङ्क्षया विहितकरणं तद्विरोधाय नालमुपा-(प)जीव्य व्याहतिप्रसङ्गात् । प्रतीतेर[भा]वाच्चेति । कारणस्य योगेन श्रुत्यर्थान्वयानुप्रवेशे लिङ्गत्वं, न स्वरूपेणेति, श्रुत्या लिङ्गस्य बाधः, तया तस्य स्वरूपप्रच्यावनादिति । अथ लिङ्गानुगुणत्वेन कृतया इन्द्रमुपतिष्ठत इति श्रुत्या सह शेषशेषिभावेनान्वये कथं बाध्यतेति चे{ व }न(न्न), अर्थविप्रकर्षेण बाध्यताया आवश्यकत्वात् । तथा हि प्रथमतः प्रकृतान्वये ऐन्द्र्याः करणत्वे बाधं प्रतिसन्धानं

ततस्तदनुगुणश्रुतिगुणकल्पनं, ततः आकाङ्क्षादिज्ञानं, ततः शेषि(ष)ना(भा)वेनान्वय इति यावदेवं परम्परा भवति तावन्निखिलासंख्यादिसामग्रीसम्पन्नया प्रत्यक्षश्रुत्या विवक्षिततत्वयोपार्जनमित्यधिकबलया हीनबलस्य बाधनं क्लृप्तत्वेन कल्प्यत्वेन च बलस्याधिकन्यूनत्वे। एवं च कल्पनीयश्रुत्याऽप्यर्थानां लिङ्गश्रवणानन्तरं प्रतीयमानानां लिङ्गशक्त्यानुमितेन्द्रा(न द्रा)कु प्रतीतेर्विप्रकर्षविरहेण बाध्यता न स्यात्। शङ्काप्रतीतौ विलम्बविरहादिति प्रकृतसङ्गतिः सर्वत्रोहनीया। लिङ्गवाक्ययोर्विरोधो यथा स्योनन्ते सदनं कृणोमि, घृतस्य धारया सुषेवं संपादयामि, तस्मिन्नसीद अमृते प्रतितिष्ठेति मन्त्रे पुरोडाशं सम्बोध्येयमुक्तिः। हे पुरोडाश स्योनं समीचीनं सदनं घृतस्य धारया स्निग्धत्वेन सुखेन सेव्यं सम्पादयामि, तस्मिन् सदने तिष्ठ अमृते प्रतितिष्ठ अमृतीभवेदित्यर्थः। अत्र मन्त्रलिङ्गेन कल्प्य(ल्प)याम्यन्तभाँगस्य, सदनकरणे प्रती(ति)तिष्ठेत्यन्तभागस्य चाऽमृतत्वप्रतिष्ठायां विनियोगस्य { ते } योग्यत्वात् न पूर्वभागस्य परत्र न वा, परभागस्य पूर्वत्रासमवेतार्थकत्वादिति विभज्य विनियोजकं वाक्यमिति लिङ्गवाक्ययोर्विरोधः। अत्रायं विचारः। अखण्डवाक्यस्याखण्डार्थे विनियोगे योग्यताज्ञानमावश्यकं वाच्यं, कं(किं) [च] शाब्दबोध{ न }स्य तन्त्रत्वात् विद्यमानस्य तस्याभावात् कल्पनीयत्वम्। एवं च योग्यता कल्प्य(ल्प)नेनैवाऽखण्डस्य विनियोगे विप्रकर्षः कल्प्यकावतारविलम्बात्। ततश्च यावद् योग्यता ज्ञानान्तरमवतरति तावद्विद्यमानलिङ्गद्वयमबाधितार्थद्वये भागद्वयं विनियोजयतीति लिङ्गेनाविप्रकृष्टेन विप्रकृष्टं वाक्यं बोध्यत इति वाक्यप्रकरणयोर्विरोधो, यथा दर्शपौर्णमासयागे दर्शयागप्रकरणे श्रूयते अग्नीषोमा विदं हविरजुषेतां अवीवृधेतां महोक्षयो(यौ)[ऽ] ब्रूती(क्राता)मिति मन्त्रः पौर्णमासे चन्द्रा { द्रा } ग्नी इन्द्रहविरजुषेतामवीवृधेता(तां) महोक्षयौ जूती(क्राता)मिति। मह उत्सवः अक्षयो धारावाही। अत्रेन्द्राग्ना(ग्नी) { यी } अमावास्याया दैवते, अग्नीषोमौ पौर्णमास्यामिति वस्तुस्थितिर्यथाक्रमं पुनरसमवेतार्थकथनया परमन्त्रः पूर्वपूर्वमन्त्रश्च परत्र प्रयुज्यते। तत्र प्रकरणमसमवेतार्थभयेन अग्नीषोमाविति इन्द्राग्नी इति च देवतापदभागमेव त्यजति नापरं भागं, तस्य समवेतार्थकत्वात्। वाक्यं तु

यथास्थानादाकृष्यमाणं न कञ्चनाप्यं(पि) चांतहाति(?) विशेषणविशेष्यभावेनैकतामापन्नस्य तस्यांशभेदाभावात् इति वाक्यप्रकरणयोर्विरोधः । अत्रेयं व्यवस्था-झटिति प्रवृत्तेन वाक्येन विप्रकृष्टं करणं बाध्यते । तथा हि--न ह्येतावतो वाक्यादवतरति प्रकरणमपि तु वाक्यान्तराणामनुसन्धानादिति तेषामनुसन्धानं, ततस्तदर्थावगमस्ततः प्रकरणादवतार इति विप्रकर्षपरम्परातः प्रागेवोपस्थितानां खण्डवाक्यानामाकांक्षादिमहिम्नैकत्वं जायत इति । परतश्चावतीर्णं प्रकरणमकिञ्चित्करं वानत्वात्तस्य[87] तदुक्तं विरोधिनोस्तदेको हि फलं न भवते तयोः प्रथमेन गृहीतेऽस्मिन् पश्चिमेऽवतरन् मुधेति न वा(च) योग्यताज्ञानात् कथमेकत्वं वाक्यानामिति वाच्यं, प्रकरणावतारेणैव तदवतारात् प्रकरणस्थविलम्बितत्वमित्युक्तत्वादिति प्रकरणस्थानयोर्विरोधो, यथा—राजसूययागे पुना(न)रिष्टि पशुसोमयागाः प्रधानभूताः फलवन्तोतिदिश्यन्ते, तदन्तःपातिनोऽभिषेचनीयाख्यस्य सोमयागस्य सन्निधावक्षैर्दीव्यति राजन्यं जिनाति शौनः शेफमाख्यापयतीति श्रूयते । जिनाति जयति शुनःशेफस्येदमाख्यानं शो(शौ)नःशेफं, तच्च शुनःशेफनामा कश्चिदृषिपुत्रो हरिश्चन्द्रपुत्रेण पुरुषमेवा(धा)र्थं पशुत्वेन क्रीतः, स च वरुणाय स्वस्यालम्भने क्रियमाणे वरुणं तुष्टाव । स चैनं ररक्षेति । तच्च देवनादित्रयमिष्टिपशुसोमयागानां सर्वेषामङ्गम् । एतत् त्रितयानतिरिक्तस्य राजसूयस्य कथंभावाकांक्षायामभिधानात् । तच्च नोपपद्यते । समानदेशत्वेन सान्निध्येनाभिषेचनीयस्यैवाङ्गना(ता)वरावेः(वगतेः) । उच्यते । सन्निधिपादे-(ठे)न तदङ्गता स्यादन्येषां कुतोऽनङ्गत्वम् । तेषां नाङ्गत्वं तत्सन्निधानपाठादित्यनुमानादिति चेद्यावदनुमितिसामग्री व्याप्त्यादिज्ञानं नावतरति तावदेव राजसूयात्मकत्वेन प्रकृतानां सर्वेषां विद्यमानप्रकरणबलादेवनादिष्वंगतावगमः सर्वेषामेव बुद्धौ सान्निध्याद्बुद्धिसन्निधेरेव प्रकरणत्वादित्यविप्रकृष्टेन प्रकरणेन विप्रकृष्टः क्रमो बाध्यत इति । क्रमसमाख्ययोर्विरोधो यथा शुंधध्वं दैव्याय कर्मण इति मन्त्रे शुन्ध शुद्धौ, दैव्याय देवसंबन्धिने, अस्य मन्त्रस्य लिङ्गेन पात्राणां शोधने विनियोगः । तानि तु पुरोता(डा)शानामावासिकसान्नाय्यानां वा तत्रस्थानि कटपीठिन हविः पात्राण्यव(पा)माकर्षन्ति समाख्याया बलेन । पुरोडा-

शपात्राणि पौरोडाशानि तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडासि(शि)कं काण्डं, तत्र जातम् । तस्य यदि हविःपात्रशोधनांगता स्यात्तदा पौरोडासि(शि)कपदेनाभिधानस्य वैकल्यं स्यादिति क्रमसमाख्ययोर्विरोधः उच्यते । हविः पात्रशोधनं केन मन्त्रेणेत्याकांक्षया सन्निधौ प्राप्यायं मन्त्रस्तत्र विनियुज्यते । तदितरेषु मन्त्रेषु पर्यवसिता समाख्या क्रमप्रत्यायिते तदङ्गत्वं न बाधितुमीष्टे । न च पुरोडाशपात्रशोधनेऽप्येवमाकांक्षा, तस्याः मन्त्रान्तरैः परिपूरणात् । ततश्चाथ पो(पौ)रोडाशिकनित्य(त्या)धिकारस्य मन्त्रान्तराणां च प्रतिसन्धानाद्यावत् समाख्याऽवतरन्ति(ति) तावदवतीर्णः क्रमो नियोजयतीति क्रमेण समाख्याया विषयसंकोचनाया बाधनम् । न न्व(त्व)धिकृताऽर्थस्य बुद्ध्यवच्छेदे कथं विप्रकर्ष इति चेन्न, सान्नाय्यपात्रे शोधनाभिधानेन व्यवधानात् । न तर्हि मन्त्रे व्यवधानात् समाख्याऽपीति चेन्न, तत्प्रकरणपरिपाठितानां सर्वेषामेव मन्त्राणां काण्डत्वेन तत्प्रसक्तेर्व्यवधानस्याकिञ्चित्करत्वात् । तेन श्रुतेः सर्वस्य बाधकं(क) त्व(त्वं), समाख्यायाश्च बाध्यत्वं, तदुक्तम्—

बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
मध्यमानां तु बाध्यत्वं बाधकत्वं व्यपेक्षया ॥

इति । इत्यादि **टीकान्तरे**[३९] ज्ञेयं, किमिति मूलार्थो यथा श्रुतिस्थले योऽर्थः प्रतीयते स लिङ्गादिस्थले प्रतीयते एव । तथा च प्रतीतेरविशेषात् श्रुतेः प्रबलत्वं लिङ्गस्य दुर्बलत्वं, तन्न स्यात् श्रुतिलिङ्गं स्थले प्रतीयमानस्यार्थस्य शक्यार्थत्वाविशेषात् । तथा चेदं सिद्धं यावान् शब्दात् प्रतीयतेऽर्थः तावान् प्राक्य(शक्या?)र्थो न भवतीति किन्तु श्रुतिस्थले प्रतीयमानः शक्योऽर्थः लिङ्गस्थले च प्रतीयमानोऽर्थो लाक्षणिकानुपा(मा)नादिसंज्ञोऽत, एव श्रुतिस्थले प्रतीयमानः शक्योऽर्थः लिङ्गादिस्थले तु लाक्षणिक इत्यर्थः(र्थ) भेदः साधुः । उपसंहरति । **अन्विताभिधानवादेऽपीति** । रन्तुं गताऽसीति विधेरपि अन्विताभिधानवादिनां प्राभाकराणां मतेऽपि व्यङ्ग्यं(ङ्ग्य)[त्वं] सिद्धम् । यदि निषेधान्वयोऽपि न शक्यः तदा व्यङ्ग्यस्यापि तु शक्यता न भवतीत्यर्थः ।

**किं च 'कुरु रुचिम्' इति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम् ।**

**न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वितः इत्यनभिधेय एवेति एवमादि अपरित्याज्यं स्यात् ।**

**यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदासाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् । न चानुपपन्नम् सर्वस्यैव विभक्ततया प्रतिभासात् ।**

---

अथ व्यञ्जनावृत्तिसाधकं युक्त्यन्तरमाह—**किं चेति** । रुचिं कुरु इत्यत्र दुष्टत्वं वर्तते । वैपरीत्ये { चि(चिं)कुं(कु) } [अ] सभ्योऽर्थः वि(चिं)कुरूपः । स्मरमन्दिरान्तर्वर्तिमणिस्मारकमसभ्यम् । स तु पदेन नाभिधीयते । इतरान्वितेन पदेन नाभिधीयते । इतरान्वितचि(चिं)कुवाचकपदाभावात् । असभ्योऽर्थो भगरूपो देशभाषया ज्ञायत एव । परं सचिंकुपदप्रतिपाद्यो नास्ति । यतो भवतां मतेऽभिधायां इतरान्वितं चि(चिं)कुं(कु)पदमपेक्षितं भवेत्, तत्तु नास्ति । अस्माकं व्यञ्जनायां इतरान्वितत्वस्याभावात् । स्वरूपसता पदेनापि व्यञ्जनयाऽसभ्योऽर्थो व्यज्यत एवेति, तस्य दुष्टत्वम् । प्रकारान्तरेणापि व्यञ्जनां स्थापयति । **यदि वे(चे)ति** । अभिधया बोध्यत्वं वाच्यत्वं एवं वाचकत्वम् । एवं व्यङ्ग्यव्यञ्जकभावोऽपि । असाधुत्वं व्याकरणव्युत्पत्तिविरहः । असाधुत्वं नित्यदोषः । कथं सर्वत्र तस्य दोषत्वम् । तदुक्तम्—

> श्रुतिकट्वादयो दोषा अनित्या ये प्रदर्शिताः ।
> ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्यपाकृता(ताः) ॥१॥ [39A]

इति । कष्टत्वं त्वनित्यदोषः । यतो यत्र माधुर्यगुणो व्यज्यते तत्र कष्टत्वस्य दुष्टत्वम् । यत्र ज्वा(औ)जो गुणो व्यज्यते तत्र कष्टत्वस्यापि गुणत्वम् । यदि च व्यञ्जना न स्यात् तदा माधू(धु) र्यो(र्यौ)जोरूपगुणयोव्य(र्व्य)ङ्ग्यत्वाभावे नित्यानित्यदोषता न स्यात् ।

वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था ।

'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।

इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् ।

अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रति एकरूप एवेति नियतोऽसौ। न हि 'गतोऽस्तमर्कः इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते ।

---

अयं भावः—यदि दं(च) व्यञ्जना नास्ति तदा व्यङ्ग्यमपि नास्ति । व्यङ्ग्याभावे च तयोर्गुणदोषभाव एव न स्यादिति । **न चेति** । नित्यदोषानित्यदोषरूपविभागकरणमनुपपन्नं नास्तीत्यर्थः । एतदेवाह—**वाच्येति** । वाच्यवाचकाभावातिरेकेणाभिधाव्यतिरिक्तमपि व्यङ्ग्यव्यञ्जनास्वरूपं स्वीक्रियते, तदा माधुर्यो(र्ये) व्यङ्ग्ये कष्ट[त्व]स्य दोषत्वम् । सर्वैः सहृदयैः व्यञ्जनोप[ग]मे विभागबीजमाह—**वाच्यवाचकेत्यादि** । **क्वचिदि**ति मधुरे शृङ्गारे रसे मधुरवर्णस्यौचित्यं, माधुर्य्यव्यञ्जकत्वात् । ननु श्रुतिकटोस्तद्विरोधेन ओजसो व्यञ्जकत्वेनापकर्षकत्वात् तदाह—**कस्यचिदौचित्यमि**ति । ओजस्विषु वीरबीभत्सरौद्रेषु पुनस्तस्यौचित्यमिति । विभागव्यवस्था नित्यत्वेनेत्यर्थः । माधुर्य्या न(ना)श्रयरसपरत्वेनैव श्रुतिकटोरनित्यदोषत्वम् । क्रम(किम् ?)इत्याह । व्यञ्जनास्थापकयुक्त्यन्तरमाह—**द्वयमि**ति । पिनाकि { नाकि } न इत्यस्या[न]नुगुणत्वं अभिधातु(तुं) समानैवे(गमे)ति । महादेवे द्वयोर्नाम्नोः शक्तत्वात् व्यञ्जनास्वीकारे तु कपालिदेपन व्यञ्जनया बीभत्सत्वं व्यज्यते । तेन नु(तु) शोचनीयतोपपद्यते । पिनाकिन इत्यत्र तु न बीभत्सत्वं व्यज्यते किन्तूत्कृष्टत्वमेव । तस्य शोचनीयतानङ्गत्वमेवेति व्यञ्जनासिद्धेत्यर्थः ।

**तथा च 'गतोऽस्तमर्कः' इत्यतः सपत्नं प्रत्यवस्कन्दनावसर इति अभिसरणमुपक्रम्यतामिति प्राप्तप्रायस्ते प्रेयानिति कर्मकरणान्निवर्तामहे इति सांध्यो विधिरुपक्रम्यतामिति दूरं मा गा इति सुरभयो गृहं प्रवेश्यन्तामिति संतापोऽधुना न भवतीति विक्रेयवस्तूनि संह्रियन्तामिति नागतोऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थः तत्र तत्र प्रतिभाति ।**

**वाच्यव्यङ्ग्ययोः निःशेषेत्यादौ निषेधविध्यात्मना**

---

पुनर्व्यञ्जनासाधकयुक्त्यन्तरमाह—**वाच्य** इति । **नियत** इति । एकरूप एवेत्यर्थः । व्यङ्ग्योऽर्थस्तु नानारूप इति भावः । एतदेवाह—**न** हीति । प्रकृते वाच्योऽर्थः सूर्यास्तमनं, स च एव प्रतीयमान इति व्यङ्ग्योऽर्थः पुनः प्रकरणवशात् अर्थप्रकरणमित्यादिनोक्तरूपात्, प्रतिपत्तृविशेषात् देशकालादीनामपीदमुपलक्षणं, अनेकधा भवतीत्यन्वयः । मा(ना)नात्वं तस्य दर्शयति । **तथा चे**त्यादिना । सपत्नमिति वैरिप्रकरणात् सपत्नं प्रत्यवस्कन्दनावसरो व्यङ्ग्य इत्यर्थः । यदि व्यभिचारिणी प्रतिपत्री तदाऽभिसरणं सङ्केतस्थलगमनं व्यङ्ग्यम् । यदि सखी वक्त्री तदा प्रियागमन(नं) व्यङ्ग्यं, कुतो, वाक्यात् पूर्वस्मादेव गतोऽस्तमितिरूपात् । यदि भाटकेन मूल्येन कर्मकराः प्रतिपत्तारस्तदा कर्मकरणान्निर्व(व)र्तनं व्यङ्ग्यमिति । यदि च ब्राह्मणाः प्रतिपत्तारस्तदा सन्ध्याविधिरुपक्रम्यतामिति व्यङ्ग्यम् । यदा द्रव्यवान् प्रतिपत्ता तदा तं दूरदेशेऽगमनमेव व्यङ्ग्यम् । दूरं मा गा इति वचनार्थः । यदि च गोरक्षकाः प्रतिपत्तारस्तदा सुरभयो गृहं प्रवेश्यन्तामिति व्यङ्ग्यम् । यदि निदाघार्तः प्रतिपत्ता तदा सन्तापशमनं व्यङ्ग्यम् । यदि च वणिजः प्रतिपत्तारस्तदा विक्रेयेत्यादिव्यङ्ग्यम् । यदि च जारो वक्ता तदाऽनागतो[ऽ]द्य प्रेयानिति व्यङ्ग्य इत्यादयोऽनन्ता अर्था व्यङ्ग्याः सन्ति । ततस्तत्र २ व्यङ्ग्योऽर्थो भिन्नः प्रतिपा(भा)तीत्यर्थः ।

पुनरपि व्यञ्जनासाधे(धि)कां युक्त्यन्तरमाह—**वाच्यव्यङ्ग्ययोरि**ति । निःशेषेत्यादौ वाच्योऽर्थो निषेधो व्यङ्ग्योऽर्थो विधिरिति तयोर्महदन्तरम् । पुनर्व्यञ्जनासाधने युक्ता(क्त्य)न्तर[माह] । **मात्सर्यमि**ति । अत्र तु वाच्योर्थः

"मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥१३३॥"

इत्यादौ संशयशान्तशृङ्गार्यन्यतरगतनिश्चयरूपेण

"कथमवनिप दर्पो यन्निशातासिधारा-
दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ १३४ ॥

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य,

---

संशयरूप एक एव व्यङ्ग्योऽर्थस्तु शृङ्गारोऽपि शान्तोऽपीति भेदः । द्वितीयार्द्धे पूर्वचरणे शान्तो द्वितीये चरणे शृङ्गार इत्यर्थः । मात्सर्यं परगुणेषु द्वेषः । कार्यं कर्तव्यं, आर्या मान्याः, वस्तु तत्त्वं, मर्यादासयुक्तिकं कथनमुदाहरणं , जघनकण्टकौ नितम्बौ, संशयेन सन्देहहेतूपस्थितकोटिद्वयस्वरूपेण , शान्त-शृङ्गार्य्यन्यतरगतोऽन्यतरविषयको यो निश्चयः शान्तस्य भूधराणां नितम्बः शृङ्गारिणस्तु विलासिनीनामितिरूपः, अभिधाया अविषयत्वादयमर्थो व्यङ्ग्यः । व्यञ्जनासाधकयुक्तिमध्ये युक्त्यन्तरमाह—**कथमिति** । अवतीत्यवनिस्तामपि पातीति अवनिपस्तत्सम्बोधनं, हे अवनिप, कथं ते { त } दर्शो(र्पो) यतो द्विषां श्रीस्त्वया { वैरिणो गृहीतारमपि श्री } गृं(गृ)हीता । यतोऽन्यनायिका-संरक्षणमनुचितं भवति । यदि च त्वया तेषां श्रीर्गृहीतास्तैः त्वदीया कीर्तिस्त्रि-दिवं नीता, ते तु मृताः, स्वर्गं गतास्तदीयां कीर्तिं गृहीत्वैव गता इत्यन्वयः । अत्र वाच्योऽर्थो निन्दा । व्यङ्ग्योऽर्थः स्तुतिरिति तयोर्भेदः । अयमर्थः । कश्चित् कश्चिद्राजानं प्रत्याह—हे राजन् ! त्वया निशातया तीक्ष्णया असि-धारया दलनं खण्डनं तेन छिन्नशिरसां शत्रूणां श्रीः स्वीकृतेति । यत् अयं कथं दर्पो[ऽ]पितु विपद्धयो(तो)ऽर्थो जातः । तमेवाह, नि[ह]तारेर्मारितशत्रो-रपि तव वल्लभाऽसौ कीर्तिरपगताङ्गैर्मृतैरेभिः शत्रुभिस्त्रिदिवं स्वर्गं न नीता, नीते-(तै)व । अत्र मृतैरपि शत्रुभिर्वल्लभा स्वर्गं नीतेति निन्दा वाच्या स्तुतिर्व्यङ्ग्येति ।

**पूर्वपश्चाद्भावेन प्रतीतेः कालस्य, शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन च आश्रयस्य, शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य, बोद्धृमात्रविदग्धव्यपदेशयोः, प्रतीतिमात्रचमत्कृत्योश्च करणात् कार्यस्य, गतोऽस्तमर्क इत्यादौ प्रदर्शितनयेन संख्यायाः,**

**"कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।**
**सभमरपडमग्घाइणि वारिअवामे सहसु एण्हिं ॥" ॥१३५॥**

---

वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽप्युत्तरत्र सम्बन्धः । पूर्व(र्वं) वाच्यं प्रतीयते पश्चाद्व्यङ्ग्यमिति । वाच्यव्यङ्ग्ययोः कालस्या(स्य)भेदेऽपि, वाच्यं शब्दाश्रयमेव व्यङ्ग्यं तु तदेकदेशाश्रयं, अर्थाश्रयं वर्णरचनाद्याश्रयं च शब्दशब्दैकदेशादेरपि व्यञ्जकत्वस्य प्रतिपादितत्वादिति ।

**शब्दाश्रयत्वेनेति** । अभिधा शब्दाश्रया व्यञ्जना तु शब्दैकदेशशब्दार्थवर्णघटनाकाकूदात्तानुदात्तप्लुतैकवचनद्विवचनबहुवचनाद्याश्रया । तथा चाऽभिधाव्यञ्जनयोराश्रयभेदादपि भेदः । अथानयोर्निमित्तभेदमाह---**शब्दार्थेति** । वाच्यार्थावबोधस्तु शब्दार्थशासनज्ञानमात्रेण भवति, गृहीतसङ्केतानुशिष्टशब्दमात्रेणेत्यर्थः । व्यङ्ग्यार्थावबोधस्तु प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन च भवति । अयमर्थः । प्रकरणं प्रतिभानैर्मल्यं च व्यङ्ग्यार्थावबोधि(धा)पेक्षितां(ते) भवतीति (त इति)। अथानयोः श्रोतृभेदमाह—वाच्यार्थे यः कश्चन श्रोता भवति व्यङ्ग्यार्थे तु विदग्ध एव श्रोतेति भेदः । अर्थकार्यभेदमाह---प्रतीति(त)वाच्यार्थे प्रतीतिरभिधायाः कार्यं, व्यञ्जनायाश्चप(म)कृ(त्कृ)तित्वास्वादकार्यभेदोऽप्यनयोर्नियामकः ।

अथानयोः संख्याभेदमाह । **गतोऽस्तमर्क इत्यादौ** । वाच्यार्थस्त्वैक एव व्यङ्ग्यार्थस्त्वनेकधेति संख्याभेदः । अथानयोर्बोद्धव्यभेदमाह—काचिद्विदग्धा सखी काञ्चिदविनीतामुपपतिखण्डिताधरां नायिकां तत्पतिसन्निधौ तमपश्यन्ती नायकवाच्यनिवारणायाह – **कस्स त्ति** ।

[कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम् ॥]

इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत् क्वचिदपि नीलपीतादौ भेदो न स्यात् ।

उक्तं हि "अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च " इति ।

---

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानी[म्] ॥

वारिते कर्मणि वामा विरुद्धाचारिणी । वारितं सभ्रमरपद्माघ्राणं प्रतिदंशकरणं खि(षि)ड्गाधरदशनं चावश्यमाचरसि । सहस्र(स्व) पतिक्रोधनियन्त्रणमनुभव इदानीमविचारदशायां प्रतिनायकस्यासन्निधौ तत्सर्वं सुखाय भविष्यति । सखीत्यादि । वक्त्र्याः सखी नायिका सा वाच्यस्य विषयः । सैव कान्ता यस्येति तत्कान्तो गृहपतिरियं भ्रमरेण द(द)ष्टाधरा न किन्तु खि(षि)ड्गेनेति व्यङ्ग्यस्याऽयं विषयः । आदिपदाद्(दु)पपत्यादिग्रहणम् । पुनरेवं मा कृथा इत्युपपत्तौ युष्मासु काप्येवं समाधानेन क्षमा तस्माद्यूयमविदग्धा इति ।सख्यंतरेषु सखीषु मध्ये, मयैवेत्थं समर्थितमिति । कृतोपकारामप्येवं समाश्वसिहीति नायिकां प्रतीति विषयनानात्वम् । तथा वा(चा)द्य मया यथा कथञ्चित् समाहितमतः परं सावधानतया त्वया भवितव्यमिति । नायिकाविषयमित्यादिप्रकारेण वाच्यव्यङ्ग्ययोर्विषयस्य च भेदेऽपि स्वरूपभेदात् कारणभेदात् कार्यभेदात् संख्याभेदाद्विषयभेदाच्च वाच्यव्यङ्ग्ययोरत्यन्तं भेदः ।

यदि स्पष्टमनयोर्भेदे सत्यपि भेदो नाङ्गीक्रियते तदा नीलपीतादेरपि भेदो न स्यादित्याह । तत् क्वचिदपीति । यदि अभिधाव्यञ्जनयोर्नानाभेदविषयेषु सत्स्वपि भेदो न स्यात्तदा नीलपीतादेरपि भेदो न स्यात् । तुल्यन्यायत्वात् । पूर्वेषु भेदनिमित्तेषु तयोरवश्यं भेदोऽङ्गीकार्य इति भावः । सम्मतिमाह । उक्तं हीति । भेदोऽन्योन्याभावः । विरुद्धस्य तदवृत्तेर्धर्मस्याध्यासो ज्ञानं भेद-

**वाचकानामर्थापेक्षा व्यञ्जकानां तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम् । किं च वाणीरकुडंगेत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूपे एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयतामवलम्बतामिति ।**

---

हेतुरन्योन्याभावज्ञापकः । अयमेव घटपटयोर्भेदो जलाहरणशीतत्राणादिविरुद्धधर्म(र्मा)ध्यासोः(सो) यथा घटपटयोर्घटत्वपटत्वे परस्परविरुद्धे । अयमेव हेतुर्यत् कारणभेदश्चेत्यर्थः । भेदहेतुः कारणभेदो भेदकः,यथा घटपटयोरपि कारणभेदोऽपि भेदक इत्यर्थः ।

पुनर्व्यञ्जनासाधकयुक्त्यन्तरमाह—**वाचकाना**मिति । गृहीतसङ्केतानां तमेवार्थं वाचका बोधयन्तीति । तेषामर्थापेक्षित्वं असदेव पावनत्वादिकं ते बोधयन्तीति । व्यञ्जकानां न सङ्केतापेक्षा इति तयोर्भेदः । शब्दानां(ना)मर्थापेक्षेति । योऽर्थो यस्मिन् वस्तुनि तिष्ठति स शब्देन प्रतिपादयितुं शक्यते । व्यञ्जकानां तु योऽर्थो यत्र शब्दे नास्ति सो(ऽ)प्यर्थस्तत्र बोद्धुं शक्यते, यथा घोषे पावनत्वाभावेऽपि पावनत्वं बोधयितुं शक्यते इत्यनयोर्भेदः । यत्परः शब्दः स शब्दार्थ इत्यनेन पुनर्दूषयन्नाह—**वाणीरेत्यादि** । वेतसकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानीत्यादौ वाच्यार्थप्रतीतिपुरःसरा प्रतीयमानार्थप्रतीतिः । तदनन्तरं तृतीयकक्षायां वाच्यं प्राधान्यात् स्वरूप एव विश्राम्यति । वाच्योऽर्थो विधेयतायां तात्पर्यमपेक्षते । व्यङ्ग्यार्थस्त्वतात्पर्यविषयीभूतोऽपि प्रतीतिपथमवतरन् विधेयतापथमवतरन् कस्य व्यापारस्य विषयतामवलम्बतामित्यन्वयः । अयमत्रार्थः—वाणीरेत्यादौ गुणीभूते व्यङ्ग्ये, यदि तात्पर्यं प्रकृतेऽर्थे तदा वाच्योऽर्थो विधेयः । व्यङ्ग्यार्थे तु तात्पर्याभावेऽपि विधेयता भवतीति भेदः । यस्य चमत्कारित्वं तस्यैव प्राधान्यमिति ज्ञेयम् । वध्वाः सीदन्त्यङ्गानीत्यादौ वाच्यार्थपुरःसरार्थप्रतीतिपुरस्सरा प्रतीयमानार्थप्रतीतिः । तदनन्तरं तृतीयकक्षायां वाच्या(च्यं) { त } प्राधान्यात्

**ननु 'रामोऽस्मि सर्वं सहे' इति 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्' इति 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते विशेषव्यपदेशहेतुश्च भवति तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम ।**

---

स्वरूप एव विश्राम्यति । तत्र गुणीभूतं व्यङ्ग्यम् । यस्य(स्तु) तस्मिन् काव्येऽतात्पर्यभूतः शब्दानभिधेयो रसादिस्वरूपोऽर्थः प्रतीयमानः कस्य व्यापारस्य विषयतामवलम्बतां व्यञ्जकव्यापारव्यतिरेकेणेति । शेषो व्यञ्जनव्यापारस्यैव विषय इत्यर्थः । अतो भिन्नं वाचकत्वाद्व्यञ्जकत्वमिति भावः ।

ननु यथा व्यङ्ग्योऽर्थः प्रस्तावादिबला[द]नेकविधिः(धः) तथा लक्ष्योऽर्थोऽपीति, लक्ष(क्ष्या) { वा } र्थ एव व्यङ्ग्यस्यान्तर्भावो भविष्यतीति शङ्कते— **नन्विति** । तथा वा(चा)भिधातो व्यञ्जनाया भेदेऽपि लक्षणातो भेदो न भवतीति पद्येनोदाहरति । **स्निग्धेति** ।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद् बलाका घनाः,
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे ।
वैदेही ति(तु) कथं भविष्यति हहा हा देवी धीरा भव ॥

इति श्लोके रामोऽस्मीत्यत्र कठिनहृदयत्वं वनवासादिदुःखभाजनत्वं चेत्यादिरनन्तो लक्ष्योऽर्थः । तथा —

प्रत्याख्यातरूपः(चेः), (or न रुचः ?)कृतं समुचितं क्रूरेण ते राक्षसाः(रक्षसा)
सोढुं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः (दां) साक्षिणी(णा)
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥१॥

इति २ श्लोकेन रामेण प्रियजीवितेनेत्यत्र कातरत्वं कैतवस्नेहत्वं इत्यादिर्लक्ष्योऽर्थः । तथा रामोऽसावित्यत्र सर्वलोकातिशायित्वं खरदूषणादिराक्षस-

**उच्यते । लक्षणीयस्यार्थस्य नानात्वेऽपि अनेकार्थशब्दाभिधेयवन्नियतत्वमेव न खलु मुख्येनार्थेनानियतसंबन्धो लक्षयितुं शक्यते ।**

**प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियतसंबन्धः अनियतसंबन्धः संबद्धसंबन्धश्च द्योत्यते ।**

**न च**

**"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।**
**मा पहिअ रत्तिअन्धअ सेज्जाए मह णिमज्जहिसि ॥"॥१३६॥**

---

हिंसानिपुणत्वं लक्ष्योऽर्थ, इति लक्ष्योऽर्थो नानाविध इत्यर्थस्तथा व्यङ्ग्यबोद्धुर्विदग्ध इति व्यपदेश इत्यपि समानम् । अतो व्यङ्ग्यं लक्ष्येऽन्तर्भवतीति न व्यङ्ग्यं पृथगित्याशङ्कार्थ(र्थः) । अत्रायं स्पष्टोऽर्थः ।

प्रथमपद्ये दुःखसहिष्णुत्वं लक्ष्यं, द्वितीये तु निःस्नेहत्वं लक्ष्यं, तृतीये विविधपुण्याश्रयत्वं लक्ष्यं, इति लक्ष्यस्याप्यर्थस्य नानात्वं विशेषव्यपदेशश्चेति । अर्थान्तरसंक्रमितेत्यादि विशेषव्यवहारहेतुर्लक्ष्यो वर्तते । तदवगमश्च शब्दार्था(र्थयोः) यत् प्रकरणादिसापेक्षश्चेति । तथा च तेष्वर्थेषु लक्षणैवास्तु किं नूतनेन व्यञ्जनाव्यापारेणेत्याशङ्का । स्पष्टोऽर्थः । व्यङ्ग्यलक्ष्ययोर्भेदं दर्शयन् समाधत्ते **लक्षणीयस्ये**ति । व्यङ्ग्यवत् लक्षणीयो नानाविधो गोशब्दो(ब्द)वन्नियतसम्बन्ध एव यथा गङ्गायां घोष इत्यादौ मुख्येन गङ्गाशब्दार्थेन तटादिर्लक्ष्यते न तथा पावनत्वादिरपि । अनियतसम्बन्धो लक्षयितुं शक्यत इति । तथा च लक्षणीयोऽप्यर्थो(ऽ)नियतरूप एवानेकार्थशब्दवत् । विशदयति न खल्विति । मुख्येन वाच्यार्थेन नियतसम्बन्धमेव लक्षयितुं शक्यत इति । यथा प्रवाहेण तीरं नियतसम्बन्धमेव लक्ष्यते । ननु नानाविधमनियतसम्बन्धं लक्ष्यते । **प्रतीयमान** इति । व्यङ्ग्योऽर्थस्त्वनेकविध एव कोऽपि नियतसम्बन्धः १ कोऽप्यनियतसम्बन्धः २ कोऽपि [सम्बद्ध]सम्बन्धश्च ३ द्योतते । आद्यो यथा सिंहो माणवक इत्यत्र शूरत्वं नियतसम्बन्धम् । द्वितीयो यथा गङ्गायां घोष इत्यत्र पावनत्वं व्यङ्ग्यमनियतसम्बन्धम् । सर्वत्र घोषस्य पुरुषेषु पावनत्वाभावात् । तृतीयं यथा द्रविणदानार्हत्वं सम्बन्ध(द्ध)सम्बद्ध(न्ध)म् ।

[श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय ।
मा पथिक रात्र्यन्ध शय्यायामावयोर्निमङ्क्षयसि ॥ ]

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः । तत्कथमत्र लक्षणा । लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यमिति प्रतिपादितम् ।

यथा च समयसव्यपेक्षा अभिधा तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा अत एवाभिधापुच्छभूता सेत्याहुः ।

---

ये च पावनीभूतास्तेषामेव द्रविणदानं योग्यम् । **विवक्षिते**ति । एकोऽविवक्षितेति । एकोऽविवक्षितवाच्या(च्य)ध्वनिरपरस्तु विवक्षितवाच्यः । तथा विवक्षितं वाच्यपरमिति वचनात् तत्र ध्वनौ मुख्यार्थबाधाभावे लक्षणाऽभावेन तत्र याऽर्थप्रतीतिः सा व्यञ्जनां विना न भवतीत्यर्थः । विवक्षितं वाच्यं यत्रान्यपर(रं)रसादिपरम् । तत्र वाच्येन रसः पोषितः परं वाच्योऽर्थो बोधितो न, तत्र लक्षणा नास्तीति । ततो लक्षणातो व्यञ्जनाया भेदः सिद्ध इत्यर्थः । इदं काव्यं ध्वनिभूतमस्ति । अत्र मुख्यार्थबाधो नास्तीतिकृत्वा लक्षणा नास्ति । तथा च योऽर्थोऽत्र प्रतीयते { र } स(सः)व्यञ्जनाव्यापारेणैव ।

ननु यद्यप्यत्र मुख्यार्थात्वया(र्थस्या)ऽनुपपत्तिर्नास्ति तथाऽप्यत्र तात्पर्यानुपपत्त्या लक्षणास्त्वित्यत आह—**लक्षणायामपी**ति । लक्षणायामवश्यं व्यङ्ग्यमपेक्षितम् । यतः प्रयोजनाभावे लक्षणैव न स्यादिति पूर्वं प्रपञ्चितम् । अपि च लक्षणायां मुख्यार्थबाधादित्रयं सहकारि व्यञ्जनायां तु तन्नास्तीति भेदः । **अत एवे**ति । यतो लक्षणाशक्यसम्बन्धरूपा अत एवाभिधापुच्छभूता । यत्राभिधा वर्तते तत्सम्बन्धिनी एव लक्षणेत्याहुः । अयमर्थः । व्यञ्जना लक्षणायां नान्तर्भवति । व्यञ्जनाया लक्षणाधीनत्वात् । यत्र च लक्षणा भवति तत्रावश्यं व्यञ्जना तिष्ठति यथा गङ्गायां घोष इत्यत्र लक्षणा । तीरेऽवश्यं शैत्यपावनत्वादा व्यञ्जनेत्यर्थः ।

ननु यत्र लक्षणा नास्ति तत्रा(त्र) { पि } व्यञ्जनाऽपि नास्तीति कृत्वा लक्षणात्मकमेव ध्वननमस्तु इत्यभिधालक्षणयोरनुगमनमस्तीत्याह **न चे**ति । तद्ध्वननं

न च लक्षणात्मकमेव ध्वननम् तदनुगमेन तस्य दर्शनात्। न च तदनुगतमेव अभिधावलम्बनेनापि तस्य भावात्। न चोभयानुसार्येव अवाचकवर्णानुसारेणापि तस्य दृष्टेः न च शब्दानुसार्येव अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेरिति अभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायो व्यापारोऽनपह्नवनीय एव।

---

लक्षणानुगत(तं), लक्षणाया अभावेऽवर्तमानमिति। न चेत्यर्थः। लक्षणाव्याप्यं यदि ध्वननमङ्गीक्रियते तदा लक्षणात्मकमेव कुतो न भवतीत्यभिप्रायः। उत्तरमाह—**अभिधेति**। तथा च यत्र लक्षणा नास्ति तत्राप्यभिधाऽवलम्बनेन वर्तमानं ध्वननमपि। न **चोभयेति**। लक्षणाभिधयोरप्यनुगतं ध्वननं न भवतीत्यप्याह—**अवाचकेति**। तस्य व्यञ्जनस्यावाचका ये वर्णा हुंकारादयस्तैरपि क्रोधविशेषो व्यज्यत इत्यर्थः। ललितपरुषादिवर्णोऽनुप्रासस्याभिधानानुपयोगिनोऽपि रसं प्रति व्यञ्जकत्वदर्शनात्। न तु ध्वननमुभयानुगतमेवेत्यर्थः। ननु व्यञ्जनं शब्दानुसार्य्येव भवतीत्यत आह—**न चेति**। । **नेत्रवि(त्रि)भागेति**। तेनापि कश्चिदर्थो व्यज्यत इत्यर्थः। कटाक्षेणाभिलाषव्यञ्जनात्। शब्दादन्यत्र कथं व्यापार इत्याह—प्रसिद्धेरिति। अनया कटाक्षेणाभिलाषो व्यञ्जित इत्यादि। **अभिधेति**। अभिधावृत्तिर्मतान्तरे तात्पर्याख्याऽपि वृत्तिरस्ति। अथ च लक्षणाऽपि वृत्तिरस्ति। एतद्वृत्तित्रयभिन्ना व्यञ्जनाख्यावृत्तिरस्ति। एतत्त्रयभिन्नावृत्तिर्व्यञ्जना स्वीकार्या इत्यर्थः। इदं त्रयं यथा शब्दस्य मुख्यो व्यापारोऽभिधा १ वाच्या(क्या)र्थव्यापारस्तात्पर्यं २ लक्षणोयव्यापारो लक्षणा ३ एतत्त्रयातिवर्ती व्यञ्जनाव्यापारश्चतुर्थोऽङ्गीकर्तव्य इत्यर्थः।

उपसंहरति इति तात्पर्यवृत्तेर्धर्मिग्राहकमानेन संसर्गोऽनियतत्वादुपसंहरति। अतिक्रम्य वर्तत इत्यतिवर्ती। तेषां स्वाधीनकरणादादिपदाद् व्यञ्जनावगमादिपरिग्रहः। व्यञ्जनायाः सम्बन्धीं(न्धि)नियमः क्व दृष्ट इत्यर्थः।

अत्ता एत्थ णुमज्जइ एत्थ अहं दिवसयं पलोएहि।
मा पहिय रत्तिअंधया सज्जाए महणमज्जहिसि॥[40]

तत्र "अत्ता एत्थ" इत्यादौ नियतसंबन्धः "कस्स व ण होइ रोसो" इत्यादौ अनियतसंबन्धः ।

"विवरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठं ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ॥" ॥१३७॥

---

इत्यादौ । अत्र मुख्यार्थबाधविरहमुद्भावयति । अत्ता श्वश्रूरत्र निमज्जति अत्राहं दिवसकं व्याप्य विलोकया(य) { मः }। पथिक राअ(रात्र्य)न्धक । शय्यायामावयोर्निमंक्ष्यसि । स्वयंदूत्या इयं(य)मुक्तिः । निमज्जति जरठत्वेन निष्पन्दं शेते । **अत्राहमिति** । निमज्जति क्रिया { तन } न्वयेन सज्जा स्थास्यामीत्यर्थः । **दिवसकमिति** । निन्दायां कः । साचार(व)योः श्रेयःप्रतिबन्धकत्वात् प्रलोकय । प्रलोकनविनोदेनैव दिवसं गमयावः । महण्वित्यावयोरर्थे निपातः । अन्यथा स्वमात्रोट्टंकनेन रहस्यप्रकाशः स्यात् इति **लोठ(च)नकारः**[41] । अत्र गृहे श्वश्रूरहं [च] । स(सा)श्वश्रूश्चातिजरठत्वेन बधिरा । निष्पन्दा(न्दो)जनान्तरसञ्चारो नास्तीति यथेच्छं व्यवहरेति ध्वनिः व्यङ्ग्यपक्षे माशब्दोऽन्धत्वनिषेधे { अ } रात्र्यन्धपथिक, ममैव शय्यायां पतिष्यसीत्यर्थः । न बाधो, नान्वयानुपपत्तिः, तात्पर्यविषयान्वयानुपपत्तिः, तात्पर्यविषयान्वया(यो) { नु } पपत्तिरस्त्येवेत्याह—**लक्षणायामपीति** । प्रतिपादितं लक्षणायां ग्रन्थे प्रयोजनवत्यां तस्यां प्रयोजनस्य व्यञ्जनव्यापारगम्यत्वाभिधानेन, लक्षणा बीजसामग्र्या एव विप्रतिपत्तिमाह—**यथा चेति** । समयः सङ्केतः । मुख्यार्थबाधे प्रयोजनप्रतिपत्त्याय(यं)मुख्यार्थसम्बन्धी बोद्धव्य इति लक्षणा व्युत्पादनम् । तदाह—**समयविशेषेति** । मुख्यार्थबाधादिना विशेषणावि(द्वि)शेषः । न चैवं व्यञ्जनायां सामान्यविशेषसङ्केतरहितस्या[पि] बोधनात् । अत्र वक्त्री पुंश्चली, उपभोगो व्यङ्ग्यस्तेन सह पुंश्चल्या नियत एव सम्बन्धः ।

**कस्स वेति** । अत्रानियतसम्बन्धो नायिकासख्योः, प्रति व्यङ्ग्यस्यानेकत्वात् । नायिकाया अभयं सख्या प्रतारणज्ञानमिति विदग्धां प्रति स्वोत्कर्ष इति व्यङ्ग्यस्य नानात्वम् । तृतीयमाह—**विवरीए(अ)(इ)त्यादि**[42] । विपरीतरते

[विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ।।]

इत्यादौ संबद्धसंबन्धः ।

अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते तन्निमीलनेन सूर्यास्तमयः तेन पद्मस्य संकोचः ततो ब्रह्मणः स्थगनम् तत्र सति गोप्याङ्गस्यादर्शनेन अनिर्यन्त्रणं निधुवनविलसितमिति ।

'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः वाक्यमेव च वाचकम्' इति येऽप्याहुः तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव ।

---

उपरि सुरत इत्यर्थः । लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थं हरेर्दक्षिणनयनं रसाकुला झटित्याच्छादयति । रसाकुला समुद्रिक्तमन्मथा नयनाच्छादनहस्तप्राहारा । तर्हे अर्थेन मोषणवत् न चीतीर्थदुःखदक्षिणादीर्घ इति सूत्रेण क्षशब्दस्य ह्रस्वे, हे दक्षिणस्येति सूत्रेण दीर्घत्वे दाहिणमिति भवति । छदेर्नुमनुमो बालढंकयत्वभसन्तु मा इति सूत्रेण छदर्ढका देवाः बालदलोदतृष्वित पत्वे । अत्र सम्बद्धसम्बन्धत्वं व्यङ्ग्यस्य दर्शयति—**अत्र हीति** । अत्र सम्बद्धस्य व्यङ्ग्यस्यार्थसा(स्य) सूर्यात्मकस्य । स च बोद्धोः(द्धुः) परो व्यङ्ग्योऽर्थः सूर्यास्तमयरूपः । तस्य च पद्मसङ्कोचरूपोऽपरः सम्बद्धः । ततो ब्रह्मणः स्थगनम् । तस्मिंश्च सति गोप्यांगस्यादर्शनेन निर्लज्जा(ज्ज)रतप्रवृत्तिरित्यर्थः । यतो विष्णोर्दक्षिणनयनं सूर्यः प्रसिद्ध इतिकृत्वा सम्बन्ध(द्ध)सम्बन्धः । संम्बन्ध(द्ध)स्य सम्बन्धो निर्वाह्यनिर्वाहकतया सन्तानीभूय व्यङ्ग्य इत्यर्थः । **हरिपदेनेति** । हरेर्दक्षिणवामनयनयोः सूर्यचन्द्रात्मकत्वेन प्रसिद्धत्वात् ।[4a] **तन्नियमे(मील)नेति** नियम(मील)नमाच्छादनं, अस्तमयोऽप्रकाशः, सङ्कोचो मुद्रणं स्थगनं पिधानं, तत्र स्थगनेऽदर्शनेन ब्रह्मणो[ऽ]निय(र्य)त्रणमाश्वस्तं(स्त)[त्वम्] ।

ननु वेदान्तिमते जहदजहत्सा(स्वा)र्थलक्षणाऽस्ति सैव व्यञ्जनास्तु कृतमधिकया तयेति वेदान्तिमतमाक्षिपति । **अखण्डेति** । अथवा घटमानयेत्यखण्ड-

वाक्यादखण्डघटत्वकानयनप्रतीतौ शक्तेरेव प्रभुत्वेन किं लक्षणाव्यञ्जनाभ्याम् । तयोः खण्डश प्रत्यायनेनाऽनुमितेरिति वेदान्तिमतमाशङ्क्याह—**अखण्डेति** । अथवा मासा(मता)न्तरं **टीकान्तरे**[44] यथा । ननु सत्य(त्यं)ज्ञानमनन्तं ब्रह्मेत्यादौ धर्मिधर्मभावाभावात् अखण्डः परब्रह्मात्मको वाक्यार्थ एव वाच्योः(च्यः),अखण्डवाक्यमेव वाचकमिति ब्रह्मवादिनः औपनिषदाः शब्दब्रह्मवादिनश्च भर्तृहरिप्रभृतयश्च कथयन्ति । अतो विध्यादिर्व्यङ्ग्यो वाच्य एवेति । शङ्कते **अखण्डेति** । अखण्डचा निरातङ्कवि(नि)ग्रा(र्ग्रा)ह्यो वाक्यार्थ एव वाच्यः अखण्डवाक्यमेव वाचकमित्यर्थः । तथा वा(चा)खण्डबुद्धिनिर्ग्राह्यो[ऽ]खण्डबुद्धिविषयो निर्विकल्पकविषय इति यावत् । स एव वाक्यार्थो ब्रह्मरूपः । वाक्यमेव वाक्य(चक)म् । जहत्स्वार्थलक्षणया बोधमि(इ)त्यर्थः । तथा च ब्रह्मबोधो लक्षणयैव भविष्यतीति किं व्यञ्जनयेत्याशङ्कार्थः । शान्तरसाभिनिविष्टानां प्रचुरचमत्कारस्योपलभ्यमानत्वेन तत्र ब्रह्मज्ञानं लक्षणयैव भव(वे)त् सिद्धान्तानुसारेण । माऽस्तु तत्र व्यञ्जना । तथाप्यविद्य(द्या)पदपतितैरित्यस्य व्याख्यानं व्यवहारमार्गा(र्ग)प्रविष्टैः पदपदार्थकल्पनानुसारेण पूर्वोक्तोदाहरणेषु विध्यादिष्वर्थेषु व्यञ्जनं विना न कापि गतिरिति समुदायार्थः । तथा चायमर्थः । तैरपि देशकालावच्छेदेनाशेषव्यवहर्तुनि(मि)ष्टतया कल्पितपदपदार्थसंश्रयेण वाच्यवाचककल्पना तैरपि क्रियत एवेति तन्मतेऽपि शब्दस्यार्थान्तरप्रतीतौ व्यञ्जकत्वमेवाङ्गीकर्तव्यमिति सिद्धान्तार्थः । अपि(वि)द्यापदपतितैरविद्यापा(प)दग्राहिभिस्तदवलंबनं विना व्यवहारानुपपत्तेः । सा हि घटमानयेति घटं नयेति शब्दाभ्यां घटस्यानयननयनयोर्व्यवहारयति । अनयोर्वाक्ययोरखण्डत्वेनाविशेषात् व्यवहारवैजात्यं न स्यादिति पदपदार्थयोर्वृत्तिरङ्गीकार्या । भाववृत्तिः(त्ति)सङ्केतामु (नु)क्तिमुख्यार्थबाधादिभिर्लक्षणा तयोरसाध्ये व्यञ्जनैवेति तैरित्यादिसिद्धान्तप्रतीकार्थः । आवापोद्वापाभ्यामिदं पदमत्रार्थे बोधकं नापरत्रेति पदार्थविभागकल्पना कर्तव्यैवेत्यावश्या(श्य) [का] र्थः । अन्यथा व्यवहारवे(वै)जात्यानुपपत्तेः ।

**उक्तोदाहरणादाविति** । उक्तं प्रदर्शितं आदिपदा[द]नुक्तपरिग्रहः व्यङ्ग्य एव । वादिविप्रतिपत्तीर्ने(र्नि)रस्य व्यवस्थापित इत्यर्थः ।

**ननु वाच्यादसंबद्धं तावन्न प्रतीयते यतः कुतश्चित् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात् ।**

**एवं च संबन्धात् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत् तद्रूपः पर्यवस्यति ।**

---

अथ व्यङ्ग्यबोधोऽनुमानेनैव भविष्यति किं व्यञ्जनयेत्याक्षिपति । **नन्विति** । आशङ्कार्थो यथा व्यञ्जकत्वं शब्दानां गमकत्वं वाच्यार्थप्रतीतिपूर्विका व्यङ्ग्यार्थप्रतीतिः, वाच्योऽर्थो लिङ्गरूपो व्यङ्ग्योऽर्थो लिङ्गिरूप इति व्यङ्ग्यव्यञ्जकभावो लिङ्गलिङ्गिभाव एवेति [+4A]**व्यक्तिविवेककरे(कार)** मते नैयायिकमताशंकार्थः । नैयायिका इत्थमत्र प्रत्यवतिष्ठन्ते यथा वाच्यार्थव्यङ्ग्यार्थयोर्ज्ञाप्यज्ञापकभावो भवद्भिरभ्युपेयत एव । तथा चानुमानेन तव सिद्धौ किं व्यञ्जनया, वृत्तेः शब्दपरिकरत्वादनुमितावशब्दप्रामाण्यादिति वाच्यादित्यादिना शङ्कते। नैयायिकः वाच्यादर्थादसम्बद्धं वस्तु न प्रतीयते असम्बद्धमपि यदि प्रतीयते तदा यतः कुतश्चिच्छब्दाद्यस्य कस्यचिदर्थस्य प्रतीति(तिः) स्यादित्यतिप्रसङ्गमाह—**यतः कुत** इति । वाच्यसम्बद्धस्यैव प्रतीतिरस्तु प्रकृते किमागतं तत्राह—**एवं चेति** । तथा च व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धे व्याप्त्यभावेन भवतीति व्याप्तिरवश्यं वक्तव्या सम्बन्धादिति । सम्बन्धमात्राद् व्यभिचारिसाधारणात् व्याप्तिर्न भवति ततोऽनुमितावश्यं व्याप्तिः कारणत्वेनाङ्गीकार्येत्याह **अप्रतिबन्ध** इति । प्रतिबन्धो व्याप्तिः, अप्रतिबन्धो व्याप्त्यभावस्ततो व्याप्तत्वेनेत्यनेन सपक्षसत्त्वं, नियतेत्यनेन विपक्षाद् व्यावृत्तिः धर्मिनिष्ठत्वेनेत्यनेन पक्षधर्मत्वमुक्तम् । अथवा व्याप्तत्वेनैव पक्षधर्मत्वं सपक्षे सत्त्वं च दर्शितम् । नियतेत्यादिपदेन विपक्षाद् व्यावृत्तिस्तद्रूपस्ततोऽनुमानरूप एवायं व्यञ्जकभावः । यतः पक्षधर्मत्वं सपक्षसत्त्वं विपक्षाद् व्यावृत्तत्वं चेति रूपत्रयं स्वार्थानुमितावेतस्यैवोपयोगात् । तेनाबाधितत्वासत्प्रतिपक्षत्वयोर्नोपादानम् । लिङ्गाद्धेतोर्लिङ्गिनि साध्यविषयकं ज्ञानमित्यर्थः । अनुमानमनुमितित(स्त)द्रूपोऽनु { मान }मित्यात्मको व्यङ्ग्यव्यञ्जकभावविशेषणम् ।

तथा हि ।

"भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण ।
गोलाणईकच्छकुडंगवासिणा दरिअसीहेण॥" ॥१३८॥

[भ्रम धार्मिक विश्रब्धः स शूनकोऽद्य मारितस्तेन ।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥]

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति । यत् यत् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम् गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः ।

---

व्यञ्जनया बोध्यो व्यङ्ग्यबोधको व्यञ्जकस्तयोर्भावो व्यञ्जनया अर्थविषयक"-शब्दप्रतीतिस्तत्र पक्षसत्त्वेनपक्षधर्मता, साध्यवत्तया निश्चितः सपक्षस्ततसत्त्वेन साध्यसामानाधिकरण्यं व्याप्तिः, साध्याभाववत्तया निश्चितोऽपि पक्षस्तद्व्यावृत्तत्वेन व्यभिचाराभावः साध्यात्यन्ताभाववद्गामित्वस्य व्यभिचारत्वात् । तेनाव्यभिचरितसाध्यसामानाधिकरण्यं व्याप्तिरित्यनुमतं विवेचयति । **तथा** हीति । **भ्रमेत्यादि** । भ्रमधार्मिकविश्वस्तः स शुनकोटद्य(ऽद्य)मारितस्तेना(न) गोदावरीकध्व (च्छ)निकुञ्जवासिना दृप्तसिंहने(हेन) । पुष्पाहरणाय निकुञ्जे यान्तमभिसारविघ्नकारिण(णं) कञ्चनधार्मिकं प्रति भीषयितुं कस्यचि(स्याश्चि)दियमुक्तिः । अत्र किं वाच्यं किमनुमेयमित्याकांङ्क्षायामाह —**अत्रे**ति । यत् श्वा दुःशीलो निवसति स्म, श्वा मारित इति श्वनिवृत्त्या अत्र गृहे भ्रमेति धार्मिकभ्रमणं विहितं, तद्वाच्यम् । गोदावरीतीरे मा भ्रमेति प्रतीयमानमनुमानगम्यं अनुमानम् । यथा गोदावरीतीरं भीरुभ्रमणयोग्यं न भवति भयानकाक्रान्तत्वात् सम्प्रतिपन्नवदित्यनुमाने व्यतिरेकव्याप्तौ सत्यां भवति । भीरुभ्रमणं गोदावरीतीरेऽभ्रमणमनुमापयति । तामेव व्यतिरेकव्याप्तिमाह—**यद्यदि**ति । एवं व्यतिरेकव्याप्तिमभिधायान्वयव्याप्तिं दर्शयति **गोदावरी**ति । व्यतिरेकव्याप्तौ यद्व्यापकं भयकारणनिवृत्तिरूपं, तद्विरुद्धं भयकारणाक्रान्तत्वं, तस्योपलब्धिः । यद्यद्भयकारणाक्रान्तं तत्तद(द्)भीरुभ्रमणयोग्यं न भवति यथा सम्प्रतिपन्नमित्यन्वयव्याप्तिः ।

**अत्रोच्यते । भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः अपि तु वचनात् न च वचनस्य प्रामाण्यमस्ति अर्थेनाप्रतिबन्धादित्यसिद्धश्च तत्कथमेवंविधाद्धेतोः साध्यसिद्धिः ।**

---

अतोऽन्वयव्यतिरेकानुमानेन गोदावरीतीरे मा भ्रमेत्यस्यार्थस्य सिद्धत्वान्न व्यङ्ग्यं पृथक् कल्पनीयमिति पूर्वपक्षार्थः । व्यञ्जनावादी समाधत्ते । **अत्राच्यत इति** । पूर्वय(व)दनुमानं यथा गोदावरीतीरं न भीरुभ्रमणविषयः भयहेतुसिंहवत्त्वात्, यन्नैवं तन्नैवं यथा गृहमिति । अत्रानुमितिः धार्मिकस्य सामाजिकानां वा । आद्ये न क्षतिरन्त्ये(न्त्यं) दूषयति, तत्रादौ । व्याप्तिविघटकं व्यभिचारमुद्भावयति । **भीरुरपीति** । भीरुरपि भयकारणे सत्यपि गुरोः प्रभोर्वाज्ञया प्रियास्नेहेन वा भ्रमतीत्यनैकान्तिको हेतुर्व्याप्तिव्यभिचारी । अन्येन धनलिप्सया साधनसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्य विशेषणस्य विघटनमभिधाय विशेष्यस्य साध्यसामानाधिकरण्यस्य विघटनमाह—**शुन** इत्यादि । तथा च यत्र २ सिंहवत्त्वं तत्र २ भीरुभ्रमणाभाव(वः) । एवं [यत्र] नास्ति, शुनो बिभ्यद(तोऽ)पि सिंहान्न बिभेति शूरत्वात् तत्र सिंहवत्त्वरूपे हेतौ विद्यमानेऽपि भीरुभ्रमणाभावे नास्तीति सामानाधिकरण्याभावात् विरुद्धोऽयमित्यर्थः । व्यभिचरितो व्यतिरेकी विरुद्ध इति प्राचीनमतावलम्बनेन इति ध्येयम् । सिंहादभीतौ हेतुमाह—**वीरत्वेनेति** । का(धा)र्मिकस्य भयानास्पदत्वात् स्त्रीनीचानामेव तदाश्रयत्वात् यत्र सिंहप्रसङ्गस्तत्रैव तद्वधाय गच्छतीति सिंहवत्त्वभीरुभ्रमणाभावयोर्न सामानाधिकरण्यमित्याह—**विरुद्धोऽपीति** । भीरुभ्रमणेन साध्याभावेन व्याप्तत्वात् साध्याभावव्याप्तस्य विरुद्धत्वादिति पक्षधर्मविघटनमाह—**गोदावरीतीर** इत्यादि । **न चेति** । प्रामाण्यं नियतमित्यर्थः । अर्थेनाप्रतिबन्धादिति । अर्थेन सह व्याप्तमविसंवादि तदेव वचनं प्रमाणमिति । न चात्र सिंहरूपार्थेन सह व्याप्तिरस्ति इति वचन-

**तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोगे एव प्रतिबद्धानीत्यनैकान्तिकानि ।**

**व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम् । न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम् । एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशते इति व्यक्तिवादिनः पुनस्तत् अदूषणम् ॥**

**इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसंकीर्णभेदनिर्णयो नाम पञ्चम उल्लासः ॥५॥**

---

(नं) प्रमाणम् । तथा च वचनं तत्, सिंहो निश्चितो नास्तीति संदिग्धा (ग्धो) [ऽ] सिद्धोहेतुरित्यर्थः [अ]प्रतिबन्धादव्याप्तेः । शब्देषु प्रामाण्यसन्देहादर्थेऽपि सन्देहा (ह) इत्यसिद्धिः सन्दिग्धरूपा । व्याप्तिविशिष्टपक्षा (क्ष) धर्मतानिश्चयस्यवानुमितिकारणत्वात् । अत्र केचित्, अस्तु तर्ह्यनुमानाभास इत्याहुस्तदसत् । व्यभिचारज्ञाने सत्यनुदयात् । न च व्यभिचारास्फुर्तौ तथा सर्वविज्ञानवतां सामाजिकानां तदस्फूर्त्यभावादित्याह—**तत् कथमित्यादि** ।

इदानीं व्यङ्ग्यानामनुमेयत्वं नास्तीति स्थलान्तरेण दर्शयन्नाह—**तथेति** । चन्दनच्यवनादीनि यान्युपभोगरूपविधेरनुमापकानि तानि स्नानादिनाऽपि भवन्तीति व्यभिचारीणि । अनुमानं यथा-चन्दनस्य वनं उपभोगपूर्वकं चन्दनच्यवनत्वादिति व्यभिचारी स्नानादिनाऽपि चन्दनसम्भवात् । न चाधमनायिकात्वविशिष्टचन्दनच्यवनं हेतुः । अधमत्वस्य प्रमाणान्तरेणाप्रतीयमानत्वात् इति सिद्धा व्यञ्जना, कथमनुमानमिति प्रघट्टकार्थः । ननु प्रमाणप्रतिपन्नेन वस्तुना व्यञ्जनासिद्धिरपि कथम् । तत्राह—**एवंविधादिति** । एवंविधान्निश्चितादनिश्चिताद्वाऽर्थात् एवंविधोऽर्थो निश्चितोऽनिश्चितो वाऽर्थ उपपत्त्यनपेक्षत्वेऽपि युक्तिशून्यत्वेऽपि व्यङ्ग्यस्य प्रतीतिमात्रपर्यवसायित्वात् सत्यासत्यनिरूपणं विनैव प्रकाशः । तेनानुमानं नैवंविधमतः शब्दस्य व्यञ्जनव्यापारः पृथगङ्गीकर्तव्य इति भावः ॥

**इति श्री काव्यप्रकाशटीकायां सारप्रदीपिकायां वाचनाचार्यगुणरत्नकृतायां पञ्चमः उल्लासः ॥ ५ ॥**

## ॥ अथ षष्ठ उल्लासः ॥

(सू.७०) शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः ॥४८॥

न तु शब्दचित्रेऽर्थस्याचित्रत्वम् अर्थचित्रे वा शब्दस्य ।

---

अथोल्लासानां परस्परसङ्गतिं दर्शयति । चतुर्थोल्लासे उत्तमकाव्यं पञ्चमे मध्यमं काव्यमुक्तं क्रमप्राप्तमधमकाव्यं चित्ररूपमाह—**शब्दार्थेति** । प्रथमोल्लासे शब्दचित्रमर्थचित्रं च यत् काव्यद्वयमुदाहृतं, शब्दचित्रां स्वच्छन्देत्यादिना, अर्थचित्रां च विनिर्गतमित्यादिना, तत्र शब्दचित्रे शब्दस्य प्राधान्यमर्थचित्रे वाऽर्थस्य प्राधान्यम् । तत्र२कवेरभिनिवेशात् । ननु प्रथमोल्लासे एवं स्वच्छन्देत्यादिना विनिर्गतमित्यादिना चोदाहृतमेव पुनरत्रापि किमर्थमुच्यत { मि } [इ]त्याशङ्कते—**नत्विति**। शब्दचित्रे अर्थस्याचित्रत्वं अर्थचित्रे वा शब्दस्याचित्रत्वं न । किन्तूभयमस्ति । प्राधान्याप्राधान्यविवेक(कः) क्रियते । तत्र प्रथमोल्लासे स्वच्छन्दोछ(च्छ)लेत्यादौ न काचिदर्थस्यालङ्कारस्य चिन्ता कृता । विनिर्गतं मानदमित्यादौ न शब्दस्येति न पौनरुक्त्यमिति भावः । अत्रायमर्थः । तत्र शब्दचित्रे शब्दस्य प्राधान्यं, अर्थचित्रे चार्थस्य प्राधान्यम् । प्रथमेऽर्थस्य गुणभूतता द्वितीये च शद्बस्य गुणभूतता । तथा च यद्यपि शब्दचित्रे शब्दस्य प्राधान्यमर्थस्य गुणभूतता, तत्रापि तत्रार्थस्याचित्रत्वं नाशङ्कनीयम् । यत्कृतचमत्कारस्योत्कटता तस्य प्राधान्यमन्यथा गुणता । एतेन काव्ये सर्वत्रैव शब्दार्थालङ्कारवत्त्वमावश्यकम् । कस्यचिद्गुणत्वं कस्यचित् प्राधान्यमिति भावः । एवमर्थचित्रेऽपि अर्थस्य प्राधान्यं शब्दस्य गुणभूतता, परं शब्दस्याचित्रत्वं नास्ति । तथा च शब्दस्य चित्रत्वे शब्दरूपा ये अलङ्कारास्तद्वत्तयाऽपि अधमकाव्यत्वमुक्तम् । अर्थस्य चित्रत्वे उक्तेऽर्थरूपा येऽलङ्कारा रूपकादयस्तद्वत्तयाऽपि अधमकाव्यता । ततः शब्दार्थयोरप्यलङ्कारत्वं पर्यवसन्ननु(मु)भयालङ्काराणां प्रयोजकत्वे प्रामाणिकसम्मतिमाह—**तथा**

तथा चोक्तम्
" रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥
रूपकादिमलंकारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम् ॥
तदेतदाहुःसौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः ॥" इति ।

---

**चोक्त**मिति । भी(भा)महेनेति शेषः[1] । न तूभयोरलङ्कारत्वे सन्देहाभावेन कथं प्रामाणिकसम्मत्यादरणमित्यत आह–**रूपकादिमि(रि)**ति । तस्य काव्यस्य रूपकादिरलङ्कार उदितस्तथा च रूपका { रस्या }[देर]लङ्कारत्वं(त्वे) शब्दस्य तु नालङ्कारत्वम् । तेषां मते शब्दस्यालङ्कारत्वं नास्ति । तदेव निदर्शनेन द्रढयति । न कान्तमिति । कान्तमपि वनिताननं निर्भूषणं न विभाति तद्वद्रूपकाद्यलङ्कार-हीनं शब्दस्वरूपं न विभाति । एतन्मते रूपकादयो येऽर्थाऽलङ्कारास्त एवेत्यर्थ इत्येकं मतम् । द्वितीयमतमाह–**रूपकादि**मिति । बाह्यं माधुर्यव्यञ्जकं कोमल-वर्णानुप्रासादिभिः । प्रथमतो रसस्य प्रधानस्य माधुर्ये व्यञ्जिते सति पश्चाद्रू-पकादिभिरङ्गिनो रसस्य व्यञ्जनात् , पाश्चात्यव्यञ्जकतया तेषां रूपका दीनां बाह्यत्वम् । तथा च प्रथमव्यञ्जकत्वाभावबाह्यत्वम् । एतन्मते[ऽ]तु(नु)-प्रासादीनामेवालङ्कारता । प्रथमतोऽनुप्रासो यदा श्रूयते तदाऽनुप्रासस्य शब्दा-लङ्कारत्वं जातम् । पश्चाद्रूपकादीनामिति हेतोर्बाह्यत्वम् । यदि रूपकादीनाम-लङ्कारत्वं नास्ति, तदा शेषा[णा]मलङ्कारत्वमित्यत आह–**सुपा**मिति । सुपां तिङां वाचां व्युत्पत्तिविशेषेणानुप्रासादिनिर्माणरूपामलङ्कृतिं वाञ्छन्ति । एत-न्मते[ऽनु]प्रासादय एवालङ्कारा, अत्रैव सम्मतिमाह–**सौशब्द्य**मिति । सौश-ब्द्यमनुप्रासादिनिर्माणमलङ्कृतिः । परं अर्थव्युत्पत्तिः रूपकादिरीदृशी अलङ्कारो न । तथा च वादिद्वयविप्रतिपत्त्या संशये सति स्वमते निर्णयमाह–**शब्दे**ति । शब्दश्चाभिधेयश्च शब्दाभिधेयो(यौ) । तावेवालङ्कारौ । तयोर्भेदात् नोऽस्माकं

शब्दचित्रं यथा

प्रथममरुणच्छायस्तावत्ततः कनकप्रभः
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ ॥१३९॥

अर्थचित्रं यथा

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥१४०॥

---

द्वयमिष्टम् । शब्दस्यालङ्कारत्वं अर्थस्याऽप्यलङ्कारत्वमिष्टम् । हेतुस्तु शब्दाभिधेयालङ्कारभेदादित्यनेनास्वादव्यञ्जकत्वे विशेष उक्तः । तथा च शब्दस्याप्यास्वादव्यञ्जकत्वमर्थस्याप्यास्वादव्यञ्जकत्वमागतम् । उदाहरति—**प्रथमममि**ति । क्षणदाया रात्रेर्मुखे, प्रदोषे, मृगलाञ्छनश्चन्द्र उदेति । कथम्भूतः—प्रथममरुणच्छायः सन्नुदयति । ऊर्ध्वं गच्छति ततः सुवर्णकान्तिः सन्, तदनु विरहेणोत्ताम्यन्त्याः, शोषं गच्छन्त्याः, तस्याः कामिन्याः, कपोलतलस्य द्युतिरिव द्युतिर्यस्य स सन्, ततः सरसश्चासौ बिसिन्याः कमलिन्याः कन्दश्च, तस्य छेदः, तस्य छविरिव छविः कान्तिर्यस्य स सन्, ध्वान्तस्यान्धकारस्य ध्वंसे क्षमः समर्थो भवति । अत्र समासेऽनुप्रास एव कवेरभिनिवेशात् शब्दचित्रस्य प्राधान्यम् । अरुणादेरिव छायादिर्यस्येति वृत्त्याः(त्या)[ऽ]रुणादिसा(स)मासमन्वयादर्थस्यापि चित्रत्वम् । तदुपसर्जनम् । अत्र तकाराणां ककारयोर्धकारयोः क्षकारयोश्च साम्यमित्यनुप्रासप्रकर्षाच्छब्दचित्रता । अर्थालङ्कारस्योपमात्रानोद्भटतेत्यर्थः । अर्थचित्रोदाहरणमाह—**ते दृष्टी**ति । ते पक्ष्मलदृशां स्त्रीणामलं(ल)का{ खला } दु(दृ)ष्टाश्च । दृष्टिमात्रपतिता अपि कस्य क्षोभात्(य) न भवन्ति, अपि तु सर्वेषामित्यर्थः । ते के ये नीचाः प्रलम्बाः, अधमाश्च । सदैवसविलासं यथा

यद्यपि सर्वत्र काव्येऽन्ततः विभावादिरूपतया पर्यवसानम् तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तम् । अत्र च शब्दार्थालंङ्कारभेदाद्बहवो भेदाः ते चालंकारनिर्णये निर्णेष्यन्ते ॥

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं
नाम षष्ठ उल्लासः ॥ ६ ॥

---

तथा अलीके ललाटे लग्नाः । अथ च सविलासं सौजन्याभिनयपूर्वकमलीके- { लीके } ऽनृते लग्नाः, एवंविधाः सन्तः, कालतां कृष्णतां कुटिलतां वक्रतामित्र, न त्यजन्ति । कालतां कुटिलतां च न त्यजन्तीत्यर्थः । अत्र समुच्चयादेरर्थालङ्कारस्य प्राधान्यम् । श्लेषस्य शब्दालङ्कारस्य गुणीभावः । अत्र स्तोकानुप्राससम्भवेऽपि श्लेषस्योद्भटश्च (च)मत्कारकारितया श्लेषप्राधान्यादर्थालङ्कारत्वमिति भावः । ननु शब्दचित्रे पूर्वश्लोके चन्द्रोदयस्योद्दीपनस्य वर्णनीयतया शृङ्गारोदयः अर्थचित्रे उत्तरश्लोके कामिन्यादिलक्षणस्यालम्बनस्य वर्णनीयतया शृङ्गारो(र)रौद्रोदयश्चास्तीति कथमुभयमव्यङ्ग्यत्वेनाधम { त्व } मुक्तमित्याशंक्याह—**यद्यपीति** । कविः शब्दार्थालङ्कारयोस्तात्पर्याद्विद्यमानेन विवक्ष्येत इति । अव्यङ्ग्यत्वेनाधमनु(मु)भयमुक्तमिति भावः । तथा च काव्यद्वये स्फुटस्य रसस्याप्रतीयमानत्वादलङ्कारस्योद्भटत्वेन प्रतीयमानत्वात् अधमकाव्यत्वमुक्तमित्यर्थः । **विभावादी**त्यादि । तेषामेव रसत्वेन पर्यवसानमाह—स्फुटस्यानन्यवैचित्र्यतिरोधानेन झटिति प्रतीयमानस्येत्यर्थः[2] । एतत् काव्यद्वय(यं) शब्दचित्रार्थचित्राख्यम् ॥

**इति काव्यप्रकाशसारदीपिकायां वाचनाचार्यगुणरत्नगणिकृतायां षष्ठ उल्लासोऽधमकाव्यविषयकः सम्पूर्णः ॥ ६ ॥**

---

# Foot notes

## Ullāsa I

(1) V. i. -गुणरत्न bows to 'गोस्वामिन्'. In v. 2, he bows to पार्श्वनाथ, obviously the Jaina Tirthaṅkara In v. 2 some सर्वार्थसिद्धिद सूरि is also mentioned. विश्वस्वारत्नकल्पाय–could it be विश्वस्य रत्नकल्पाय ?

गुणरत्न mentions विनयसमुद्र as his गुरु.

**V.3.**—He has read other commentaries on the K. P. and has learnt K.P. under his preceptor (v. 5). गुणरत्न very oten refers to 'टीकान्तर', without mentioning it by name.

काव्यमीमांसा–seems to be scribe's mistake. It should read 'काव्यप्रकाश'. P. Ms. also reads the same.

(2) Compare भीमसेन दीक्षित, सुधासागर, p. 4 (Edn. चौखम्बा sk, series, 1927) :—"ग्रन्थत्वं तावत्–प्रतिपाद्यप्रतिपादकभावप्रयोजनबोधाधीन-शुश्रूषाजन्यश्रुतिविषयशब्दसन्दर्भत्वम् ।

(3) Compare Sudhāsāgara p. 4 :–विघ्नविघाताय=समाप्त्ययोगव्य-वच्छेदपर्यवसन्नप्रारिप्सितप्रतिबन्धकदुरितध्वंसाय.

(4) – Ref. to मिश्र. Could it be वाचस्पति मिश्र ? (See, De. Sk.poetics, p. 159, 160); or, could it be Subuddhi Mis'ra (De, p. 165) ?

(5) Guṇaratna enters into an original discussion here.

(6) Compare सुधासागर (p. 5, 6 ):–कृतेत्यस्य विवरणं शक्त्येति । कारणतायाः शक्तिरूपत्वात् । शक्तिर्जन्यत्वं तेन नियतरूपेति कश्चित् । तत्तुच्छम् । कार्यमात्रस्यादृष्टजन्यत्वात् । न च शब्दार्थोभयरूपकाव्येऽर्थस्य नित्यतयाऽजन्यत्वाद्युक्तमेवैतदिति वाच्यम् । ब्रह्मनिर्मितावर्थस्य नित्यत्वेन प्रसिद्धत्वेऽपि कविनिर्मितौ लोकोत्तरविभावादिरूपतया जन्यत्वाद्व्यतिरेकाऽसिद्धेः ।

केचित्तु शक्तिरत्र प्रयोज्यता । तथा च नियतिप्रयोज्यो नियमः कमलादौ सौरभविशेषाऽयोगव्यवच्छेदः चन्द्रादावेव तत्पदप्रयोगाच्चन्द्रत्वादिव्याप्यप्रतीत्या व्यापकीभूताह्ला-

दकत्वाद्यवगमादिरूपश्च । तेन नियतरूपा सनियमा । ईदृङ्नियमराहित्यं कविनिर्मितौ स्फुटमेव । कामिनीवदनसन्निधौ तेष्वपि तदभाववर्णनान्मुखादावपि चन्द्रादिपदप्रयोगात्तद वगमाच्चेत्याहुः । तदपि न सम्यक् । मुखादावाह्लादकत्वाद्यवगमस्य प्रयोज्यत्वान्नियमाऽप्रच्यवात् ।

अत्रेदं तत्त्वम् । शक्तिर्निरूप्यता । तथा च नियतिरूप्यो नियमः स्रष्टुः कमला॰ द्यात्मकनिर्माणे जलाद्ययोगव्यवच्छेदरूपः । तेन नियतरूपा । एतद्राहित्यस्य कवेरनिर्वचनीयकमलाद्यात्मकनिर्माणे सत्त्वान्न दोषलेशावकाशः ।

(7) गुणरत्न explains the term नियति in different ways. He seems to refer to शाक्ततन्त्र when he explains- 'नियति' as one of the 36 categories.

(8) अग्निपुराण is quoted. But the quotation is very famous and is also found in the Dhv. of Ānandavardhana. The अग्नि॰ could have borrowed it from any other source.

(9) Ref. to टीकान्तर.

The सुधासागर (P.8) has :–ह्लादेनैकमयीमेकस्वभावामानन्दमात्रस्वभावामिति यावत् । ह्लादः सुखं एकशब्दो मात्रार्थः । मयट् स्वार्थे । तज्जनकत्वेन तत्त्वोपचार इति बोद्ध्यम् ।

(10) Ref. to व्याख्यान्तर. This is बालचित्तानुरञ्जनी of नरहरि सरस्वती तीर्थ. Read (p. 7. Edn. S. S. Sukthanker, Appendix B) : – एकं प्राचुर्येण प्रस्तुतमस्यां सा एकमयी ह्लादनैकमयी ह्लादैकमयी, अन्यथा एकश्चासौ ह्लादश्चेति समासे पूर्वं कालेत्यादिना एकशब्दस्य पूर्वनिपातः स्यात् ।

(11) Read बालचित्तानुरञ्जनी, P. 7:– कवेः सकाशादन्यस्य कारणस्य परतन्त्रा अधीना न भवति कविपरतंत्रैव । न चान्यपरशब्दयोः पौनरुक्त्यं परतंत्रस्याधीनमात्रवचनत्वेन त्वत्परतन्त्रोऽपरपरतन्त्र इति प्रयोगदर्शनात् ।

(12) The text is not clear. 'तत्पुरुष(स्तु)...न साधुः' 'is clear. But 'बहूपचारैः भो' is not clear. The बालचित्तानुरञ्जनी has : नवरसाः शृंगारादयो यस्यां सा । सा रुचिरा मनोहरा च ताम् । नव च ते रसाः तैः रुचिरेति न भवति । षड्रसेति न च हृद्यैवेति पृथग्विशेषणविधानविरोधात् ।

दिक्संख्ये संज्ञायामिति संज्ञायामेव समासविधानात्व (त् ?) । समाहारे तु न नवरसीरुचिरेति स्यात् ।

In the light of the above, गुणरत्न also prefers बहुव्रीहि to तत्पुरुष compound.

The सुधासागर also has similar remarks (P. 8):— अत्र बहुव्रीहिरेव सङ्ख्यापूर्वकत्वान्न द्विगुत्वमिति न नवरसोति प्रयोगापत्तिः । P. reads- तत्पुरुषस्य बहुपचारैर्भीन साधुः—also not clear.

(13) Read also बालचित्तानुरञ्जनी (P. 7):–अनेन च श्लोकेनैतद्ग्रन्थप्रतिपाद्यवस्त्वलङ्कारसरूपं ध्वनित्रयं प्रदर्शितं भवति । etc. etc..

(14) Read also बालचित्तानुरञ्जनी (P. 7)—ननु प्रारिप्सितग्रन्थस्य प्रयोजनमभिधानीयं तत्परित्यज्य काव्यस्य प्रयोजनाभिधानमसंगतमित्याशङ्क्य लक्ष्यस्य काव्यस्य प्रयोजनान्येव तल्लक्षणभूतस्य ग्रन्थस्य प्रयोजनानीति मत्वाह–**इहाभिधेयं इति** । etc. etc.

(15) गुणरत्न explains each प्रयोजन separately in an original way.

(16) Read सुधासागर (P. 10) अत्र कृत् वित् युज् शब्दा भावे क्विबन्ताः । कृदभिहितो भावो व्यवत्प्रकाशते इति भावः ।

(17) Words are missing in the Ms. B., P. supplies : '**किं मान** ' मित्याह.......etc.

(18) Ref. to व्याख्यानान्तर.

(19) Read बालचित्तानुरञ्जनी P. 8—**यथेति** । योगमौचित्यमनतिक्रम्येत्यर्थः । औचित्यं चैव यशोर्थानर्थक्कृतेश्च द्वयोरपि । व्यवहारोपदेशौ च सहृदयस्यैव, निर्वृत्तिर्द्वयोरपि निर्वृतिसमये कवेरपि सहृदयत्वात् ।

(20) Ref. to टीकान्तर.

(21) Guṇaratna seems to introduce न्याय terminology in the explanation of संस्कार.

(22) Could it be कार्यत्रयपरं ? Both B. and P. have identically faulty reading.

(23) Read also बालचित्तानुरञ्जनी, P. 8:—कवित्वस्य बीजं प्रतिभा तद्रूपः पूर्ववासनाविशेषः । तथा च वामनः कवित्वबीजं प्रतिभानमिति। ननु शक्तिरेव नास्ति तत्सद्भावे प्रमाणाभावादित्याशंक्य कार्यलिङ्गकमनुमानमस्तीत्याह यां विनेति । etc. etc.

(24) Opinion of some 'मिश्राः' is quoted as पूर्वपक्ष. Guṇaratna cites other views also. The whole discussion seems to be original. Could this 'मिश्र' be सुबुद्धि मिश्र ?

(25) Reference to व्याख्यानान्तर.

(26) त्वर्थजे भूतशक्त्या is meaningless and therefore redundant. OR, could it be क्वचित्तु अर्थबीजभूतशक्त्या...etc. ? Both B. and P. read identically.

(27) This is given by वामन in his का. सू. वृ.

(28) The text is not clear. P. has वा संक्रान्तिर्भवेत् ।

(29) See also Jhalkikar (P. 13) करणे निष्पादने । योजने पदानामावापोद्वापे "करणं निर्वाहणम् योजनं झटित्यास्वादोद्बोधकः प्रबन्धावयवविन्यासः" इति केचित् । "करणे विशकलितरूपे योजने प्रबन्धादीनां गुम्फे" इति माणिक्यचन्द्रः । "करणे उक्तरूपया निष्पादने योजने प्रबन्धरूपतया संघटने" इति जयन्त भट्टः ॥

(30) Ref. to टीकान्तर.

(30 A) See also Jhalkikar : P. 13 : पूर्वपूर्वकृतिध्वंससहकृतोत्तरोत्तरा कृतिरित्यर्थः । The source is not mentioned. It could be from चक्रवर्तिन्.

(31) See Jhalkikar P. 13:-व्याख्यातमिदं चक्रवर्त्यादिभिः । "समुदिताः दण्डचक्रन्यायेन परस्परसापेक्षाः ।

(32) गुणरत्न adds fresh remarks.

(33) Ref. to नव्याः—could it be जगदीश तर्कालङ्कार.

(34) This means काव्यप्रकाश.

(35) Guṇaratna enters into elaborate discussion.

(36) Guṇaratna's style at times becomes much laboured and sentences seem to be suffering from दूरान्वय.

Lack of lucidity at times comes in the way of gathering clear sense.

(37) The discussion is in the fashion of विश्वनाथ. But Guṇaratna fairly elaborates it.

See also सुधासागर pp. 21 :—नन्वत्रादोषत्वं यत्किञ्चिद्दोषाभावो यावद्दोषाभावो वा । नाद्यः । अव्यावर्तकत्वात् । यत्किञ्चिद्दोषाभावस्य सर्वत्र सुलभत्वात् । नापरः ।...etc.

(38) 'अत्र वदन्ति'. who are they ?

(39) See S. D. I.

(40) The view of S. D. is not acceptable to गुणरत्न.

(41) The meaning is not clear. Could it be....विशेषदर्शने, अभ्रमवतः अभ्रमविधेयस्य, .... etc. ?

(42) See बालचित्तानुरञ्जनी, P 8- तदनेन लक्ष्यं काव्यमुच्यते इतरलक्षणम् । तत्र शब्दः काव्यमित्युक्ते समुद्रघोषादावतिव्याप्तिः । अर्थ इत्युक्ते द्रायदौ (द्रव्यादौ ?)। उभयोर्ग्रहणेऽपि श्रुतिकटुत्वादिदोषयुक्तं कार्त्तार्थं (७ उल्लास) मित्यादावतिव्याप्तिः अत उक्तं अदोषाविति । तथापि माधुर्यादिगुणरहितेऽतिव्याप्तिस्तदर्थमुक्तं सगुणाविति । तथा गामानयेत्यादावतिव्याप्तिस्तदर्थमुक्तमनलङ्कृतीति । नञ् ईषदर्थे, अनुदारा कन्येत्यत्र यथा । तौ अस्फुटालंकारयुक्तौ इत्यर्थः । दोषादिनिरूपणमंतरेण काव्यस्य निरूपणं न संभवतीत्यत आह दोषेति । श्रुतिकटुत्वादयो दोषाः । गुणाः रससमवायिनो धर्माः । अलंकारा रससंयोगवृत्तयः । अत एवाव्याप्तिः परिहृतेति वदन् क्वापीत्येतद्व्याकरोति।

(43) See also सुधासागर, P. 21 :—

यच्चाग्निपुराणे श्रीमद्वेदव्यासैरुक्तम्—
अदोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति ।।इति।

(44) गुणरत्न seems to read 'हि' in the text.

(44 A) Ref. to वृद्धव्याख्या.

(45) Gunaratna gives an original explanation of the term 'बुध'.

(46) The text is currupt in B. But, P. has 'तदंतिक'. Could it be 'तदंतिकं गत्वा ? P. further reads स्मीदृग्भाविनि.

(47) words, 'थ्याभिधानं स्व' are not read in B., P. supplies them.

(48) गुणरत्न brings out त्रिरूपध्वनि in an original fashion.

(49) Ref. to टीकान्तर. This is बाल० P. 10. Read:—स्वच्छन्देन स्वेच्छया । उच्छलंतय: । अच्छा निर्मला: । कच्छदेशेषु जलप्रायदेशनिम्नस्थलेषु । च्छातेतरा: स्थूला: । अम्बुच्छटा: जलकल्लोलास्ताभिर्मूर्च्छन्नश्यन् मोहो येषां तैर्महर्षिभिर्हर्षेण विहितं स्नानमाह्निकं च यस्यां सा ।

(50) औष्ट्र्य seems to be incorrect.
P. reads 'उच्छ्राय'. परिहाणोच्छ्राय. etc.

(51) The text is not clear. But
P. has प्रतिपद जीवातुतश्च.

(52) Compare प्रदीप P. 21.

(53) गुणरत्न seems to have added this explanation.

(54) Compare Jhalkikar p. 24, quoting the views of चक्रवर्तिन्. He seems to be परमानन्दचक्रवर्ती भट्टाचार्य, the author of विस्तारिका टीका. See also De P. 162.

(55) Gunaratna adds a discussion as to the nature of चित्रकाव्य on the basis of the views expressed in the ध्वन्यालोक:.

(56) It should read परं चैवमलंकार etc.

(57) Clear ref. to चक्रवर्तिटीका.

(58) In the coloplen at the end of the IInd उल्लास we find :

इति श्रीकाव्यप्रकाशटीकायां सारदीपिकायां
वाचनाचार्यकृतायां द्वितीय उल्लास: ।

'वाचनाचार्य' seems to be some title of गुणरत्नगणि.

At the end of the third उल्लास, we have वाचनाचार्यगुणरत्नकृतायां...etc. We find similar expression at the end of उल्लासs IV, V, VI, VII, VIII, and IX. At the end of उल्लास X, we read as follows:—इति श्रीखरतरगच्छाधीशश्रीजिनमाणिक्यसूरि-

शिष्यश्रीविनयसमुद्रगणिशिष्यवाचकगुणरत्नगणिविरचिता काव्यप्रकाशसारदीपिका संपूर्णा, संवत् १७४२ वर्षे, शाके १६०७ प्रवर्तमाने माघमासे कृष्णपक्षे ८ तिथौ भृगुवासरे श्लोकसंख्या १०१०० ।. The scribe has also given his date and place at the end of the work. The scribe lived in the reign of Sri Sayajeerao Gaikwad of Baroda and copied this in the city of Aṇahilla pur (Patan). P. has...संवत् नवति १८९० अढामासे षष्ठ्यां संपूर्णमस्तु । Nothing else is given.

## Ullāsa II

(1) नरहरिसरस्वतीतीर्थ has वैयाकरणैः स्फोटं प्रति शब्दस्य etc.

(1 A) Other's view is controverted.

(2) तात्पर्यार्थं is accepted by the वेदान्तिन्‌स् : गुणरत्न discusses the theory of तात्पर्यार्थ. गुणरत्न seems to enter in to the discussion in an original way.

श्रीधर has केषुचित्, वादिनां मतेषु, अतोऽसार्वलौकिकत्वात् समशीर्षिकतया न गण्यत इत्यर्थः ।

चण्डीदास has :—असार्वत्रिकतया समकक्षभावायोग्यायास्तात्पर्यनाम्न्या लक्षणाया ×उपाधिविषयतामाश्रित्य शब्दार्थप्रकारपार्थक्यानादर इति भावः ।

(× तात्पर्यं हि द्वितीयलक्षणेति कैश्चिन्मीमांसकैरभिधीयते अतोऽसार्वत्रिकत्वात्सम-शीर्षिकया न तद्गणनमित्याशयः )

(2 a) See चण्डीदास :-ननु यद्यसार्वत्रिकतया तात्पर्यार्थागणनं, समकक्षतया तर्हि व्यङ्ग्यार्थागणनमपि न्याय्यम् । नैवं, व्यङ्ग्याविष्कारार्थमेवाभिधेयादीनामनुवाच्यत्वात् । तदगणने तुरगारूढस्य तुरगविस्मरणवदत्यन्तप्रमादित्वापातात् । न चैवं तात्पर्ये तस्यार्थग्राह्यत्वेनाप्राधान्यात् ।

(2 A)-वृत्तिं विना...etc. compare Jhalkikar's remark on P. 26—अयं भावः । वृत्तिं विनार्थबोधनेऽतिप्रसङ्ग इति अन्वये (वाक्यार्थरूपे संसर्गे) शब्दस्य तात्पर्याख्या वृत्तिरभ्युपगन्तव्या । तत्प्रतिपाद्योऽर्थस्तात्पर्यार्थ इति चक्रवर्तिकमलाकरभट्टनरसिंहठक्कुरकृतटीकास्वंशतः स्पष्टम् ।

Kamalākara lived in the first quarter of the 17 th century (see De-P. 168). Narsiṃha Ṭhakkura is placed between 1620-1700 A. D. These two authors preceded

P. यावत् त्वया स्थीयते. Then P–इत्यादौ शब्देन्वयानुपपत्तेरभावात् etc.

(25) गुणरत्न gives an elaborate and interesting discussion on the views of अभिहितान्वयवादिन्s and others.

(26) Could it be 'आनयनत्वाभावात् ? or, आनयनान्वितत्वाभावात् ?

P. घटि अनयान्वेतत्वाभावात्, also not clear.

(27) B. and P. The text reads–अथान्विताभिधानवादिनां मतेऽपि व्यङ्ग्यं शक्तिर्नास्तीत्याह–It could read....मतेऽपि व्यञ्जनशक्ति...etc.

(28) Read Jhalkikar p. 220 अयमेतच्छब्दजन्यैतदर्थगोचरज्ञानवान्। एतच्छब्दश्रवणानन्तरमेतदर्थगोचरचेष्टावत्त्वात्' इत्यनुमानाकारः ।

(29) Guṇaratna, in this original discussion, tries to explain अन्यथानुपपत्तिः by citing arguments both in support and against the विपक्ष.

(30) B & P. There seems to be repetition here.

(31) B. and P. It could read :– तथा च प्रवृत्तिनिवृत्तिकारि अन्वयज्ञानं वाक्यार्थः । {ज्ञानं} न चाकाङ्क्षायोग्यतासन्निधिवे (व)शादेवाशक्तस्य वाक्यार्थरूपान्वयस्य बोधो भविष्यतीति ।

(32) compare प्रदीप p. 211; तेषामपि मते सामान्येनैव रूपेण...etc.

(32A) गुणरत्न calls this view as an offshoot of the former view.

(32B) This also is called 'एकदेशिमतम्'.

The main opponent is the मीमांसक.

(33) गुणरत्न supplies fresh illustration.

(33A) It should be noted that the view controverted by Mammaṭa is the one held by the authors of दशरूपक and अवलोक, i.e. धनञ्जय and धनिक..

(34) Guṇaratna adds fresh explanation.

(35) गुणरत्न seems to supply literary illustrations for explaining मीमांसा terms. He also furnishes illustrations from Mīmāmsā.

(36) Also P. 'अत्र मन्त्रलिङ्गेन कल्पयामि' is not clear.

(37) Also P. वानत्वात्तस्य... etc. is not clear.

(38) See also Jhalkikar p. 236;

(39) Ref. to टीकान्तर; see also प्रदीप p. 224.

(39A ) We also read as :

श्रुतिदुष्टदायो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥ (ध्वन्या. II

(40) Jhalkikar and Abhyankar read as :

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए मह णिमज्जहिसि ॥

(41) A clear ref. to लोचनकार अभिनवगुप्त.

(42) Jhalkikar and Abhyankar read as :

विपरीअरए लच्छी वम्हं दट्ठूण णाहिकमलट्ठं ।
हरिणो दाहिणणअणं रसाउलो झत्ति ढक्केइ ॥

(43) It should read 'निमीलन'.

(44) Ref. to टीकान्तर

(44A) A clear ref. to the व्यक्तिविवेककार.

(45) Compare सारबोधिनी. See, Jhalkikar p. 253

## Ullāsa VI

(1) Vide Jhalkikar (p. 258) भामहेन इति शेष इति सरस्वतीतीर्थकृतटीकायां स्पष्टम् । We have earlier tried to point out the close resemblance of our comm. with the बालचित्तानुरञ्जनी of नरहरिसरस्वतीतीर्थ.

Jhalkikar adds : 'ध्वनिकारेण' इति विवरणकाराभिप्रायः । Earlier we have tried to campare गुणरत्न's observations with those

of the विवरणकार also. But as the latter is not available to us, we cannot go deeper into further comparision, while it is possible to utilise portion (I–III & X) of the बालचित्तानुरञ्जनी published by S. S. Sukthankar.

Actually the verses viz. रूपकादिरलंकारः etc. etc. as quoted by Mammaṭa are read in the Kāvyālaṃkāra of Bhāmaha. (I. 13. 15).

As I have been able to secure the ms. of the बाल. from Poona, I have given in the appendix 1, the portion of the बाल. covering KP. IV-VI, which, I suppose will be of immense value to scholars of sk. poetics.

(2) It seems here 'अनुपलम्भात्' is left out. स्फुटस्य अनुपलम्भात् व्यङ्ग्यम् seems to be the sense.

# APPENDIX 1

## नरहरिसरस्वतीतीर्थकृतबालचित्तानुरञ्जनीटीकायां

## चतुर्थोल्लासः

**पूर्वं** तददोषावित्यादिना काव्यस्वरूपमुक्तम् । तत्र शब्दार्थौ प्रपंचितौ । अधुना दोषगुणादिनिरूपणमुचितम् । तत्परित्यज्य कथं काव्यभेदकथनमित्याशंक्याह **यद्यपी**ति । धर्मिणि प्रकर्षेण साकल्येन प्रदर्शिते तद्धर्माणां दोषाणां हेयत्वं गुणालंकाराणामुपादेयत्वं सुज्ञातमिति प्राप्तमतः काव्यभेदकथनमित्यर्थः । तत्र इदमुत्तममित्यादिना लक्षितं ध्वनिरूपं काव्यमुत्तमं द्विविधं, लक्षणामूलं अविवक्षितवाच्यमभिधामूलं विवक्षितत्वान्यपरवाच्यं चेति । तत्र प्रथमस्य द्वैविध्यमाह **अविवक्षिते**ति । अविवक्षितं अनुपयुज्यमानत्वादनुपपद्यमानत्वाद्वा वक्तुमभिप्रेतं वाच्यं यत्र एवंविधो यो ध्वनिरस्ति तत्र ध्वनौ वाच्यं अर्थान्तरसंक्रमितं परिणमितं अत्यंतं तिरस्कृतं वा भवेत् , भ्रांतादिवाच्यव्युदासाय विशेषणप्रक्षेपपूर्वं, अविवक्षितवाच्यपदं व्याचष्टे **लक्षणे**ति । लक्षणामूलं यस्य तद्, तद्गूढं च तद् तद्व्यंग्यं रूपं प्राधान्ये सति विवक्षितान्यपरव्युदासाय लक्षणामूलेति, अगूढव्यंग्यमध्यमकाव्यपरिहाराय गूढेति । य इति सामान्याभिधानाद्विशेष्यापरिज्ञानमाशंक्याह **ध्वनावि**तीति । अर्थांतरसंक्रमितवाच्यस्योदाहरणमाह **त्वामि**ति । अस्मीत्यहमित्यर्थेऽव्ययं अस्मच्छब्दानुवादकश्चायं न तत्पर्याय इति युष्मत्पर्यायभवच्छब्दप्रयोगे मध्यमपुरुषानुपपत्तिरत्रोत्तमपुरुषानुपपत्तिः, अहं त्वां वच्मि अत्र विद्वत्समूहो वर्तते, तत्तस्मात् आत्मीयां मतिं दृढीकृत्यात्र तिष्ठेत्यन्वयः । अत्र वचनसामान्यस्य प्रत्यक्षेणैव गृह्यमाणत्वादनुपयुक्तो मुख्यो[ऽ]र्थो बाध्यो वचनविशेषमुपदेशं लक्षयति इति लक्षणामूलत्वं,

सामान्यविशेषभावश्च संबंधः, वक्तुर्विनयप्रकाशनं आप्तत्वं वा व्यंग्यं, सर्वो हि स्वां मतिमादायैव तिष्ठतीत्यनुपयुक्तो वाच्योऽर्थः प्रमाणपरिगृहीतां मतिं लक्षयति। सामान्यविशेषभावः संबन्धः। गृहीता मतिर्न त्याज्येति व्यंग्यं अर्थान्तरमस्यि(?) (संक्र)मितत्वमाह **अत्रेति**। द्वितीयमुदाहरति **क्वचिदिति**। तद्वाच्यं कृतापकारं प्रति विपरीतलक्षणया कश्चिद्वक्ति, हे सखे, त्वया बहु यत्र यस्मिन् विषये उपकृतं तत्र किमुच्यते, परं तु अनेनोपकारकरणेन स्वसौजन्यमेव स्थापितं, तस्मादीदृशमेवोपकारं कुर्वन् बहुकालमखंडितं सुखितं यथा भवति तथा आस्स्व। अत्रापकारिणि उपकारित्वमयुक्तमित्यनुपपन्नो मुख्योऽर्थः विरोधरूपसंबन्धेनो-(ना)पकारित्वं लक्षयति। अपकारेऽपि प्रियमेवोच्यत इति। स्वसाधुत्वं व्यंग्यम्। तादृशकर्मणः पुनरनाचरणं च। वैपरीत्यादपि लक्षणा प्रवर्तते। तथो(था) चोक्तं,

अभिधेयेन संयोगात्सामीप्यात्समवायतः।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता॥

लक्षणामूलमविवक्षितवाच्यमभिधाय अभिधामूलं विवक्षितान्यपरवाच्यं निरूपयति। **विवक्षितमिति**। अबाध्यत्वाद्वक्तुमिष्टं व्यंग्यार्थोपसर्जनीभूतं वाच्यं यत्र सोऽन्यो विवक्षितान्यपरवाच्यो नाम ध्वनिः। अन्यपरशब्दार्थमाह, **अन्येति**। तस्य द्वैविध्यमाह, **एष चेति**। एष विवक्षितवाच्यः। लक्षयितुमशक्यः क्रमो यस्य तत् अलक्ष्यक्रमं तादृशं व्यंग्यं यत्र सः रसादिध्वनिः। लक्ष्यः व्यंग्येन सह व्यंजकस्य क्रमो यत्र स द्वितीयो भेदः। शब्दशक्तिमूलानु{क}रण[न] रूपः व्यंग्यादिध्वनिः। क्रमा(म)स्यालक्ष्यत्वमुपपाद[य]न्वा(न्व्या)चष्टे, **अलक्ष (क्ष्ये) {ती} ति**। वक्ष(क्ष्य)माणलक्षणा विभावादय(यो) व्यंजका (काः)। तैरसौ व्यज्यत इत्यस्ति क्रमः। तथापि सद्यप्रतीतेः उत्पलपत्रशतव्यक्तिभेदवत्स न लक्ष्यत इत्यर्थः। तत्रालक्ष्यक्रम(मं) दर्शयति। तत्रालक्ष्यक्रमलक्ष्यक्रममध्ये शृंगारादयो रसाः, रत्यादयो भावाः, रसाभासाः, भावाभासाः, भावशान्तिश्च आदिर्यस्य समुदायस्य {समुदायस्य} स समुदायरूपोऽर्थः अक्रमः अलक्ष्यक्रमव्यंग्य इत्यर्थः। {निरतिशयस्य अपरिच्छिन्नस्य}

निरतिशयस्य अपरिच्छिन्नस्य शांता(न्त्या)द्यसंभवात् रसशांत्यादिर्भेदो नोक्तः । रसाभाव(स)त्वं तु रसस्य तिर्यगादिष्वस्ति ।

ननु रसादेरलंकारत्वादुपसर्जनत्वेन गुणीभूतां (त)व्यंग्ये मध्य[म]काव्ये निरूपणं युक्तमित्याशंक्याह, **भिन्न इति**। यत्र रसादिः प्राधान्येन विवक्षितः तत्र अलंकार्यः । अतोऽयं रसवदाद्यलंकाराद्भिन्न इत्यत्र कथनमुचितमित्यर्थः । **भावशांत्यादि**रित्यत्रादिशब्दार्थमाचष्टे **आदी**ति । **अलंकार्य**तयेत्येतद्व्याकरोति **प्रधानतये**ति । कीदृशीयमित्याकांक्षायां शून्यं वासगृहमित्यादौ प्रदर्श(र्श्य)त इत्याह **यत्रे**ति । रसाद्यलंकारः कुत्र स्यात्तत्राह **अन्यत्रे**ति । अन्यत्र मध्यमकाव्य इत्यर्थः । उदाहरिष्यत इति । अयं स रस(श)नोत्कर्ष(र्षी) इत्यादिना उत्तरसूत्रमवतारयति **तत्रे**ति । रसभावतदाभासादिमध्ये । रत्यादेश्चित्तवृत्तिविशेषस्य चिरस्थायिनः भावस्य । लोकव्यवहार(रे) त्वा(या)नि कारणानीत्युच्यते(न्ते) तानि अत्र स्वानुकृतिलक्षणेन [आ]द्ये तदो(द)दोषावित्याद्युक्तलक्षणे काव्ये च, **चे**द्यदि, स्युः, तत्तर्हि, कारणानि विभावाः, कार्याणि अनुभावाः, सहकारीणि व्यभिचारिण इत्युच्यन्ते । **तै**रभिव्यक्तः सन् तिष्ठत्यस्मिन् इति स्थायी रत्यादिको भावो रस इत्युक्तः ।

संमतिमाह **उक्तं ही**ति । एतदेव सूत्रं रसस्य केचिदुत्पत्तिपरत्वेन, केचिदनुमितिपरत्वेन, केचिद्भावनापरत्वेन, केचिद्व्यक्तिपरत्वेन व्याकुर्वन्तीत्याह । **एतदि**ति । तत्रोत्पत्तिपक्षं तावदवतारयति **विभावैरि**ति । वागाद्यभिनययुक्ता स्थायिव्यभिचारिरूपाश्चित्तवृत्तयो विभाव्यन्ते विशेषेण भाव्यन्ते यैस्ते विभावाः । तत्र कामि[नी] त्यादि आलंबनकारणत्वेनालंबनविभावः । उद्यानादि उद्दीपकत्वेनोद्दीपनविभावः । द्विविधैस्ते(स्तैः) स्थायी कार्यकारणसम्बन्धादुत्पादितः । अनुभावयन्ति ज्ञापयन्ति गम्यगमकभावसम्बन्धा[त] इ(र)त्यादिकमित्यनुभावास्तैः ज्ञायमानः । द्वि(वि)विधस्या(मा)भिमुख्येन रसेषु चरन्तीति व्यभिचारिणः, तैः पोष्यपोषकभावसंबन्धादुपचितः । मुख्यवृत्त्या रामादावनुकरणीये रामादिरूपत्वानुसन्धानादनुकर्त्तरि नटे स(सा)माजिकैरास्वाद्यमानो रस इत्युच्यत इत्यर्थः । अस्मिन्नुत्पत्तिपक्षे आलंबनस्य रसं प्रति जनकत्वेऽपि उद्दीपनस्य रसं प्रति जनक-

त्वमुद्दीपकत्वहानिः । नापि पोषकत्व(त्वं) व्यभिचारिण(ण।)मिव । तथान्यत्रापि व्यञ्जकत्वम[स्या]भिव्यक्तेर्भट्टलोल्लटादिभिरनंगीकारात् । न च तैः स्वतोऽभिव्य(व्य)क्तिर्नेष्यते उत्पन्नस्य पश्चादिष्यत इति वाच्यम् । अभिव्यक्तेर्ज्ञप्तिपर्यायत्वेन अनुभावादीनामेव कार्यत्वात् । नापि ईषदतिशयाधानहेतुत्वमुद्दीपकत्वम्, जनित इति पदविरोधात्, इत्यरुच्या अनुमितिपक्षमवतारयति, **राम एवाय { म } मिति** ।

राम एवायमित्ययोगव्यवच्छेदेन, अयमेव राम इत्यन्ययोगव्यवच्छेदेन च सम्यक्प्रतीतिः । न च वाच्यं नटे रामोऽयमित्यादिप्रतीतिर्भ्रांतेति । लोके बाधशिरस्काया एव प्रतीतिः(तेः) भ्रांतव्यवहारात् । तद्वैलक्षण्येन सम्यक्ताभिधानात् । अयं न राम इति उत्तरकालीन बाधकज्ञाने सति रामोऽयमिति प्रतीतिस्तु मिथ्या । यद्वा नेदं रजतमिति बाधके सति शुक्तिरजतप्रतीतिः, रामः स्यान्न वा राम इत्युभया(य) कोटया (ट्य) वलम्बनत्वेन संशय(यः), रामसदृशोऽयमिति सादृश्यप्रतीतिः । एताभ्यः प्रतीतिभ्यो विलक्षणा(ण)या रसो (रामो)ऽयमिति प्रतिपत्त्या ग्राह्ये नटे चर्व्यमाणो रस इत्युत्तरत्रसम्बन्धः ।

ननु सम्यङ्मिथ्यादिप्रतीतिविलक्षणप्रतीतिर्न दृश्यत इत्याशंका(क्या)ह-**चित्रे**ति । भित्त्यादौ लिखितस्तुरगः पूर्वोक्तज्ञानचतुष्टयविलक्षणज्ञानेन गृह्यते तद्वत् ।

तथा चोक्तं—

प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः ।
धीरसावयमित्यस्ति नासावेवायमित्यपि [ ॥ ]
विरुद्धबुद्धिसंभेदादविवेचितविप्लवः ।
युक्त्या पर्यन( नु )युज्येत स्फुरन्ननुभवः कयेति [ ॥ ]

**सेयमि**त्यादि । नायकस्य वचनम् । ममांगेषु सुधारसच्छटा अमृतरससमूहरूपा दृशोर्निबिडकर्पूरशलाका, मनसः शरीरिणी मूर्तिमती मनोरथश्रीः, सेयं परिदृश्यमाना प्राणेश्वरी प्रियतमा लोचनमार्गं गता । अहं दैवात् चपलायतने-

त्रया तया { विवक्षितय } स्त्रिया वियुक्तश्चाभू(भ)वम् । निबिडाः लोलाः मेघाः, यस्मिन् [सः] अयं कालश्च समुपागत इत्यादि काव्यद्वयानुसन्धानबलात् नटः प्रथमश्लोकप्रतिपाद्यमालम्बनरूपं विभाषं(वं) द्वितीयश्लोकप्रतिपाद्यं उद्दीपनरूपं विभावं प्रकाशयति । तथा शिक्षया उपदेशेन यो[ऽ]भ्यासः पौनःपुन्येन प्रवृत्तिस्तेन निर्वर्त्तितानि स्वेषां व्यभिचारिणामेवानुभावलक्षणानि कार्याणि तेषां प्रकटनेन कारणभूतान् व्यभिचारिणः प्रकाशयति ।

कार्यभूतानुभावाभिनयेनानुभावं प्रकाशयति । अत एव प्रकटनेन चें(चे)त्यत्र चकारः प्रयुक्तः । अथवा अभ्यासेन निर्वर्त्तितं यत्र स्वकार्यं कृत्रिमनिजानुभ-(भा)वार्जनं तत्प्रकटनेन एव नटेनैव कर्त्रा प्रकाशितेः(तैः) । ननु नाट्यसमये नायि(य)का(क)रामादीनामभावेन रसाभावात् विभावादीनि कृत्रिमाण्येव, तैः कथं सामाजिकानां रसानुमितिः इत्यत आह, **कृत्रिमैरपीति** । भाविकैरपि कृत्रिमत्वेनानवभासमानत्वादनुमितिर्युक्तेति भावः । विभावानुभावव्यभिचारिशब्दव्यपदेश्यं अलौकिकं चमत्कारकारित्वात् । एवंविधैः कारणकार्यसहकारिभिः कृत्वा गम्यगमकरूपा[त्] संयोगात् सम्बन्धात् प्रतीयते । नन्वनुमीयमानत्वेन रसस्य वह्न्यादिसादृश्यं स्यात् , नेत्याह । **वस्त्व(स्त्वि)** ति । वस्तुतो रामादेः सौन्दर्यबलात् रसनीयत्वेन आस्वाद्यत्वेन कृत्वा अन्या { न्य } नुमीयमानानि वह्न्यादीनि, तेभ्यो विसदृशः, अथवा वस्तुतः अनुमीयमानरत्यादिपदार्थस्य निरतिशयमनोहरत्वं वस्तुसौन्दर्यं, तस्मात् । ननु नटे स्थायिनो रत्यादेरभावात् कथमनुमीयमानत्वं अत आह, **स्थायित्वेनेति** । तत्र नटे अविद्यमानोऽपि तत्प्रकाशितविभावाद्युपायबलात्स्थायित्वेन विद्यमानत्वेन संभाव्यमानो(ना)नुमितिर्मह-त्त्येवेत्यर्थः । चर्व्यमाणः सचमत्कारं साक्षात्क्रियमाणः ।

ननु सामाजिकानामेव रसानुभव इ[ति चेन्न,] संभोगविप्रलंभात्मकरत्यादिप्रतीतेर्लौकिकत्वेन दुःखात्मकत्वाच्च । न द्वितीयः । अभिनय एवाभिनिवेशात् वस्त्वादिसंपादनपरत्वाच्च । तस्मात् सामाजिकानां चर्व्यमाण इति साधूक्तम् ।

अस्मिन्नपि पक्षे अरुच्या भट्टनायकमतमवतारयति **न ताटस्थ्येने**त्यादिना। भट्टनायकः अनुमितिपक्षं विकल्पपूर्वकं दूषयति। न **ताटस्थ्येने**ति अयमभिप्रायः। रसस्य प्रतीतिः परगतत्वेन स्वगतत्वेन च। नाद्यः। स्वरसनीयत्वाभावेन सर्वदा रसस्य नटे रसोऽस्तीत्येवमाकारेण तटस्थत्वप्रसंगात्। न द्वितीयः। अनुमीयमानत्वचर्व्यमाणत्वयोर्विरोधात्, करुणे दुःखित्वप्रसंगेन। तत्र प्रवृत्त्यभावप्रसंगाद्वेति। स एवोत्पत्तिपक्षं दूषयति—**नोत्पद्यत** इति। दंडचक्रादीनां निवृत्तौ घटादिवत् विभावादिकारणानां निवृत्तावपि रसस्यावस्थानप्रसंगात्। परगतत्वेन स्वगतत्वेन वेत्यादिउ(द्यु)क्तदूषणप्रसंगाद्वेति भावः। वक्ष्यमाणमभिव्यक्तिपक्षमपि दूषयति **नापि(भि)व्यज्यत** इति। सर्वेषामभिव्यक्तिप्रसंगेन भावकानामेवाभिव्यक्तिरिति नियमाभावप्रसंगात्, शृंगारस्य पूर्वमसिद्धत्वात् परगतस्वगतत्वेत्याद्युक्तदूषणप्रसङ्गाद्वेति भावः। एवमनुमित्युत्पत्त्यभिव्यक्तिपक्षं(क्षान्) दूषयित्वा भट्टनायकः स्वसिद्धांतमाह, **अपि त्विति**। दोषाभावगुणालङ्कारमत्त्वे काव्ये चतुर्विधाभिनयरूपे नाट्ये च काव्यरूपस्य शब्दस्य अभिधाभावा(व)नातद्भोगीकृतिरिति त्रयो व्यापारः (राः)। अभिधायकत्वं वाक्यभूतशब्दार्थालंकारादिविषयं, भावकत्वं शृङ्गारादिरसादिविषयं, भोजकत्वं सहृदयविषयमिति विवेकः। अभिधातः अभिधायकत्वव्यापारात् द्वितीयो भावकत्वव्यापारः। नटं प्रेक्षकांश्च प्रति विभावादीनां साधारणकारणः साधारणीकृत आत्म (त्मा) विभावादयो येन, एवंविधेन भावकत्वव्यापारेण भाव्यमाना (नो) भावितः साधारण्येनानुसन्धीयमानः स्थायी रसः, भोगेन भोजकत्वव्यापारेणानुभवस्मृतिविलक्षणेन भुज्यते चर्व्यते। कीदृश्ये (शे) न भोगेन। सत्त्वस्य सत्त्वाढ्यस्य भावस्य उद्रेकः सर्वांगीणाभिव्याप्तिः, तस्य प्रकाशः प्रकटनं, तेन य आनन्दः, तन्मयी या संविद् ज्ञानं, तत्र या विश्रांति वि(वि)श्रमः, सैव सतत्त्वं परमार्थो यस्य, तत्त्वमेव सतत्त्वं, तेन परब्रह्मास्वादरूपेणेत्यर्थः। तथा चोक्तं—

अभिधा भावना चान्या तद्भोगा(गी)कृतिरेव च।
ते शब्दालंकृता जाते अभिधाधामतां ततः [॥]

( अभिधाधामतां याते शब्दार्थालङ्कृती ततः ॥ )
भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः ।
तद्भोगा(गी)कृतिरूपेण व्याप्यते सिद्धिमान्नरं(रः) [ ॥ ] इति ।

अयमपि पक्षो न साधीयान् प्रतीतिव्यतिरिक्तस्य भोगशब्दार्थस्य निर्वक्तुमशक्यत्वात् । उत्पत्त्यनंगीकारे रसस्य नित्यत्वप्रसंगात् । अभिव्यक्त्यनंगीकारे रसस्यासत्वप्रसंगात् । उत्पत्त्यभिव्यक्तिव्यतिरिक्ततृतीयपक्षसद्भावे प्रमाणाभावादित्यरुच्याभिनवगुप्तमतं निर्दुष्टत्वात् सिद्धान्तयन्नाह **लोक** इति ।

लोके काव्यनाट्यव्यतिरिक्तस्थले प्रमदाकटाक्षभुजो(जा)क्षेपनिर्वेदादिभिः कारणकार्यसहकारिभिः लिंगभूतैः कृत्वा स्थायिनो लौकिकचित्तवृत्तिविशेषस्य रत्यादिभावस्यानुमाने अभ्यासः, पौनः पुण्ये(न्ये)न परिशीलनं, तेन पाटवं प्रज्ञातिशयः, तद्वतो(तां) सामाजिकानां वासनात्मकतया स्थित इत्युपरिसम्बन्धः । अनेनैतदुक्तं भवति । लोके प्रमदादिभिः स्थायिनमनुमिमाना एव अत्र शृङ्गारादिरसे अधिकारिणः न श्रोत्रियब्रह्मच(चा)र्यादयः । { नान्यमतर्गता अपि एवं शृङ्गारिणश्च न शान्तरस इति } काव्ये नाट्ये वोक्तलक्षणे तैरेव प्रमदादिभिरेव लौकिककारणत्वकार्यत्वसहकारित्वपरिहारेण लौकिककारणादिशब्दवाच्यत्वं परित्यज्येत्यर्थः । कारणादिशब्दव्यवहार्यत्वाभावे कथं व्यवहार्यत्वमित्याशंक्य विभावा(व)नानुभावनव्यभिचारणव्यापारत्वेन लोकविलक्षणविभावानुभावव्यभिचारिशब्दवाच्यत्वमाह विभावनादीति । ननु विभावादीनां प्रतिनियतत्वेन किमसाधारण्येनेत्याह **साधारण्येने**ति । तत्र हेतुः संबन्धीति । सम्बन्धिविशेषस्वीकारः तत्परिहारश्च तयोर्नियमात् । तमेव सम्बन्धिविशेषस्वीकारमभिनीय दर्शयति ममैवैक इत्यादिना । तत्परिहारमभिनीय दर्शयति न **ममौ(मै) वेति इत्यादिना** । एवंविधैः प्रमदादिभिरभिव्यक्तः सामाजिकानां प्रेक्षकाणां रत्याद्यनुभवेन या वासना संस्कारः तदात्मतया स्थित्या पूर्वमनभिव्यक्तत्वेन स्थित इत्यर्थः । एवंविधः स्थायी रत्यादिको भावः शृङ्गारादिको रस इति सम्बन्धः इत्युच्यत इति शेषः ।

कीदृशो **रस** इत्यपेक्षायामाह । प्रमात्रा साधारण्येन साधारणतया गोच-रीकृता(तो) विषयीकृतः। ननु रसस्या (स्य) नियतपुरुषत्वे नियतत्वेन कथं साधारण्यमत आह **नियतप्रमातृगतत्वेनेत्यादिना**। विभावादयः साधारणोपाया(याः) तत्सामर्थ्यात् तस्मिन् काले विभावाद्यनुभवकाले विगलितायाः प्रतिनियतप्रमातृताया वशादुन्मिषितः स्फुरितः वेद्यांतरसंपर्कशून्यः अपरिमितो भावश्चित्तवृत्तिविशेषो यस्य प्रमातुः तेन प्रमात्रा, साधारणविभावनादिव्यापारवत्वात् विभावादीनां साधारण्यं, तद्बलात् प्रमातुरपि साधारण्यं, तेन रसस्यापि साधारण्यमिति भावः। न केवलं रसस्य साधारण्यं युक्तिसिद्धं किन्तु सर्वानुभवसिद्धमित्यभिप्रेत्य साधारण्येनेत्येतद्विशिनष्टि **सुकलेति**। विषयविषयिभावस्य भेदगर्भत्वात्प्रमात्रात्मभूतस्य रसस्य कथं विषयीकरणमत आह **स्वाकार** इति। स्वाकारः प्रमात्राकारः। यथा स्वाकारः प्रमा स्वात्मानमहं जानामीति ज्ञेयं रूपतया गोचरीक्रियते तद्वदित्यर्थः। अलौकिकरससद्भावे प्रमाणमाह **चर्व्यमाणते**ति। चर्वणानंतरकाले न तिष्ठतीत्यर्थः। अत एव आह **विभावादिजीवितावधिरि**ति। विभावादिव्यंजकाभावे व्यंग्यस्य रसस्याप्यभाव इत्यर्थः। लो (लौ)किकव्यंग्यव्यंजकवद्विभावादे रसस्य च भेदः। कि [मि] ति { । } न (च) प्रतीयत इत्यत आह **पानके**ति। यथा गुडादिनिर्मिते पानके अनेकरससद्भावेऽपि न पृथक्प्रतीतिस्तथेत्यर्थः। रसस्य लोकोत्तरकार्यश्रव(क्षम)त्वमाह **अलौकिके**ति। तदेव दर्शयति **परिस्फुरन्नित्यादिना**। सर्वांगीणमिति क्रियाविशेषणम्। विभावाद्यन्वयव्यतिरेकबलात् रसस्योत्पत्तिरस्तु नेत्याह। **न चे**ति। तत्र हेतुमाह **विभावे**ति। निमित्तकारणानां दंडादीनां नाशे घटादेरिव रसस्याप्यवस्थानप्रसंग इत्यर्थः। अस्तु तर्हि { न } ज्ञाप्यः। **नेत्याह नापी**ति। अज्ञान (त) तया स्थितो ज्ञाप्यो भवति। रसस्तु न तथेत्यर्थः। कथं तर्हि प्रतीयत इत्याह **अपितिवत्यादिना**। प्रदीपादिव्यंजनीयलौकिकघटादिव्यंग्यविलक्षणत्वेन व्यंजित आस्वादनीयः। ननु कारक [ज्ञापक]व्यतिरिक्तहेत्वभावादेतदसंगतमित्याशंक्य **तदेवालौकिकत्वमुच्यत** इति, न किंचिद्दूषणमित्याह **का-**

रकेत्यादिना। एवं तर्हि रस उत्पद्यते इति व्यवहारविरोध इत्याशंक्य भाक्तो व्यवहार इत्याह **चर्वणानिष्पत्येत्यादि**[ना]। तर्हि रसः प्रतीयत इति व्यवहारविरोध इत्याशंक्यायमपि व्यवहारो भाक्त इत्याह **लौकिकेत्यादिना**। विलक्षणशब्दः प्रत्येकमभिसंबध्यते लौकिकप्रत्यक्षादिप्रमाणविलक्षणताटस्था—(स्थ्या)वबोधशालिमितयोगिज्ञानविलक्षणवेद्यसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमिति(ते)तरयोगिसंवेदनविलक्षणं यच्च संवेदनं तद्गोचर इति उपचारात् प्रत्येयः ज्ञेयोऽप्यभिधीयताम्। लौकिकेति विशेषणं(णे)न प्रत्यक्षादिप्रमाणात् गुणालंकारादिमंडितव्यंजकव्यंग्यत्वेनालौकिकस्य रसस्य। वैलक्षण्यमुक्तम्। अवबुध्यते अनेनेत्यवबोधः। प्रमाणं(ण)ताटस्थे(स्थ्ये)न तथैतद्रूपेणावबोध(धो) जगद्ग्राहकं प्रमाणमित्यर्थः। तेन शालि यन्मितयोगिज्ञानं, योगस्य मितत्वमद्वैतानवगाहित्वेन। ताटस्थ्यावबोधशालीत्यनेन मितयोगिज्ञानाद्रसस्य वैलक्षण्यमुक्तम्। परिमितेतरयोगिना(नः) अपरिमितयोगिनः। समुपजातब्रह्मसाक्षात्कार [स्य] इत्यर्थः। तज्ज्ञानं कीदृशं तत् आत्ममात्रपर्यवसितम्। अत एव वेद्यस्य घटादेः संस्पर्शेन विषयीकरणेन रहितम्। अनेन परिमितेतरयोगिज्ञानाद्रसस्य विभावादिसंभिन्नत्वात् वेद्यघटितस्य रसस्य विलक्षणस्य(त्व)शुद्ध(सिद्धः)। ननु तद्ग्राहकं निर्विकल्पकमेवास्तु। तथा च व्यवहारो मुख्यः स्यादित्यत आह **तद्ग्राहकमिति**। विभावादिविशिष्टज्ञानजनकत्वेन तन्न निर्विकल्पमित्यर्थः। अस्तु तर्हि सविकल्पः। नेत्याह। **नापी**ति। अलौकिकानंदमयस्य ब्रह्मस्वरूपस्य रसस्य स्वयंप्रकाशत्वेन तद्ग्राहकं सविकल्पकम् न भवतीति भावः। ननु रसस्य निर्विकल्पकसविकल्पकग्राह्यत्वाभावे इतरनिषेधस्येतरविधिनांतरीयकत्वन्यायेन निर्विकल्पकसविकल्पकग्राह्यत्वं विकल्पमापद्य(द्ये)तेत्यत आह **उभयाभावरूपस्य चेत्यादि**। आपाद्यमानमुभयात्मकत्वमपि लोकोत्तरतां स्वयंप्रकाशरूपतामवगमयति। यदि कोटिद्वयमेव स्यात् विरोधस्तर्हि स्यात् न चात्र तथा स्वयंप्रकाशरूपायास्तृतीयकोटेरंगीकारादिति भावः। अथवा न कार्यं इत्यादिनोत्पत्यभिव्यक्तिनिषेधान्यतरनिषेधन्यायेनोत्पत्यभिव्यक्तिरूपं विरुद्धमापद्येतेत्यत आह **उभया-**

भावरूपस्य चेत्यादि । अन्यत्समानम् । आचार्यग्रहणेन च बहुवचनेन च अयमेव पक्षः सिद्धांत इति सूचितम् ।

ननु विभावानुभावव्यभिचारिसंयोगादस्य रसस्य निष्पत्तिरिति विशेषाभिधाने व्यभिचारात् मिलिताः संमुग्धत्वेन निर्दिष्टा इत्यर्थः । ननु सामा(म्या)-दमुकस्य रसस्य निष्पत्तिरिति विशेषण(णं) किमिति नोच्यत इत्यत आह **व्याघ्रादय इत्यादि** इति । अनेन प्रकारेण पृथक् अमुकविभावादिसंयोगान्ये (न्ते)न–निर्देशेऽपि केवलाद्विभावात् केवलादनुभावात् केवलाद्व्यभिचारा[द्] रसनिष्पत्ति-दर्शनादित्याशंक्याह वियदित्यादिना ।। [आकाशं भ्रमरली(नी)लोदकगर्भमेवं-विध(धा)शाश्रीः भ्रमरकोकिलध्वनिभिरलंकृता भूमिर्नवांकुरचिह्नबंधा, अतः हे मुग्धे दयिते ने(न)तिप्रवणे मयि प्रसीद ।] अत्र आकाशादय उद्दीपनविभावा, दयित इत्यालंबनविभावः, एतैरेव केवलैः रसः प्रतीयते । नायकं प्रति दूतीवचनम् । प्रियायाः शरीरं परिमृदितबिशिनीवत् म्लानं, अस्याः क्रियासु प्रवृत्तिः क्लेशेन परिवारप्रार्थनाभिर्भवति । अभिनवगजदंतखंडकान्तिरस्याः कपोलः पूर्णस्य चंद्रस्य शोभां प्राप्नोति । अत्रांगम्लानत्वादेः केवलादनुभावाच्छृंगाररसोत्पत्तिः ।

कृतापराधं प्राणेश्वरं प्रति नाय(यि)काया नानाविधं भावमाह । नायिकायाश्चक्षुः कृतापराधे पुरुषे दूरस्थिते सति उत्सुकं, अनेनो(नौ)त्सुक्यमुक्तम् । समीपमागते सति विवृत्तं, अनेन व्रीडा । आगत्य च संभाषणं कुर्वे (र्वि)ति विस्फारितं विकसितं अनेन हर्षः सूचितं(तः) । आलिंगनं कुर्वे(र्वि)ति स(सं)[श्लिष्य]-त्यरुणं अनेन कोपः । गृहीतवस्त्रे सति अंचितभ्रूलतं अनेनासूया । पादयोः प्रणिपातं कुर्वे (र्वि)ति बाष्पं(ष्पां)बुपूर्णेक्षणं, अनेन प्रसादः । एवं प्रपंचनिपुणं जातम् । अत्रो(त्रौ)त्सुका(क्या)दिः(देः) केवलव्यभिचारिणः सकाशाद्निष्पत्तिः । यद्यप्येतेषु लोकेषु (लौकिकेषु) विभावादय केवला(लाः) { द्वयस्य } कारणत्वेन प्रतीयते(न्ते) तथाप्येतेषां प्राधान्यत्वे तेन तेनान्ययोराक्षेपात् सूत्रोक्तं मिलितानां कारणत्वं न कुत्रापि व्यभिचरतीति भावः । तत्र प्रथमश्लोके प्रसीदेति पदसामर्थ्य(र्थ्या)त् [स्तु]तिभावेन कटाक्षभुजाक्षेपाद्यनुभाववर्गः मुग्धपदाद्व्यभिचारिवर्गः, आक्षिप्यते ।

द्वितीयश्लोके अंगम्लान(ना) { व } दिना अनुभावेन कथमपोत(ति)पदार्पितः अभिलाषचिंतौत्सुक्यादिव्यभिचारिवर्ग(र्गो)विभा { ग } वश्च नायिकारूपः । तृतीये अ(औ)त्सुक्यादिना व्यभिचारिणा दूरादित्यादित्यादिपदार्पितः सहसा प्रसरणादिरूप(पः) अनुभावः, प्रेयसीति विभावश्चाक्षिप्यते ।

रसस्य सामान्यलक्षणमुक्त्वा रसस्य विशेषा{ नी हे त्या } [ना]ह तद्विति । यद्यपि नवमः शांतरसोऽस्ति तथापि तस्य नटनीयत्वाभावान्न(न्ना)ष्टव्याघातः । अत एवा { शस्यौ } [ष्टौ]नाष्ट(ट्य)रसा इत्युक्तम् । सर्वप्राणिसुलभत्वात्प्रधानत्वाच्च प्रथमोद्दिष्टस्य श्रृंगाररसस्य द्वैविध्यमाह, ने(त)त्रेति। संयुक्ताभ्यां युज्यत इति संभोगः । संभोगास्वादलोभेन वियुक्ताभ्यामात्मा लभ्यत इति विप्रलंभः । ननु संभोगस्य परस्परावलोकनादिभेदेनानेकत्वात्कथं द्वैविध्यमत आह तत्राद्य इति । तत्र श्रृंगारसंभोगमुदाहरति यथेति । स्वस्मिन्ननुरागे (गं) जिज्ञ(ज्ञा)समानेन केनचित्कामिना, शून्यं वासगृहं विलोक्य शयनात् शनैः किंचिदुत्थाय अलीकनिद्रामुपागतस्य पत्युर्मुखं वरं दृष्ट्वा, विश्रंभं परिचुंब्य तस्यैव जातपुलकां गंडस्थलीमालोक्य लज्जाव[न]तमुखी एवं स्वानुरागं प्रकाशयंती नवोढा काचन चिरं चुंबिता । शून्यमित्यनेन परां काव्यांगतं (परं काव्यगतं) उद्दीपनत्वं व्यज्यते । वासगृहमिति स्रगादिसुरतोपकरणसंपद्व्यज्यते । किंचिदुत्थायेति पूर्वशरीरमात्रेण शय्यात्यागः । शनैरिति, मिथः संदानितो(तेन) तु संक्षोभ(भो)नी(न) कृता(तः) । निद्राव्याजमिति अनुरागादित्वं स्वयमेव चुंबनादिकं करिष्यसीति तदीयं द्योत्यम् । विस्रब्धमिति अविमृश्यकारित्वम् । नम्रमुखीति लज्जातिशयेन व्याकुलत्वम् । पत्युरित्युद्दिश्य प्रियेणेति प्रतिनिर्देशात् तदासौ प्रियतम इति । हसतेति झटिति व्याजनिद्राफलप्राप्तिः । चिरमिति अशिथिलकेशग्रहत्वं तावद् चुंबिता यावदपगम(मः)संभोगांगीकारश्चेति व्यज्यते । एवं नायिकारब्धं संभोगमुदाहृत्य नायकारब्धं संभोगमुदाहरति तथा त्वमिति । कवेर्वचनम् । कांतशय्यासमीपे[ऽ]भिनिविष्टा या सखी तस्या नेत्रोत्सवेन प्रमुदिता भवतीषु स्थितास्वपि अयमेवं(व) चेष्टत इति लज्जया कृतस्मिता अतः तस्य:(स्याः)सखीजनं

प्रत्यवलोकनामात्रमेव नेत्रोत्सवः एवंविधः सखीजनः शुकः पाठनीयः सारिका भोजनीयेत्याद्यनी(ली) { य } कवचनोपन्यासं यथा तथा शनैर्निर्गतः। कस्मिन्सति । तस्या नायिकायाः बीटिका दाक्षिणात्यचोलिकाग्रंथिः तत्स्पृशि प्रियतमे इत्यभिधायिनि सति। अभिधानमेव किं अत आह हे मदनालसाक्षी-त्यादि । अनेनाग्राह्यो(म्यो)क्तिप्रकारेण संभोगेच्छा सूच्यते । { त्वं कंचु-लिकाग्रन्थिः तत्स्पृशि प्रियतमे इत्यभिधायिनि सति अभिधानमेव किं अत आह हे मदनालसाक्षीत्यादि अनेनाग्राह्योक्तिप्रकारेण संभोगेच्छा सूच्यते । } त्वं कंचुलिकामंतरेण रमणीयां शोभां दधासि । न केवलं चोलिक्या-शोभानुत्पत्तिः अपि तु तत्पिधानमपि भवतीत्येवकारार्थः । एवं संभोगरसमुदा-हृत्य विप्रलंभस्य पंचविधत्वमाह अपरस्त्विति । पूर्वमसंगे संगेच्छा अभिलाषः । संगे सत्येव कुतश्चित्कारणात् असंयोगे(गो) विरहः । सपत्नीषु कांतकृत-सन्मानाद्यसहनमीर्ष्या। देशान्तरगमनं प्रवासः । कुपितदेवादिकृते (तो) वाग्दंडः शापः । अभिलाषहेतुकमुदाहरति **प्रेमार्द्रा** इत्यादि । कस्यचित् कामिनो वचनम्। प्रेम स्नेहं, तदेव चुंबनादिना प्रकर्षं नीतं प्रणयः, स एव परिचयाति-शयेन प्रचीयमानो रागः । सु(सुं)दर्यास्ता एवंविधाश्चेष्टाः परिचयादुत्कट-रागोदया भवेयुः । { भवंतु } प्रार्थना { या } कल्पितास्वपि यासु चेष्टासु क्षणात् बाह्येन्द्रियव्यापारनिरोधी अंतःकरणस्य आनंदेन सांद्रा(द्रो)लयः तन्मयत्वं भवति । विरहहेतुकमुदाहरति **अयन्त्रेति**। नायकं प्रत(ति) दूती-वचनम्। निशांता(तां)तरे गृहमध्ये, अनेन सतीत्वम्। रात्रौ बाला वृत्तः(त्त)-विवर्त्तनयोर्व्यतिकरो यस्याः सा एवंविधा सती निद्रां नाधिगच्छति। तत्र हेतुः इतीति । अनेन प्रकारेण अनेककल्पनास्वीकृतचित्ता । अनेक कल्पा(ल्प)-नामेवाह । मम नायकः अन्यत्र अन्यस्यां नायिकायाम् । अनेन पत्यु(त्युः) अनुराग(गः) सूचित(तः) । व्रजतीति । का खलु कथा संभावनैव नास्तीत्यर्थः । तदेव दर्शयति योऽसौ यद्वचनेन मां नेच्छति(तीति) । अनेन परिचारानुकूलत्वम्। तादृक् सुहृदप्यस्य नास्ति । अथ च नागतः सहसा झगिति

विधेरयं प्रक्रमः कः । अत्रोक्ता एषा स्त्री विरहोत्कंठिता । तथा चोक्तं विर....
.......तु विरहोत्कंठिता ममे(ते)ति । ईर्ष्याविप्रलंभस्योदाहरणमाह **सा पत्युरित्यादि** । कविवचनम् । सा बाला भर्तृरग्रे प्रथमे अपराधसमये अप्रिय-प्रस्तावे केवलं रोदिति । कीदृशी । निर्मलकपोलयोर्यन्मूलं नेत्रयोरधोभागः, तत्र-क्षरितैः निमेषार्धबद्धबिन्दुजालतया लुठत्पतनशीलत्वेन लोलमुदकं येषां तैः, नैरन्तर्येण प्रथममेवोन्मृष्टकज्जलतया स्वच्छैः एवंविधैरश्रुभिः पर्यस्ते लंबितपक्ष्मणी नेत्रोत्पले यस्याः सा । ननु वक्रोक्त्यादिकं किमिति न करोतीत्यत आह । सख्या भावः सख्यम् । सखिदूतिवर्णिस्यो (भ्यो) यः । तेन उपदेशः । तं विना सविभ्रमं अंगवलनं वक्रोक्तिश्च ताभ्यां संसूचनं स्वाभिप्रायप्रकाशनं नो जानाति । रोदनत्वस्य सशब्दत्वपरिहाराय अश्रुभिरित्युक्तम् । अश्रुप्राचुर्यार्थं लोलोदकैरित्युक्तम् । चिरकालरोदनसूचनार्थं स्वच्छैरित्युक्तम् । स्वल्पकाले तु कज्जलसंबद्धत्वात् ।

प्रवासहेतुकं विप्रलम्भमुदाहरति **प्रस्थानमिति** । काचिद्भाविप्रोषितभर्तृकं आत्मानं प्रति सोपालंभमाह । हे प्रिय जीवितप्राण, प्रियतमे यातुं निश्चितं(त)मनसि सति सर्वे सुहृदः सहैव प्रचलिताः । कथमित्यत आह । प्रियसखैः वल्लभसहचरैः । एतद्विशेषणं विभक्तिविपरिणमेन सर्वत्र योजनीयम् । प्रिये तिष्ठति तिष्ठद्भिः गच्छति गच्छद्भिरित्यर्थः । वलयैः कंकणैः प्रस्थानं कृतं दौर्बल्यात्, अश्रुभिरनवरतं गतं अश्रूणामप्रवृत्तिरेवावस्थितिः गतिश्च प्रवृत्तिरेव न त्वभावः । तथा सत्यश्रूणामभाव एव स्यात् । धृत्या संतोषेण क्षणमपि न स्थितं, चित्तेनापि प्रथममेव गंतुमुपक्रांतं, अतस्त्वया(य्य) पि अवश्यं गन्तव्ये सति सु(लु)प्तसार्थः किमिति परित्यज्यते । गम्यतामेवेत्यर्थः । प्रियतमे गंतु(तुं) निश्चितचेतस्यपि नायिकाजीविते निरपेक्षा बभूव किल । गते सति किमु वक्तव्यमिति भावः । शापहेतुकं विप्रलंभमुदाहरति **त्वामालिख्येति** । हे सखि धातुरागैः प्रणयकुपितां त्वामालिख्य आत्मानं तं चरणपतितं यावत्कर्तुमिच्छामि तावन्मुहुर्मुहुरूपचितैरश्रुभिः मे दृष्टिरालुप्यते । तस्मिंश्चित्तेपि आवयोः संगमं क्रूरो विधिः न सहते ।

एवं शृंगारं सप्रपंचमुदाहृत्य हास्यादीनामुदाहरणकथनं प्रतिजानीते हास्यादीनामिति। तत्र हास्यस्योदाहरणमाह **आकुच्चे(ञ्चये)** ति। कविवचनम्। वेश्या अशुचिं हस्तमाकुंच्य प्रतिपदं प्रतिक्षणं मंत्रपूतानां जलानां बिन्दुभिः पवित्रे मम शिरसि स्थूलध्वनिप्रहितथूत्कारं यथा तथा प्रहारं दत्तवती। अहं हतोऽस्मि। हा हा खेदे इति। विष्णुशर्मा कश्चित् रोदनं { स } करोति। अत्र विकृतचेष्टादिभिर्विभावः, कपोलोत्पुलकाद्यनुभ(भा)व(वः)रूपादिव्यभिचारी हासस्थायिभावो हास्यो रसः।

करुणरसस्योदाहरणमाह **हा या(मा)त** इति। राजजनीमरणे कविवचनम्। हा मातः त्वरितासि इ(अ)तिवेगेन गतासि। कुत्र वर्तसे किमेत (द्) जां (जा)तम्। हा देवताः ब्रात्मणानामाशिषः क(क्व)। प्राणान् धिक् विनश्वरत्वात्। अकस्माद्वज्रं किं पतितं, अंगेषु अग्निः पतितः, लोचने दग्धे, इत्थमनेन प्रकारेण घर्घरा मध्ये रुद्धाः करुणा [या]सां ताः, नगरस्त्रीणां विलापवचनानि। चित्रलिखितानपि प्राणिनो रोदयंति। भित्तीरपि शतधा कुर्वंति, चेतनान् रोदयंतीति, किमु वक्तव्यमिति भावः। अत्रेष्टनाशादिविभावः दैवोपालंभाश्रुपाताद्यनुभावः चित्रा(न्ता)दि व्यं(व्य)भिचारि (री) { णः } शोकस्थायिभ वः करुणा(णो) रसः।

रौद्ररसमुदाहरति **कृतमनुमतमि**ति। अश्वत्थाम्नो वचनम्। मनुजपशुभिः निर्मर्यादैरुच्छृंखलैरुद्यतशस्त्रै र्ये(र्यैः) भवद्भिः गुरूणां द्रोणाचार्याणां हननलक्षणं पातकं कृतं, अनुमतमंगीकृतं, दृष्टं वा, भीमार्जुना[न] सहितानां तेषां, भवता विष्णुना सार्धमसृङ्मेदोमांसैर्दिशां बलिमयमहं करोमि। अत्र पितृवधादिर्विभावः, भ्रुकुटीकरणाद्यनुभावः, अमर्षादिव्यभिचारी, क्रोधस्थायिभावो रौद्रो रसः।

वीररसमुदाहरति **क्षुद्राः संत्रासमि**ति। इन्द्रजितो वचनम्। हे क्षुद्राः कपटाः, भयं परित्यज्यत। चूर्णितेन्द्रगजकुंभाः एते ममामी बाणाः युष्मदेहेषु निष्पतंतः परे(रां) लज्जां दधति। हे सौमित्रे लक्ष्मण तिष्ठ। त्वमपि कोपानां पात्रं न हि। अहं मेघनादः इन्द्रजिन्ननु किंचिद्भ्रूभंगविलासेनैव निवारितसमुद्रं राम-

चंद्रमन्वेषयामि । अत्र प्रतिनायकः विभावः धैर्याद्यनुभाव(वः) चिंतादिव्यभिचारी उत्साहस्थायिभावो वीररसः ।

भयानकरसमुदाहति ग्रीवेति । दुष्यंतवचनम् । अयं श(मृ)गः पश्चादागच्छति, रथे कंठ[स्य]वक्रीकरणमनोहरं यथा तथा मुहुर्दत्तदृष्टिः सन् , बाणपतनभयात् स्थूलेन पृष्टभागेन अर्धेनेत्यनेन पश्चाद्देशः(शे)[न] पूर्वभागं प्रविष्टः, अर्धभक्षितैः श्रमेण विततमुखाद् भ्रंशिभिः बालतृणैर्विक्षिप्तमार्गः, एवंविधः सन् , अधिकलंघनत्वात् आकाशे बहुतरं प्रयाति भूम्यां स्वल्पं प्रयाति, पश्य । अत्र विकृतस्वरश्रवणादिर्विभावः । मुहुश्चलविलोकनाद्यनुभावः । शंकादिव्यभिचारी भयस्थायिभावो भयानको रसः ।

बीभत्सरसमुदाहरति उत्कृत्योत्कृत्येति । स्मशानवर्णनम् । प्रेतानां मध्ये दरिद्रः करंकात् शवात् चर्म प्रथमं छित्वा छित्वा पश्चात् पृथूच्छूनते(त्वे)नाधिकानि, अंसं गुदप्रदेशं पृष्टपिंडाद्यवयवप्रदेशेषु सुलभानि, अतिदुर्गंधीनि, मांसानि भक्षयित्वा, श्रांता(तः) { नि } , स्वक्नानि स्रा(सा) यंतनेत्राणि येन, प्रकटितदतः एवंविधः सन् उत्संगस्थितान् शवान् अस्थिषु लग्न(ग्नं) विषमस्थानगतमपि मांसं अव्यग्रं यथा तथा भक्षयति । अत्र अवस्र(ग्द) र्शनादिविभावः नासावि-[कुञ्च] { ण } नाद्यनुभावः अपस्मारादिव्यभिचारी जुगुप्सास्थायिभावो बीभत्सः।

अद्भुतरसमुदाहरति चित्रमिति । नायकवचनम् । एषः पुरुषः महान् विकाररहितः, चित्रं बत हर्षे { ण } , एषा कांतिः क्व, न कुत्रापि, प्रकारः अभिनव एव, धैर्यं लोकोत्कृष्टं, अहो प्रभाव , आकृतिरपि का अपूर्वैव, ब्रह्मण एतद्विषयः सर्ग(र्गः) सृष्टिर्नूतनः । अत्र लाकोत्तरवस्तुदर्शनादिविभावः नेत्रविकासाद्यनुभावः हर्षादिव्यभिचारी विस्मयस्थायिभावोऽद्भुतरसः।

स्थायिभावापरिज्ञाने शृंगारादिरसनिरूपणं कर्तुमशक्यमित्यभिप्रेत्योत्तरश्लोकमवतारयति एषामित्यादि । एषां शृंगारादिरसाना[म्] । श्लोकस्य व्याख्यानापेक्षां वारयति स्पष्टमित्यनेन । वागंगाभिनयात्मका बहवोऽर्था विभाव्यंते उमाद्यंते येन स विभावः । स चालंबनोद्दीपनभेदेन द्विविधः । वागंगादिभिर्यस्मादर्थोऽनुभाव्यते सः वागंगोपांगसंयुक्तः अनुभावः ।

एतौ स्पष्टत्वादुपेक्ष्यस्वभावरूपत्वेन उत्ज्ञानत्व[?]मनि(भि)प्रेत्याह व्यभिचारिण इति । स्वावमाननं निर्वि(र्वे) { व } दः तत्त्वज्ञानेन आपा(प)दा वा ईर्ष्यादिना वा अस्योत्पति (त्तिः) । निष्पा(ष्प्रा)णता ग्लानिरित्याद्यायास ........क्षुद्भिरस्या उत्पत्तिः । अनर्थप्रतिपत्तिः शंका, परक्रौर्यात्स्वदुर्णया(?)द्वास्या उत्पत्तिः । असूया परोत्कर्षाऽक्षमा, गर्वदौर्जन्यमन्युभ्योऽस्या उत्पतिः(त्तिः) । मदः हर्षोत्कर्षः, पानादस्योत्पत्तिः । श्रमः खेदः, अध्वगआ(त्या)देरस्योत्पत्तिः । आलस्यं जृंभादिमत्, क्षैव्यश्रमादिभिरस्योत्पत्तिः । दैन्यं अनौजस्यं, दौर्गत्यादौ(दे)रस्योत्पत्तिः । चिंता ध्यानमिष्टानाप्तिः (प्तेः) अस्योत्पत्तिः । मोहो विचित्र(त्त)ता प्री(भी)तिर्दु(दुः)खानुविवेशा(श)[चिं]तनैरस्योत्पत्तिः, स्मृतिः संस्कारः, सदृशज्ञानचिंताद्यैरस्या उत्पत्तिः । धृतिः संतोषः, ज्ञानशक्त्यादेरस्या उत्पत्तिः । हर्षः प्रसन्नतायां सत्यां अश्रूद्भेदादि[दिः] उत्सवादिभ्यः अस्योत्पत्तिः । आवेगः संभ्रमः, अभिनयादिभिरस्योत्पत्तिः । जडता अप्रतिपत्तिः इष्टानिष्टदर्शना(न)श्रतिभिरस्या उत्पत्तिः । गर्वः मदः, अभिजनलावण्यबलैश्वर्यादिभिरस्योत्पत्तिः । निद्रा मनःसंमिलनं, चिंतालस्याक्षमादिभिरस्योत्पत्तिः । अपस्मारः आवेशः, ग्रहदुःखाद्यै(दिभि)रस्योत्पत्तिः । सुप्तं केवलश्वासोच्छ्वासक्रियाविशिष्टं निद्रोद्भवं, { विबः } जं(जृं)भादिमादनविशिष्टपरिणामादेरस्योत्पत्तिः । अमर्ष(र्षः) अभिनिविष्टता, अधिक्षेपावमानादेरस्योत्पत्तिः । अवहित्थं आकारगोपनं, उग्रता दुष्टे पुरुषे अपराधदौमु(र्मु)ख्य चौर्य(र्यै)श्चंडत्वं, मति(तिः) श(शा)स्त्रादेवतत्त्वधीः, व्याधयः सन्निपाताद्याः । उन्मादः अप्रेक्ष्यकारिता, संनिपातग्रहादिभिरस्योत्पत्तिः । मरणं प्रसिद्धम् । गर्जितादिना उत्पन्नो मनःक्षोभत्रा(त्रा)सः । वितर्को विचारः, संदेहस्योत्पत्तिः । ननु निर्वेदस्यामंगलस्य प्रथमत उपादानमसंगतमित्याशंक्य शांतरसं प्रति स्थायिभावत्वमप्यस्यास्तीति प्रथमतस्तस्योपादानमित्याह **निर्वेदस्येत्यादिना** । निर्वेदः स्थायिभावो यस्य ।

शांतरसमुदाहरति **यथेति** । भर्तृहरिवचनं स्पष्टम् । अत्र वैराग्यादिविभावः शमाद्यनुभाव(वः) धृत्यादिव्यभिचारी निर्वेदस्थायिभाव(वः) शांतो रसः । अत्र

विरक्ता एवाधिकारिणः । न चैवं सर्वविषयत्वाभावाद्रसत्वाभाव इति वाच्यं, शृंगारस्यापि सर्वविषयत्वाभावेनारसत्वप्रसंगात् ।

रसभावतदाभासेत्यत्रासंलक्ष्यक्रमव्यंग्यत्वेन भाव उद्दिष्टस्तस्येदानीं लक्षणमाह **रतिरिति** । देवादिविषया रति { । } र(रं)जिता { र } व्यंजिता सती भावः प्रोक्त(क्तः) । तथा व्यभिचारो अंजितः सन् भावः प्रोक्तः । अंचि(ञ्जि)-त इति पात्रे वर्णित इत्यर्थः । देवादीत्यत्रादिशब्दार्थमाह **आदिशब्दादिति** । न तु कांतादिविषयेति वक्तव्यं, कांताविषयरतेरपि भावत्वादित्याशंक्याह **कांताविषयेति** । तु शब्दः देवादिविषयरतेर्विशेषद्योतनार्थः । यद्यपि कांताविषयरतेर्भावत्वं तथापि विभावादिभिरुपचिता सा शृंगाररस इति प्रसिद्धेत्यत्र नोक्तेति भावः ।

देवविषयं भावमुदाहरति **कंठेति** । कस्यचिद्भक्तस्य वचनम् । हे ईश, कंठकोणविनिविष्टं विषमपि मे महामृतं, स्वीकृता(त)न(म)मृतमपि भवच्छरीराद्भिन्नवृत्ति यदि तर्हि तदमृतं मे न रोचते । मुनिविषयं भावमुदाहरति **हरत्यघमिति** । यस्य प्रसादादहमेव विप्लु(भु or ष्णु) रित्यादिश्लोकेषु गुर्वादिविषयभावोदाहरणं इ(द)ष्टव्यमित्याह **एवमन्यदिति** ।

व्यभिचार(रि)भावमुदाहरति । कस्यचित् कामुकस्य मित्रं प्रति वचनम् । हे भ्रातः, अद्य मया स्वप्ने प्रियतमा कोपपराङ्मुखो सती पाणिना मा स्पृश इत्युक्त्वा गंतुं प्रवृत्ता सती दृष्टा । ततः अहं यावदालिंग्य प्रियवाक्यशतैः प्रियतमामाश्वासयामीति जाने तावद् धूर्तेन दैवेन अहं निद्रादरिद्रः कृतः, बोधित इत्यर्थः । अत्र को वा व्यभिचारीत्यत आह **अत्रेति** । असूया शठशब्देन व्यंजिता । अत्रेर्ष्याहेतुकस्य विप्रलंभरसस्य सत्वेऽपि प्राधान्येनासूयाकृतस्य चमत्कारस्यैव प्रतीतेः तेन व्यपदेशः ।

एवं रसभावौ लक्षयित्वा क्रमप्राप्तं तदाभासं लक्षयति **तदिति** । तदाभासा इत्यत्र तच्छब्दार्थमाह तदिति । तत्र रसाभासभावाभासयोर्मध्ये रसाभासस्योदाहरणमाह **स्तुम** इति । पुंश्चलीं प्रति कामिवचनम् । हे शोभननेत्रे,

यं प्रियं विना क्षणमपि ना(न) रमसे कं स्तुमः यमन्वेषयसि युद्धयज्ञे प्राणान् को विलो(ले)भे दत्तवान् यद्वा रणे प्राणत्यागी कृतार्थः तथा यथा मृग्यमाणोऽपीत्यर्थः। विपूर्वो लभिर्दाने। हे वरानने बलाद्यमालिंगसि सुलग्ने जातः स(सः) कः, हे कामवसते यं ध्यायसि कस्यैषा तपः श्री(श्रीः)। अत्र शृङ्गाररसस्याभासत्वमाह **अत्रेति**। एकस्याः रमणमृ ाण (णा) { आ } लिंगनध्यानरूपानुचितस्य बहुव्यापारस्योपादानं कर्तृकामुकविषयं शृङ्गारप्रवृत्ति(त्ते)र(रा)भासत्वमिति भावः। भावाभासस्योदाहरणमाह **राकेति**। रावणवचनम्। सा सीता पूर्णचन्द्रनिभानना चंचलदीर्घनेत्रा, प्रौढयौवनतरंगितविभ्रमस्थानं, तत् तस्मात्किं करोमि। अत्र सीताविषये मैत्रीं कथं विदधे स्वीकृतिविषये उपायः कः। अत्र भावस्याभासत्वमाह **अत्रेति**। चिन्तायाः परस्त्रीविषये(य)त्वेन रतेरभावादनौचित्यम्। निर्वेदादिभावाभासा उदाहृ(ह)त(र्त)व्या इत्याह **एवमिति**। भावशांत्यादिरक्रम इत्यत्रादिशब्दार्थमाह **भावस्येति**। भावशांतिर्भावोदयः भावसंधिः भा[व]शबलः(ल)[ता]। तत्र शांतेरुदाहरणं **तस्या** इति। धृष्टनायकस्य वचनम्। तस्याः सपत्न्याः घनं श्रीखंडादिविलेपितं य[त्] स्तनयुगं, तस्य प्रकृष्टमालिंगनं, तेन विलेपनमयी मुद्रा, तया लांछितं वक्षः, मम चरणानतिच्छलेन किमिति गोपाय्यते इति प्रियतमा(मे) उक्ते सति, क्व तर्हि लेपनं { नास्त्येवेत्यभिधाय } तद्विलेपनं नास्ते (स्त्ये) वेत्यभिधाय तद्विलेपनं प्रमार्ष्टुं मया सहसा रभसेन सा प्रियतमा आश्लिष्टा, तस्याश्चालिंगनसुखवशात् त[त्] क्रोधकारणं विस्मृतमभूत्। च शब्दः आलिंगनकोपशांत्योरेककालत्वद्योतनार्थः। अत्र कोपाख्यभावस्य शांतिमाह **अत्रेति**। शांतिरित्यनुषज्यते। अत्र रत्युत्पत्तौ कोपशांतिवत् संभोगशृंगारोत्पत्तौ ईर्ष्याविप्रलंभशमोत्पत्ति(त्तिः) यद्यपि तथापि शांतिरेव प्राधान्येन निर्दे(र्दि)शा(ष्टा)। भावोदयमुदाहरति **एकस्मिन्निति**। कविवचनम्। शयने सपत्नीनामग्रहे सति खिन्नया कयाचिन्मुग्धया प्रियवाक्यानि कुर्वन्नपि प्रियतमः संभ्रमादि(द)वज्ञातः, ततस्तूष्णीं स्थितः सन्, मा भून्म्लान(त्सुप्त) इवेति श्रुतमेव वेगविवर्तितकंधरं यथा तथा पुनरवलोकितः। अत्र [औत्सुक्य]-

स्योदय इत्यत आह **अत्रेति**। उदय इत्यनुषज्यते। भावसंधिमुदाहरति **उत्सिक्तस्येति**। रामस्य वचनम्। उत्सिक्तस्य तपसः पराक्रमस्य च निधिभूतस्य परशुरागमनस्यात् (परशुरामस्यागमनात्) तत्संपर्के प्रियत्वं वीररसाव(वे)गाधिक्यं च एकनो मां कर्षतः। अनेनावेगाख्यो भावो दर्शितः। एव(षः) सीतापरीरंभश्चान्यतो मां रुणद्धि। कीदृशः, मुहुः चैतन्यमान (मील)यन्नित्यादि(दिः)। अनेन हर्षाख्यो भावः। अनयोरावेगहर्षयोरत्र संधिः। भावशबल[ता]मुदाहरति **क्वाकार्यमिति**। उर्वशीविरहितस्य पुरूरवस इयमुक्तिः। काक्वा केषां भावानां शबलत्वं, अत आह **अत्रेति**। शबलतेत्यनुषज्यते। क्वाकार्यं शशलक्ष्मणः, क्व च कुलमिति वाक्यद्वयेन वितर्को दर्शितः, भूयोऽपि दृश्येत सेत्यनेन औत्सुक्यं, दोषाणामुपशांतये श्रुतमित्यनेन मि (म)तिः, अहो कोपेऽपि कान्तं मुखमित्यनेन स्मृतिः, किं वक्ष्यंत्यपकल्मषाः कृतधिय इत्यनेन शंका, स्वप्नेऽपि सा दुर्लभेत्यनेन { त } दैन्यं, चेतः स्वास्थ्यमुपैहीत्यनेन धृतिः, कः खलु धन्योऽधरं यास्यतीति चिंता। ननु भावस्य शांत्यादिवत् स्थितिरपि किं नोक्ता नोदाहृता चेत्यत आह **भावस्थितिस्त्विति**। व्यभिचारी तथाचिं(ञ्जि)त इत्यादौ उक्ता, जाने कोपपराङ्मुखीत्यादौ उदाहृता च। यद्यपि तत्र साक्षाद्भावस्थितिर्नोक्ता तथापि भावसत्ताया(याः) स्थितिरूपत्वात् भावस्वरूपोदाहरणेनैव स्थित्युदाहरणमप्युक्तमेवेति भावः। ननु भावशांत्यादयो रसं प्रत्यंगानि, कथं तेषामंगित्वमत आह **मुख्य** इति। श्लोकगततच्छब्दार्थमा[हृ]**त** इति। कदाचन रसापेक्षया सातिशयचमत्कारे सतीत्यर्थः। न त्वेकस्यैवांगित्वमेकत्वं च विरुद्धमित्याशंक्य दृष्टान्तमाह **अंगित्वमिति**। यथा राज्ञा अनुगतस्य पश्चाद्गतस्य विवाहप्रवृत्तस्य भृत्यस्य प्राधान्यं तथैः(था)।

एवमसंलक्ष्यक्रममुक्त्वा संलक्ष्यक्रममाह **अनुस्वानेत्यादिना**। घंटावादनानंतरं यदनुरणनं सोऽनुस्वानः, तदा (था) तत्सदृशत्वेन संलक्ष्यः क्रमो यस्य तस्य व्यंग्यस्यावस्थितिर्यत्र सः संलक्ष्यक्रमध्वनिः घंटावा(ना)दवत् वावरवादजा (ना)नुरणनवत् व्यंग्य इति विवेकः। स (सः) त्रिविधः शब्दार्थोभयशक्त्युक्त-

(त्थ)त्वेन । तदेव त्रैविध्यं प्रकटयति **शब्दशक्तीत्यादिना**। तत्र तेषां मध्ये शब्दशक्त्युद्भवं ध्वनिसंभेदं लक्षयति **तत्रेति**। यत्र ध्वनौ अलंकार(र:) वस्त्वेव वा प्राधान्येन शब्दादवभासते स(स:) शब्दशक्त्युद्भवो ध्वनि:, अलंकार:(र) व्यंग्य(ग्य:), वस्तुव्यंग्यश्चेति द्विविध इत्यर्थ:। वस्त्वेवेत्यत्र [ए]वकारार्थमाह **वस्त्वेवेति**।

अलंकारश्चित्रं वस्तुषु वैचित्र्यरहितं वस्त्वित्यर्थ:। **अलंकारव्यंग्यमुदा-हरति उल्लासस्येति**। राजस्तुति:। येन देवेन राज्ञा जरठेन गर्जितेन सिंहनादेन कालकरवालस्य कृष्णखड्गस्य महांबुधाराजलं तस्य वाह: प्रवृत्ति: तमुल्लासस्य तीक्ष्णीकृत्य रणे युद्धे धाराभि: त्रिजगति प्रज्वलितं(त:) रिपूणां प्रताप: निवा(र्वा)-पित:। देवादिशब्दानां परिवृत्त्यसहिष्णुत्वात् अन्योऽर्थ:। काल: कृष्ण: कर: कांतिर्यस्य स चासौ वालो बालश्च वल (ब) योरभेदात्, देवेन इन्द्रेण रण(ण:) ध्वनि: धाराजलापेक्षया रिपूणां तेजसां रणे शब्दे सति महानातप इति त(ते)-जोविषये जनकोलाहले सतीत्यर्थ: प्रताप: संताप:। अत्रोपमालंकारस्य व्यं-ग्यत्वं प्रतिपादयितुमाह **अत्रेति**। राजवर्णनं प्रस्तुतमिति प्रथमोऽर्थ: प्राकरणिक: द्वितीयोऽप्र(प्रा)करणिक: अनयोरुपमानोपमेयभाव: कल्पनीय:। अस्य द्वितीयवा-क्यस्यासंबद्धार्थाभिधायकत्वं नामा दोष: स्यात्। अतोऽत्रोपमालंकारो व्यंग्य इत्यर्थ:। ननु असंबद्धार्थत्वादेव द्वितीयोऽर्थ: परित्यज्यतं(तां) औपम्यं च न कल्पनीयमिति चेत् न, द्वितीयार्थप्रत्यायनार्थमेव कविना तादृशं(श)पदानां प्रयो-गात्। अस्य व्यंग्यस्य शब्दान्वयव्यतिरेकाभ्यां शब्दशक्तिमूलत्वं ज्ञातव्यम्। अत्रैवोदाहरणांतरमाह **तिग्मेति**। हे विभो तिग्मरुचि[र]प्रताप: तीक्ष्णमनोज्ञ-प्रताप: विधुराणां रिपूणां निशाकृत क्षयकारी मधुरा लीला यस्य, मतौ माने तत्त्वे वृत्तिर्यस्य, प्रतिपदं स्थाने स्थाने, पक्षाणामात्मीयानां अग्रणी(णी:) एवंविधो भवान्विभाति। अत्र को वा अलंकारो व्यंग्य: कथं च तस्य वाच्याद्भेद इत्यत आह **अत्रेति**। तिग्मरुचि: सूर्य: स कथमप्रताप: विधुश्चंद्र: स कथमनिशाकृत् मधुर्वसंत: स कथमलील:, मतिमान् कथमतत्त्ववृत्ति:, प्रतिपत् अपक्षाग्रणी: कथं

इति एकपदस्य पदद्वये क्रियमाणे विरोधाभासः प्रतीयते । एकपदत्वेन परिहार-संभवादस्य विरोधस्य [आ]भासत्वम् । प्राकरणिकत्वात् प्रथमं वाच्यार्थः प्रतीयते पश्चाद्विरोधवाचकानां(ना)मप्यादीनामभावेऽपि पदच्छेदमात्रेण विरोधाभासः प्रतीयते इति विरोधालंकारो व्यंग्य इत्यर्थः । एवमेकस्य पदस्य छेदं(दे) विरोधा-भासमुदाहृत्य भिन्नत्वे विरोधाभासमुदाहरति **अमित** इति । समितः संग्रामात् प्राप्तैरुत्कर्षैः, हर्षद हे प्रभो त्वममितः मितवस्तुरहितः असि(स)तामहितोऽसि साधुयशोभि(भिः) सहितोऽसि । अत्रालंकारव्यंग्यत्वमाह **अत्रापी**ति । अमितोऽपि कथं मि(स)मितः [मित]सहित, अहितोऽपि कथं [स] हितः इ(हि)तसहित इति विरोधाभासः; परिहारस्तु प्राकरणिक(का)र्थाश्रयणात् । अलंकारान्तरमुदाहरति **निरुपादाने**ति । निर्गतकरणसामग्रीकं जगच्चित्रमभित्तौ कुर्वते कलया ज्ञानेन चन्द्रलेखया च श्लाध्याय शंभवे नमः । अत्रालंकारमाह **अत्रे**ति । अत्रोपमान-भूतादन्यस्माच्चित्रकारादुपमेयरूपस्य शंभोराधिक्यमिति व्यतिरेकालंकारो व्यंग्य इत्यर्थः । अलंकार्यालंकारयोर्भेदादलंकार्यस्य उपमादेः अलंकारव्यंग्य इत्यत्र अलंकारशब्दव्यपदेशः कथमत आह **अलंकार्यस्यापी**ति । यथा ब्राह्मणः सन् श्रमणो भवति, पश्चात् भूतपूर्वगत्या ब्राह्मण इत्युच्यते तथा अलंकारोऽपि अंगितया प्रधानव्यंग्यपदवीमधिरोहत(ते) । अत्र अलंकारत्वेन दृष्टत्वात् प्रकृतेऽपि अलंकार इत्युच्यत इत्यर्थः ।

एवमलंकारव्यंग्यमुदाहृत्य वस्तुमात्रव्यंग्यमुदाहरति वस्तुमात्रमित्यादिना । पंथिअ हे पथिक, इ(ए)त्थ इह, पत्थरत्थले प्रस्तरस्थले, गामे ग्रामे, सत्थरं संस्तरं, तृणादितल्प(ल्पं),मणं मनाक्, णात्थि नास्ति, उण्णय (अ) पयो (ओ)-हरे उन्नतपयोधरान् मेघान् शस्येदित्येत्वं, स्तनपक्षे द्विवचनस्य बहुवचनमिति बहुवचनं, पेक्खिउण प्रेक्ष (क्ष्य), जइ { दि } यदि वससि, ता ततः, वससु वस । प्रस्तरस्थल इत्यनेन तत्रत्यानां स्त्रीणां दारुणसंभोगत्वं प्रतिपद्यते । अत्रा-लंकाररहितं वस्तुमात्रव्यंग्यमित्याह **अत्रे**ति । न चात्र देवादिपदेनेव पयोधरादिप-देनापि उपमानोपमेयभावप्रतीते(तेः) उपमालंकारो व्यंग्य इति वाच्यं, वाच्य-

बाधेनोपभोगक्षमत्वरूपवस्तुव्यंग्यस्य व्यवस्थितत्वात्तयोरुपमानोपमेयभावाभावात्। अत्रे(त्रै)वोदाहरणांतरमाह शनिरिति । भो नरेन्द्र, त्वं यस्मै कुप्यसि तं शनिः शनैश्चरः अशनिर्वज्रं च उच्चैर्निहंति । यत्र पुनः पुरुषविषये प्रसीदसि स(सः) पुरुषः उदारः अनुदारः अनुगताः दार(राः) यस्य एवंविधश्च स नु(तु) भवति । अत्र पूर्वार्धमेवोदाहरणं, उत्तरार्धे उदारः अनुदार इति विरोधालंकारसद्भावेन, अलंकाररहितवस्तुमात्रव्यंग्यस्यानुदाहरणत्वात् । न च पूर्वार्धेऽपि विरोधालंकारसद्भावात् कथमुदाहरणत्वमिति वाच्यं, शनिरन्यः अशनिश्चान्य इति विषयभेदेन विरोधाभावात् । अत एवात्र विषयभेदप्रदर्शनपूर्वकं वस्तुमात्रव्यंग्यं दर्शयति । अत्रेतिशब्दतः शनित्वाशनित्वविरूपेण विरुद्धौ हि, न लक्षणमेकं, कार्यव्यत्ययेन कदाचिच्छनिः कदाचिदशनिरित्यादि । क्रमेण एवं द्विविधं शब्दशक्तिमूलानुरणनरूपं ध्वनिमुदाहृत्य अर्थशक्तिमूलानुरणरूपं सभेदमाह अर्थेति । अर्थशक्तिजो ध्वनिरपि द्वादशात्मक { शात्मक } इत्युपरिष्ठात्संबंधः । ध्वनेर्द्वादशविधत्वं व्यंजकार्थभेदाद् वक्तुं व्यंजका(के)त्या(त्य)र्थस्य द्वादशविधत्वमाह अर्थो व्यंजक इत्यादिना । श्लोकद्वयं व्याकरोति अर्थ इत्यादिना । स्वतः संभविनः प्रतिपक्षभूतं प्रौढोक्त्यादिविशेषत्वानुगतं कोट्यन्तरमाह { इदं प्रथमकल्पित इति । } ननु स्वतः संभविनोऽपि कविनिबद्धत्वेनानयोः को भेदो (दः) । [अ]त आह तत्रेति । यद्यप्युभयत्र कवि[नि]बद्धत्वं तथापि एकत्रो (त्रौ)चित्येन बहि(हिः)संभावितत्वं अन्यत्र तदभाव इति भेद इत्यर्थः । इदं प्रथमकल्पस्य द्वैविध्यं प्रौढोक्तिमात्राद्यर्थव्याख्ये(ख्याने)न दर्शयति कविनेत्यादिना । अपरं इदं, प्रथमकल्पितः कवेः प्रौढोक्तिमात्रसिद्धः तेन कविना ललितः निबद्धः कल्पितो यो वक्ता तस्य, प्रौढोक्तिमात्रसिद्धश्चेति द्विविधः, स्व[तः संभवी च]........इति त्रिविध इत्यर्थः । सूत्रगतौ वाशब्दौ चकार(रा)र्थौ(र्थौ) । एवं प्रथमशलोल(श्लो)कं व्याकृत्य द्वितीयं व्याकरोति वस्तु वेति । त्र (त्रि)विधा(धो) व्यञ्जका(को)ऽसावर्थः प्रत्येकं वस्त्वलंकारभेदेन द्विविध इति षोढा षट्प्रकारो भवति । तस्या-(स्य)द्वि (षड्वि)धस्यार्थस्य वस्त्व { इत्यं } ल(लं)कारव्यंग्यभेदेन प्रत्येकं

दै(द्वै)विधो(ध्य)मिति द्वादशभेदार्थे इति शेषः । अर्थस्य द्वादशविधत्वेन तदुत्थ-ध्वनेरपि द्वादशविधत्वमाह इति द्वादशेति । तत्र वस्तुरूपस्वतःसंभविनो वस्तु रूपव्यंग्यस्योदाहरणमाह अर(ल)सेति । पुत्ति हे पुत्रि, अर(ल)सशिरमणी(णि) अलसशिरोमणिः, धूत्ताण(णं) अग्गिमो धूर्तानामग्रिम(मः), रथ(ध)णसमिधि(द्धि) मउ(ओ) धनसमृद्धिमयः,इय(अ)भणिएण इति भणितेन, णअंगी नतांगी, पप्फुल्ल-विलोअणा प्रफुल्लविलोचना, जाआ जाता । व्यंग्यमाह अत्रेति । अलसत्वा-दस्यान्यत्रगमनाभावः, धूर्तत्वेन संभोगे त(तृ)प्तिसंपादकत्वं, धनिकत्वेन धनदा-तृत्वं, इत्यादिवाक्यार्थरूपेण वस्तुन(ना) ममैवायमुपभागयोग्यः, अहमेव चातुर्यात् एनमावर्जयिष्यामीति व्यज्यत इत्यर्थः वस्तुरूप(पः) । स्त(स्व)तःसंभविनः अलंकारव्यंग्यस्योदाहरणं(ण)माह धन्यासीति । हे सखि त्वं धन्य सि, या त्वं रतान्तरेषु र { थ } तविशेषेषु, प्रियसंगमेऽपि विस्रब्धप्रियवचनशतानि कथयसि । अहं तु प्रियेण करे नीवीं प्रति प्रणिहिते सति, यदि किंचिदपि स्मरामि, तर्हि सख्यः शपामि । न स्मराम्येव सुखपारवश्यादित्यर्थः । अत्र वाचा शरीर-स्पर्शनस्य विवक्षितत्वाच्छपो नात्मनेपदम् । अत्रालंकारव्यंग्यमाह अत्रेति । त्वम-धन्या संभोगसमयवृत्तांतस्मरणा(ण)भावात्, अहं धन्या सुखातिशयेन तदानीं-तनवृत्तांतस्मरणाभावात् [इति] उपा(प)मानादुपमेयस्याधिक्ये व्यतिरेक इति व्यतिरेकालंकारो व्यंग्य इत्यर्थः । स्वतः संभविनोऽलंकाररूपवस्तुव्यंग्य { क } -स्यार्थस्योदाहरणमाह दर्पांधेति । यस्य राज्ञः करे कृपाणः खड्ग(ड्गः) युधि युद्धे कोपेन { काषाय } का(क)षायकांति(तिः) महाक(का)लयाः (ल्याः) कटाक्ष इव वीरपुरुषैर्व्यलोकि दृष्टः । कीदृशः, दर्पेणांधो यो गन्धगजः तस्य कुंभ एव कपाटं, तस्य कूटः शिखरं, तत्र संक्रांतेर्निघ्नं अधीनं नीलकघनं यच्छोणित(तं) तेन रक्त-कांति(तिः) । अत्र व्यंग्यमाह अत्रेति । वाच्येनोपमालंकारेण रिपुक्षयकरणलक्षणं वस्तु व्यज्यत इति शेषः । अलंकाररूपस्वतःसंभविनोऽलंकारव्यंग्यस्योदाहरणमाह गाढकांतेति । यो राजा युद्धे कोपेन स्वकीयमधर(रं) निद(र्द)शा(श)त्(त्रु) गाढप्रियदंतक्षतदुःखसंकटात् शत्रुस्त्रीजनस्य ओष्ठविद्रुप(म)दलान्यमोचयत् । अलं-

कारव्यंग्यमाह अत्रे ति । अत्र विरोधसूचकाप्यादिपदाभावेन वाच्यवरो[धा]लंक-(का)राभावात् विरोधालंकारशब्देन उपचारादतिशयोक्त्यलंकारो विवक्षितः । उपचारे च निमित्तं दशनमोचनयोः कार्यकारणयोः पौर्वापर्यविपर्ययाख्यविरोध-सद्भावात् विरोधमूलत्वम् । तुल्ययोगिता नामालंकारो व्यज्यत इति शेषः । अत्रैव श्लोके व्यां(व्यं)ग्यमलंकारान्तरमाह । मम नाशेनापि शत्रुनाशः स्यादिति तद्बुद्धिः नृपबुद्धि : [उत्प्रेक्ष्यते इति] उत्प्रेक्ष्या(क्षा)लंकारो व्यंग्य इत्यर्थः । स्वतःसंभविनं व्यंजकयु[मु]पसंहरति एष्विति । इदानीं वस्तु-रूपकविप्रौढोक्तिनिर्मितस्य वस्तुव्यंग्यस्योदाहरणमाह कैलासस्येति । के (कै) लास[प्र]था(थ)ग(म)शृंगे वेणुसंमूर्छनाभि(भिः) देवस्त्रीभिर्गीयमान(नां) यस्य कीर्तिं श्रुत्वा दिग्गजाः सरसबिसिनीकांडमिति संजातभ्रमाः संतः, श्रवणमेव पुलिनं तत्र हस्तमावृ(व)त्त(र्त)यंति पुलिने विमाना(कमला ?) सद्भावात् व्यं-ग्यमाह अत्रेति । यद्यपि श्रवणपुलित(न) इत्यत्र रूपकालंकारसद्भावेऽपि तद्भा-गस्य व्यंजकत्व (त्वा)भावात् वस्तुना वस्तु व्यज्यत द्रव्य (इत्यर्थ)स्य न काचित् क्षतिः । अर्थ(र्था)धिगमः गीताभिधेयज्ञानम् । एवमादि बुद्धिजननेन { न } बिसदंडबुद्धिजननेन । वस्त(स्तु)रूपकविप्रौढोक्तिसिद्धस्यालंकारव्यंग्यस्योदाह-रणमाह केशेष्विति । तेण तेन रा { ण्या } ज्ञा, समरम्मि समरे, जएसिरी जयश्रीः, केशेषु बलामोडिअ बलात्कारेण, गाहि आगृहीता, जह यथा. कंदराहि कंदराभिः, तस्स तस्य, विहुरा विधुराः शत्रवः, दढं, दढं यथा तथा कंठयम्मि कंठे, संठविआ संस्थापिता(ताः) । अत्र व्यंग्यमाहा(ह) अत्रेति । वाक्यार्थेन वस्तुरूपेण एकस्याः केशग्रहावलोकनेनान्यस्या अपि कामोद्बोध इति आलिंगन-स्योत्प्रेक्षा व्यज्यत इत्यर्थः । अत्रैवालंकारान्तरमाह एकत्रेति । जयश्रीग्रहणेन वाक्यार्थीभूतेन हेतुना जातभयाः शत्रवः पलाय्य गुहासु गता इति काव्यहेतुः काव्यलिंगाख्योऽलंकारो व्यज्यत इत्यर्थः । पुना(न)रप्यत्रैवालंकारांतरमाह न पलाय्येति । तद्वैरिणः पलाय्य न गता अपि तु तस्मातः(त्) रातः (ज्ञः) सकाशात् कंदराः तेषां पराभवं संभाव्य तान् { ष } न त्यज(जं)ति कंदराभिः

शरणं दत्तमित्यर्थः । प्रस्तुतस्य पलायनस्यापह्नवादपह्नुत्याख्योऽलंकारश्च व्यज्यत इत्यर्थः । अलंकाररूपकविप्रौढोक्तिनिमि(र्मि)तवस्तुव्यंग्यस्योदाहरणमाह **गाढालिंगणेति** । माणंसिणीण मनस्विमी(नी)नां, माणो मानः, दइए (द)यिते गाढालिंगणे(ण)रहसु जइस्सि गाढालिंगनरभसोद्यते सति, पीलणभीअ व्व पीडनभीत्येव, हिअआहि रु(ह्र)ढ(द)येभ्यः क(ल)हु लघु, यथा तथा समासरइ अपसरति । अत्र व्यंग्यमाह **अत्रेति** । पुरुषेण आलिंगने कृते सति स्त्रीकृतप्रत्यालिंगनमंतरेण गाढालिंगनकृत ण (?) उभयासंभवात् प्रत्यालिंगनलक्षणवस्तु व्यज्यत इत्यर्थः ।

अलंका[र]रूपकविप्रौढोक्तिनिर्मितस्यालंकारव्यंग्यस्योदाहरणमाह **जा ठेरमिति** । वाणी ठेर(रं) स्थविर[रं] ब्रह्माणं हसंतीव { इवां } कइवअणंबुरुहबद्धविणिवेसा कविवदनांबुरुहबद्धविनिवेशा कृतो(ता)भुअमंडल अणं विअ अन्यदिव दावेइ दर्शयति स(सा) वाणी जयइ जयति । व्यंग्यमाह **अत्रेति** । ब्रह्मासने न(ज)डे पक्षे उपविश्य अचमत्कारकारि जगन्निर्मिमीते । वाणी कविसचेतनवक्त्राब्जस्थिता चमत्कारि जगन्निर्मिमीत इति उपमानभूतात् ब्रह्मसर्गात् उपमेयभूतस्य कविसर्गस्याधिक्यमिति व्यतिरेकालंकारो व्यंग्य इत्यर्थः । कविप्रौढोक्तिसिद्धार्थमुपसंहा[ह]रति **एष्विति** । निष्पन्नः अर्थ इति शेषः । कविनिबद्धवक्तृप्रौढोक्तिनिर्मितस्य वस्तुरूपस्य व्यंग्यस्योदाहरणमाह, **[जे]लो(लं)केत्यादि** । जे ये, मलयानिला लंकागिरिमेहलहि लंकागिरिमेखलायाः खलिआ स्खलिताः सन्तः, संभोअ खिण्णोरगीफार फुल्लफणावलो कवलणे स(सं)भोगखिन्नोरगीस्फारोत्पु(त्फु)ल्लफणावळीकवळनात्, दरिदत्तणं दरिद्रत्वं, पत्ता प्राप्ताः ते मलयानिलाः इहि इदानीं, शिशुत्तणे वि शिशुत्वेऽपि विरहिणीणोसाससं { व } पक्किराणो विरहिणीनिश्वाससंपर्किणः संतः क्व(झ)ति(त्ति) झटिति तारुण्य(ण्ण) पुणा(ण्ण)अ(वि)ञा (ता)रुण्यपूर्णा इव बहला बहुलाः जादा जाताः । अत्र व्यंग्यमाह **अत्रेति** । यद्यपि तारुण्यपूर्णा इवेत्यत्रोत्प्रेक्षालंकारोऽस्ति तथापि तस्य व्यंजकत्वं नास्ति । अत एव विरहिणीनिश्वाससंपर्किणः इत्यनेन वस्तुना निश्वासैः प्राप्तैश्वर्यैः

(र्याः) किं कि[किं] न कुर्व[न्ति] इत्येतद्वस्तु व्यज्यत इत्यर्थः । वस्तुरूपकविनिबद्ध-वक्तृप्रौढोक्तिनिर्मितस्यालंकारव्यंग्यस्योदाहरणमाह सहीति । सहि सखि धीरत्तणेण धैर्येण, मज्झ मम, माणस्स माण(न)स्य, आसासे अ (आ) स्वा (श्वा)सं विरइउण विरचि (च)य्य(य्य), अवस्थितमिति शेषः । तेण तेन धैर्येण पिअदंसणविहलंखलखणम्मि प्रियदर्शनविश्रृंखलक्षणे, सहसत्ति सहस्यै(सै)व उसरिअं अपसृतम् । अत्र व्य(व्यं)ग्यमाह अत्रेति । वाक्यार्थरूपेण वस्तुना प्रार्थनालक्षण-कारणाभावेऽपि तएर्यः(स्याः) प्रसन्नतोत्पत्तिरिति विभावनालंकारो व्यज्यत इत्यर्थः । अत्रैव व्यंग्यांतरमाह प्रियदर्शनस्येति । कविनिबद्ध [व]क्त (क्तृ)प्रौढोक्ति-निर्मितस्य अलंकाररूपस्य वस्तुवं(व्यं)ग्यस्योदाहरणमाह उ (ओ)ल्लो[ल्ले] ति । नायकं प्रति नायिकावचनम् । हे प्रिय, तुह तव, उ (ओ)ल्लोल (ल्ल) करअरआणखएहि आर्द्रार्द्रकरजरदनक्षतैः, मह मम, लोअणेसु जो (लो)व (च)नयो (योः), रत्तंसुअं रक्तांशुकं, पअ(आ)सो(ओ) प्रसादः, दिण्णम् दत्तः, कोपेण कोपेनः(न), इमे लोचने, ण न, अक्कमे(मि)आ तम(आ)कां(कां) तै (ते) । अत्र व्यंग्यमाह अत्रेति । प्रतिवचनात् लिंगात्प्रश्नमध्याहरति किमितीति इति प्रश्ने कृते सति उत्तररूपालंकारेण वाच्येन केवलं { कृत्यं यथा स्यात् } आर्द्राणि यानि नखदंतक्षतानि तावि(व)न्न गोपायसि आच्छादयो(य)स(सि) यावत् तेषां तत्क्षतानां अहं प्रसादपात्रं जात(ते)ति दर्शनेन उत्पन्नकोपास्मि अतस्त्वमतिदुष्ट इति वस्तु व्यज्यत इत्यर्थः ।

कविनिबद्धवक्तृनिर्मितस्यालंकारव्यंग्यस्योदाहरणमाह मा (म)हिलेति । सुहअ सुभग, तुह तव, महिलासहस्सभरिए महिलासहस्रभरितो (ते), हिअए हृदए (ये), अमाअती (न्ती) अमाती (न्ती), सा स्त्री, अणुदिणं, अनुदिनं, अ[ण]ण्णकं(क) { म्लं } म्मा अनन्यकर्म्मा(र्मा) सती अ(अं)ग(गं) तणुअंपि तन्वपि तणुए इ { ति } तनयति तनूकरोति । अत्र व्यंग्यमाह अत्रेति । अत्र कविना हि निबद्धा पा(या)दक्री (वक्त्री) [तस्याः] { तः } प्रौढोक्त्या निष्पन्नेन महिलासहस्रभरित इत्येतत्पदं हृदये अवर्तमानत्वे हेतुत्वेनोक्त(क्तं) इति

हेत्वलंकारेण वाच्येन तनोस्तनुत्वलक्षणे कारणे सत्यपि हृदय(या)वर्तन कार्येनोक्तमिति विसे(शे)ष(षो)क्त्यलंकारो व्यज्यत इत्यर्थः । कविनिबद्धवक्तृप्रो(प्रौ)-[ढो] क्तमुपसंहरति **एष्विति** । प(च)रमप्रकृतमुपसे(सं)हरति **एवमिति** ।

संलक्ष्यक्रमव्यंग्यस्य शब्दशक्तिमूलत्वेनार्थशक्तिमूलत्वेन भेदद्वयं निरूप्य उभयशक्तिमूलत्वेन तृतीयं भेदमाह **शब्देति** । तमुदाहरति **यथेति** । श्यामा रात्रिः क(कं) सानंद(दं) न करोति । कथंभूत(ता), अं(अ)त(तं)द्रश्च(श्चं)द्र आभरणं यस्या(स्याः), समुद्दोपितकामा, नक्षत्रैस्तरलाः(ला) । पक्षे श्यामां(मा) { यो } पि नृ(अ)चं(तं)द्रः(द्र)शिरोभूषणविशेषा, कर्मरवा(णा) समुच्च-(दित)हर्षा, कनीनिकातरला । इह चंद्रे(द्रे)ति तारकेति ता(त)रके(ले)ति च शब्दो (ब्दा) व्यंजकाः । चंद्रादिशब्दं परित्यज्य { इणदि } [अन्य]शब्द-प्रयोगे अर्थांतरप्रतीतेः । समुद्दीपितेति सानंदमिति च अर्थोऽपि { च } व्यंजकः । शब्दांतरप्रयोगेऽपि अस्यार्थस्य प्रतीते(तेः) परिवृत्तिसहत्वात् इति शब्दार्थयोः शक्त्या प्रकृताप्रकृतयोः रात्रियोषितोरुपमात्र वाक्ये व्यां(व्यं) या(ग्या) । उक्तत्रे(भे)दानूसंख्याविशेषविशिष्टत्वेन निगमयति **भेदा** इति । तत्(त) तस्मात्कारणादित्यर्थः । सूत्रगतेदंशब्दार्थमाह **अस्येति** । लक्षणामूलाविवक्षितबाच्यसार्थांतरक्रमितवाच्यानां तिरस्कृतवाच्यलक्षणौ द्वौ भेदौ, अभिधामूलविवक्षितान्यपरवाच्यस्यासंलक्ष्यक्रमो रसादिरेका(को) भेदा(दः), शब्दशक्तिमूलौ वस्त्वलंकारलक्षणौ द्वौ भेदौ, अर्थशक्तिमूला वस्त्वादयो द्वादशभेदाः, उभ[य]शक्तिमूल एको भेद इत्यष्टादशभेदा इत्यर्थः । उक्त(क्ता) ष्टादश{ स }-स्याक्षेपोत्तरत्वेनोत्तरसूत्रमवतारयति **नन्विति** । रसादीत्यादिशब्देन भावादिः । हेत्वसिद्धिमाशंक्य असिद्ध इत्याह **अनंतत्वादिति** । सिद्धमिति शेषः । तदेव प्रतिपादयति **तथाहीति** । तयोः संयोगविप्रलंभयोः । नायकश्च नायिका च नायकयोः । एकस्यैव शृंगारस्य(रस्य) अन्येषा(षां) हास्यादीनां भावादीनां वात(नं)तत्वे कथमेको भेदः । अत आह **असंलक्षे(क्ष्ये)ति** । उक्तानां भेदानां मध्ये कस्य वाक्ये व्यंजके पदे वा व्यंजके सति भावनिवृत्तिरित्याकां-

क्षायां विभागमाह **वाक्य** इति । काव्यरूप समुदायापेक्षया द्वाभ्यां शब्दार्थाभ्यामुत्थ उत्थानं यस्य स द्व्युत्थः । द्व्युत्थशब्दार्थमाह **द्व्युत्थ** इति । उभयशक्तिमूलो एको भेदो वाक्य एव व्यंजके सति भवति । यथा अते(तं)द्रच-(चं)द्रेत्यादि । उभे(भ)यशक्तिमूलादन्येऽर्थान्तरा(र)न्य(सं)क्रमितवाच्यादयः सप्तदश, पदव्यंजके अपि शब्दाद् वाक्येऽपि भवंतीत्यर्थः । ननु इदमुत्तम[म]-तिशयिनीत्यादौ समुदायरूपकाव्यविशेषप्रदर्शितस्य ध्वनेर्वाक्यव्यां(ङ्ग्यं)ग्यत्वेन कथं व्यंग्यत्वमत आह **एकेति** । वाक्या(क्यं){ न् } व्यंग्यं यथेति { ति } विग्रहः । यथा सर्वावयवस्थित (ता) { ना } भा(भ)रणा(ण)जातेन भासमानाया युवतेरेकावय[व] स्थितेनाभा(भ)रणेनाभासमानत्वं तथा वाक्यव्यंग्यस्यापि पदव्यङ्ग्यत्वमविरुद्धमित्यर्थः(र्थः) । तथा चोक्ते ध्वनिकारणविच्छित्तिशोभि नैकेन भूषणेनेव कामि [नी] । पदद्योत्येन सुकवेर्ध्वनिना भाति भारती । यस्येति । **खलेति** । **अत्रेति**लावण्यमिति । **अत्रेति** । **यथा वेति** । **अत्रेति** । [भा]रतीति । वाक्यप्रकाश्यत्वे उदाहरणः(णा)न्युक्तानीति पदप्रकाश्यत्वेनोदाहरणानि प्रतिजानीते **तत्रेति** । तत्रानुपयुज्यमानार्थांतरसंक्रमितवाच्यपदद्योत्योदाहरणमाह **यस्येति** । यस्य नायकस्य मित्राणि सर्वदा मित्राण्येव नान्यथा इत्यादि(दिः)स्वभाव(वः) स नायको जातः सफलजन्मवान् सफलजीवितश्च भवति। द्वितीयपि(मि)त्रादिशब्दानामनुपयुज्यमानत्वेने (न) आश्वस्ताद्यर्थांतरेषु संक्रमितवाच्यत्वमाह **अत्रे(त्रे)ति** । अत्र द्वितीयमित्रादिशब्दानामनुपयोगात्मको मुख्यार्थबो(बा)धः सामान्यविशेषभावः संबंधः । अतो मित्रादिशब्दः आश्वस्तत्वनिर्यं(यं)त्रणत्वस्नेहपात्रत्वादि यथासंख्यं लक्षयति । { पह(द)स्य प्रकाशननिरूढा ससंपसंपादनानि व्यंजयति } । अत एव शुद्धस्यार्थस्याविवक्षितत्वादविवक्षितवाच्यत्वम् । अनुपपद्यमानार्थांतरतिरस्कृतवाच्यपदद्यो[त्यो]दाहरणमाह **खलेति** । हि अ(अ)य(व) हृदय, व ए(य)स्य य(ज)प(ह)वि यद्यपि; खलववहाराः खलव्यवहाराः, दारुणाः दीसंति दृश्यंते, तहवि तथापि, धीर(रा)-णां(णं) बहुमर्या बहुमता, ववसाआ व्यवसायाः, ण न खलु मुज्झ[ज्झं]ति मुह्यंति । अत्र व्यंजकं पदम(मा)ह **अत्रेति** । व्यंजकमिति शेषः । मुह्य[ह्यं]तीति

एतत्रदं व्यवसायानामचेतनत्वेनासंभवत्का { स्या } यँ बाधितमोहात्मकं मुख्यार्थं अनुरपद्यमानत्वादेवात्य[त्यं]ततिरस्कृतवाच्यं कार्यकारणभावसंबंधादप्रवृत्तिं लक्षयत् अभिमतकार्यँ(र्य)कारित्वादिप्रारब्धनिर्वहणादिधर्मांतरं व्यनक्तीति भावः । विवक्षितान्यपरवाच्यस्यासंलक्षा(क्ष्य)क्रमव्यंग्यस्य एव द्योत्यरसो(स)स्योदाहरणमाह **लावण्यमिति** । तत् आह्लादकारि लावण्यं करचरणाद्यवयवातिरिक्तं धर्मांतरम् । असौ दक्पातमात्रेण सकलशरीराधायिका कांतिः शरीरशोभा, तद्वचसोऽप्यगोचररूपं, सः सातिशय { विप्रएसाम्यद } [प्रियवचसां?] एवं क्रमः वचनपरिपाटी, तदा संभोगसमये अमृतोपमं अधुना विरहावस्थायां ज्वरोपमम् । अत्र प्रकाश्यानाह **अत्रेति** । तत् असौ इत्यादिपदानि आह्लादकारित्वदक्पातमात्रशरीराप्यायका(क)त्वादा(दी)नर्थात(न्) व्यंजय ती(न्ती)त्यर्थः । यद्यपि वाको(क्ये)न विप्रलम्भरसस्य प्रतीतिः तथापि तद्यदादिपदद्या(द्यो)त्याह्लादकारित्वादिविशिष्टस्यैव लावण्यादेरनुभावमिति रसस्यापि पदप्रकाश्यत्वमविरुद्धम् । अत एव विशिष्टलावण्याद्यनुभावप्रतीतिसमय एव रसस्यापि प्रती{ य } तेरसंलक्ष्यक्रमत्वमविरुद्धम् । अस्यैवोदाहरणं(णां)तरमाह **यथा वेति** । मुग्धे त्वया मुग्धतया बाल्यदुर्ललितेनैव सकलः काल[लः] वाहितु(तुं) किमारभ्यते, ईष्या(र्या)कारणं विनापि भा(मा)नं धारय धे(धै)र्य(र्यं) स्थापय, प्रेयसि ऋजुता(तां) दूरे कुरु, एवं सख्या प्रतिबोधिता नायिका नी(भी)ताननना सती तां सखीं प्रतिवचनमाह किमिति ननु सखि नीचैः कथय हि यस्मात् हृदि स्थितः प्राणेश्वरः श्रोष्यति । अत्र पदप्रकाश्यमाह **अत्रेति** । भयकार्यस्य नेत्रभ्रम[र]संकोचरोषाद्योनयनभ्रमवैवण्या(र्ण्या)देर्मुखदर्शनान्मुखमेव भीतमित्युक्तम् । अत एवैतत्पदत्रयस्याकृत्रिमत्वप्रकाशनात् नीचैः सं(शं)श(स)नविधानस्य युक्त[क्तं] { त्व } व्यंजक[त्व]म् । तत्र संलक्ष्यक्रमपदप्रकाश्यभावतदाभासादीनामुदी(दा)हरणानि वाच्यानीत्यत आह **भावादीनामिति** । वाक्यप्रकाश्यानामपि भावादीनां रसापेक्षया निकृष्ट { ष्ट } च(च)मत्कारत्वं पदप्रकाश्यानां तु ततोऽपि निकृष्टचमत्कारत्वमिति भावः । विवक्षितान्य(न्य)परवाच्यस्य संलक्ष्यक्र-

मध्यंग्यभेदे शब्दशक्तिमूलौ द्वौ भेदौ अलंकारध्वनिः वस्तुध्वनिश्चेति। [अ]लंकार-ध्वनेः शब्दशक्तिमूलस्य पदद्योत्यस्योदाहरणमाह रुधिरेति । रक्तसमूहप्रलिप्तख-ड्गभयंकररुचिरभुजपरिघः झटिति भ्रूभंगव(बं)धललाटपट्टो नृप(पः) भीमो वि-भाति । व्यंग्यमलंकारमाह अत्रेति । भीषयते इति भीषणीयाः(यः) कतीयाण (कृत्य ल्युटि or, अणीयर्) । भीम इति पदं प्रकृतायाः(त्याः) सामर्थ्यात् सादृश्यमापादयतीत्युपमालंकारो व्यंग्यः ।

शब्दशक्तिमूलानुरणनरूपस्य पदप्रकाश्यस्य वस्तुध्वनेरुदाहरणमाह भुक्ति-मुक्तीति । भुक्तिं मुक्तिं च करोतीति भुक्तिमुक्तिशब्देन एकान्तेन नियमेन समादेशे उपदेशे तत्परः प्रवणः, संश्चासावागम[श्च] व्याश्र(प)कं वैदिकं शास्त्रं कस्य आनन्दप्रवाहं न करोति अपि तु सर्वस्यापि करोतीत्यर्थः । अत्र व्यं-ग्यमाह क्वचिदिति । संकेतदायिनं प्रकटनेन समागमव्याजेन स्तौतीत्यर्थः । तथा हि सतः कांतस्या(स्य) आगमनं मुक्तेर्हेतोः कृंतति नाशयति भुक्तिं वि-रहमुक्तिं च करोतीति वा । एका(कां)ते संकेतस्थाने समादेश[न]माह्(ह्व)नं, तत्परः, स्तुतिरूपं समा(दा)गमं(म) पदद्योत्यवस्तु { र } व्यंग्यम् । न चा-त्रोपमालंकारो व्यंग्य इति वाच्यं, द्वयोर्द्वयोर्विसदृशत्वात् । अर्थशक्तिमूलस्य ध्वनेर्द्वादशप्रकाराणां मध्ये स्वतःसंभविना वस्तुना वस्तुव्यंग्य[प्र]काश्यमुदाहरति सायमिति । कांचित्सखीं प्रति कस्याश्चिदुक्तिः । संध्यायां स्नानमाचरितं, चं-दनेनांगं समालिप्तं { स्तयोऽम् } [सूर्योऽयं अस्त]पर्वतं यातः अत एवा-विस्रब्ध(ब्धं) यथा तथा अत्रागमनम् । हे सखि तव सौकुमार्यं आश्चर्यं येन कारणेनाभितः क्लांतासि अधुना ते नेत्रद्वंद्वं निमीलनव्यतिकररहितं सत् स्थातु(तुं) न शक्नोति । अत्र व्यंग्यमाह अत्रेति । अन्यदा आगमनेन क्लांतासि अधुना तु कारणाभावेऽपि क्लांतासीति एवंविधाधुनाशब्दार्थरूपेण स्वतःसंभविना व-स्तुना वस्तु स्वभावतः संभाति । शरीराशक्त्याकृत्या नायिकायाः संभोगखेदरूपं वस्तु व्यज्यत इत्यर्थः ।

स्वतःसंभविना वस्तुनालंकारव्यंग्यपदं पदप्रकाश्यमुदाहरति तदिति। विष्णुपुराणस्थं पद्यद्व(द्व)यम्। अन्या गोपकन्यका कृष्ण(ष्णा)प्राप्त(प्ति)-जनितमहादुःखेन विनष्टसर्वपातका विष्णुचि(चिं)तया जनितशुद्धाने(नं)देन क्षीणपुण्यसमूहा तथा जगत्कारणं परब्रह्म { स्व } स्वरूपिणं कृष्णं निरुच्छ्वा-सतया चिंतय(यं)ती ध्या(ध्यां)ती वसंती मुक्ति(क्तिं) प्राणवियोगं मोक्षं च गता। अत्र व्यंग्यमलंकारद्वयमाह अत्रेति। अ { ल } से(शे)षचयशब्दयोरर्थरूपेण स्वतःसंभविना वस्तुना अशेषचयपदद्योत्यौ अध्यवसितप्राधान्यलक्षणलक्षितौ अतिशये(यो)क्त्यलंकारौ स्वशक्तिसामर्थ्यादभिव्यज्येते इत्यर्थः।

स्वतःसंभविनालंकारेण पदद्योत्यं वस्त(स्तु)व्यंग्यमुदाहरति क्षणे(ण)देति। असौ क्षणदा रात्रिः अक्षणदा अनुत्सवदा। वण(न)मरण्यं अवणं(नं) रक्षणहेतुः, व्यसनं अव्यसनं अवीनाने(मे)उकानांअसनं प्रेरण(णं), इत्थं हे वीर त्वयि पराङ्-मुखे सर्व(र्वे) पराङ्मुखवत्। अत्र व्यंग्यं वस्त्वाह अत्रेति। या क्षणदा सा कथमक्षणदेत्यादिः शब्दशक्तिमूलो विरोधः अ(अं)गमुपायो यस्य तेनार्थांतर-न्यासाख्येन त्वयि पराङ्मुखे भव[ति] द्विषतां सर्वं पराङ्मुखमित्येवंरूपेणालंका-रेण दे(दै) वै(व)मपि तवानुकूलमिति वस्तु सर्वपदद्योत्यं व्यज्यत इत्यर्थः। स्वतःसंभविनालंकारेण पदद्योत्यं अलंकारव्यंग्यमुदाहरति तुहेति। सखीवच-नम्। हे सखि, गोसम्मि प्रभाते, तुह वल्लहस्स तव वल्लभस्य, अहरो अधरः, मिलाणकमलदलो म्लानकमलदल(लं), आसि आसीत्, इअ इति, सोउण श्रुत्वा, णववहु नववधूः, वयणं वदनां(नं), महीसंमुहं महीसंमुखं कुणइ करोति। अत्र व्यंग्यमाह अत्रेति। अधरो म्लानकमलदलमिति पदार्थरूपेण स्वतःसंभ-विना रूपकालंकारेण स्वभावशक्त्या ह(हे)तोः पदार्थत्वादिलक्षण[ल]क्षितः काव्यलिंगाख्यो मिलना(लाणा)दिपदद्योत्यो व्यज्यत इत्यर्थः। म्लानत्वं प्रति परिचुंबनादिरत्र हेतुः। उपसंहरति एष्विति।

इदानीं कविप्रौढोक्तिनिर्मितेन वस्तुना पदद्योत्यवस्तुव्यंग्यमुदाहरति रो(रा)ई(ई)स्विति। जो यः, कामः, चंद[ध]वलासु चंद्रधवलासु,

रोए(ई)सु रात्रिषु, ललिअं ललितं, चावम् चापं, अप्फालिउण अ(आ)-स्फाल्य, विअं(जं)भंतो विजृंभमाणः, एकच्छत्तं विअ एकच्छत्रमिव, भुअणरज्जं भुवनराज्यं, कुणइ करोति। अत्र वस्तुव्यंग्यमाह अत्रेति। कवि-प्रौढोक्तिनिर्मितेन भुवनराज्यमिति पदार्थरूपेण वस्तुना कामस्य राज्ये कामिनो भृत्याः भा(भो)गनिष्ठत्वेन तदाज्ञापरा इति वसु(स्तु) धु(भु)वत(न)[रा]ज्यं-(ज्य)पदद्योत्यं व्यज्यत इत्यर्थः। कविप्रौढोक्तिनिर्मितेन वस्तुन(ना) अलं-कारव्यंग्यं पदद्योत्यमुदाहरति निशितेति। वा(का)मः { इ } तीक्ष्णबाणर्धे-(धि)या अराले वक्रे वयसि तारुण्ये मा(स)ति,, अंगनाया दृशि स्वसामध्या(र्थ्य)-मर्पयति, सा च यत्र यत्र निपा(प)तति तत्र तत्र कि(का)मिन(ना)मवस्थाः अभिलाषचिंताद्या(देः) व्यतिकरं मिश्रीभावं प्राप्य समुन्मिषंति। अत्र व्यंग्यमलंका-रमाह अत्रेति। व्यतिकरपदार्थरूपेण वस्त(स्तु)ना कविप्रौढोक्तिनिर्मितेन अभि-लाषचिंतादीनामवस्थानां सुखदुःखरूपाणां परस्परविरुद्धानां यौगप[द्य]मसंभाव्य-मिति विरोधालंकारो व्यज्यत इत्यर्थः।

कविप्रौढोक्तिनिर्मितेनालंकारेण पदद्योत्यं वस्तुव्यंग्यमुदाहरति वारिजं(ज्ज)-तो इति। मं(सं)दावकदत्थिएन(ण) संतापकदर्थितेन, थणहरवयसएण स्तनभर-वयस्येन, हृदयेन, वारिज्जंतो [वार्यमाणः], पुणोऽपि पुनः विशुद्धजाइ विशुद्धइ-(जा)तिः, तस्याः हारः, ण चलइ न चलति। विरहावस्थायां संतप्तेन हृदयेन मन्मथदुःखभागित्वेन वयस्यस्तनभर एव संतापमनुभवतु त्वं क(किं)मिति अनु-भवसीति निवार्यमाण इत्यर्थः। व्यंग्यं वस्त्वाह अत्रेति। विशुद्धजातिरिति पदार्थ-रूपेण कविप्रौढोक्तिनिर्मितेन काव्यलिंगाद्यालंकारेण किमत्र भा(भ)व(य)वि-(भो)[ते]ति कंपमान एवास्ते न तु च[ल]तीति वस्तुव्यं(व्य)ग्य(ज्य)त इत्यर्थः। कविप्रौढोक्तिनिर्मितेन रूपकालंकारेण पदद्योत्यमलंकारव्यङ्ग्यमुदाहरति सो मुद्धेति। मुद्धसामलंगो मुग्धश्यामलाङ्गः, कलिअललिअणिअदेहो कलितललित-निय(ज)देहः, धम्मिल्लो धम्मिल्लः केशपाशः, स एव सरो स्स(स)रः, तोए तस्याः, खंधाइं(हि) स्कंधाद्धेतोः बलं लहिअ लब्ध्वा, पुरअसंगरे पुरतसंग्रामे, जअइ

जयति । अत्र व्यंग्यमलंकारमाह **अत्रेति** । कविप्रौढोक्तिनिर्मितेन रूपकालंकारेण रतिलक्षणकारणाभावे { अभिलाषलक्षणकारणाभावे } अभिलाषलक्षणकार्योत्पत्तिरूपो { वि }विभावनाख्यालंकारो व्यज्यत इत्यर्थः । उपसंहरति **एष्विति** ।

कविनिबद्धवक्तृप्रौढोक्तिनिर्मितेन त(ते)न वस्तुना प[द]द्यो[त्यं] व्यंग्यमुदाहरति **णवपुण्णिमे**ति । सुहअ हे सुभग, त्तं त्वं, णवपुण्णिमम्मिअ(अं)कस्स नवपूर्णिमामृगांकस्य; को कः, सि असि, मह मम, सच्च(च्चं) सत्यं, भणह कथय, तुह तव, अज्ज अद्य, सोहग्गसमग्गा सौभाग्यसमग्रा, स्त्री पऊ(ओ)सरअणिव्व प्रदोषरजनीव । अत्र व्यंग्यं वस्त्वाह **अत्रेति** । कविना निबद्धा ख(खं)डिता स्त्री वक्त्री तत्प्रौढ़ो......न वाच्यरूपेण यथा रजन्यां चंद्र उदयकाल एव रक्तः तथा तस्यां त्वं प्रथममेवानुरक्तः ततः पश्चात्त(द्वि)[रक्तः] [त]तइति वस्तु न(ण)वपदद्यो[त्यम्] । यथा प्रदोषरजनो क्षणमात्रमेव ससौभाग्या तथा सापीति पउ(ओ)सेत्यादिपदद्योत्यं वस्तु च अर्थशक्त्युद्भवतया व्यज(ज्य)त इत्यर्थः । कविनिबद्धवक्तृप्रौढोक्तिनिर्मितेन वस्तुना पदद्योत्यमलंकारव्यंग्यमुदाहरति **सहीति** । सहि हे सखि, णवणिहुवणसमरम्मिअ(न)वनिभु(धु)वनसमरे, णिणिबिडाऐ (ए) निबिड्या, अंकवालीसहि(ही)ए अंकपालीसख्या, अंकपाली आलि(लिं)गनं, सैव सखी तया, उद्दै(च्छे)रंतो उच्छ्रि(च्छि)यमाणः, द्वयोस्त(स्तृ)तीयतया स्पर्शविघ्नहेतुत्वात् अधिकीभवन्, हारो हारः; नि(णि)वारिओ विअ निवारित एव । यथा सख्या रतिकाले अन्यो निवार्यते तथा गाढालिंगनेन ह(हा)रस्त्रोटित इत्यर्थः । एतावदेव मया दृष्टं तदा ततः कहं कथं त्वया रमिअं रमितं कथयेति शेषः । अत्र व्यंग्यमलंकारमाह **अत्रेति** । कविनिबद्धवक्तृप्रौढोक्तिनिर्मितेन वाच्यार्थरूपेण वस्तुना उपमानभूतात् पूर्वरतात् उपमेम(य)भूतस्य हारच्छेदानंतरभाविनो रस(त)स्याधिक्यमिति व्यतिरेकालंकारः कथमितिपदद्योत्यः अर्थशक्तिमूलो व्यज्यत इत्यर्थः ।

कविनिबद्धववक्तृप्रौढोक्तिनिर्मितेनालंकारेण [प]दद्योत्यं वस्तुव्यंग्यमुदाहरति **पविसंतीति** । सहि सखि, घरवारं गृहद्वारं, पविसंती प्रविशंती, पहम् पन्थानं पु(वि)लोवि(इ)ऊण पुरो विलोक्य , विवलिअवयणा विच-

लितवदना , सती , घडं घटं, खंधा(धे) स्कंधे , घेत्तूण गृहीत्वा, हा हा णट्ठोत्ति नष्ट इति , के त्ति किमिति, { अ } रुअसि रोदिषि । अत्र वस्तुव्यंग्यमाह **अत्रेति** । न (ण) ट्ठोत्तीतिपदार्थरूपेण रोदनविषयेण हेत्वलंकारेण अपरं घटं गृहीत्वा गच्छेति किंत्तिपदद्योत्यं व्यज्यत इत्यर्थः । अस्यैवोहरणांतरमाह **यथा वेति** । सहि सखि क्षु(कु)डेण घटेनोपलक्षिता त्वं विहलं विह्वलं ष(ख)लं प्रियं , दट्ठूण दृष्ट्वा , तरलतरदिट्ठी तरलतरदृष्टिर्जातेति शेषः । वारप्फंसमिसेण द्वारस्पर्शमिषेण , अप्पा आत्मा , गरुओत्ति गुरुरिति , घंट्ट (घटः) पाडिअविमि(हि)ण्णो(ण्णो) पातितविभिन्नः त्वयेति शेषः । अथवा हे सखि तरलतरदृष्टिं विशृंखलां त्वां दृष्ट्वा घटेन कर्त्रा आत्मा स्वस्वरूपं गुरुरिति द्वारस्पर्शव्याजेन पातितविभिन्नः । अत्र वस्तुव्यंग्यमाह **अत्रेति** । कविनिबद्धा या सखी वक्त्री तत्प्रौढोक्तिनिर्मिते वारप्फंसमिसेणेतिपदार्थेनापह्नुत्यलंकारेण ते श्वश्रूं बोधयिष्यामीति वस्तु { मिति वस्तु } मिसेणेति पदद्योत्यं व्यज्यत इत्यर्थः । कविनिबद्धवक्तृप्रौढा(ढो)क्तिनिर्मितेनालंकारेण पदद्योत्यमलंकारव्यंग्यमुदाहरति जोहि (हल्ला)[इ] [इ] ति । जोए हा(ल्ला)इ ज्योत्स्नया, मह (हु) रसेण अ मधुरसेन च , विइण्णतारुण्णउत्सुचमणा वितीर्णतारुण्योत्सुकमनाः बुड्ढा वि वृद्धाऽपि सा परवहू परवधूः, णउड्ढेव्व नवोढेव, तुह तव, हिअअं हृदयं , हरइ हरति । अहह खेदे । अत्रालंकारव्यंग्यमाह **अत्रेति** । कविनिबद्धा विदग्धा या वक्त्री तत्प्रौढोक्तिनिर्मित(ते)स(न) परवहू(धू)त्वादिति काव्यलिंगालंकारेणार्थशक्तिमूलतया परवहूपदद्योत्यः प्रतिषेधरूपे(प) आक्षेपालंकारो व्यज्यत इत्यर्थः । उपसंहरति **एष्विति** । वाक्यप्रकाश्यमुदाहर्तव्यमिति श(शं)कां निवारयति **वाक्येति** । निःशेषमित्यादौ उदाहृतमित्यर्थः । तर्हि उभयशक्त्युद्भवस्य पदप्रकाश्यस्योदाहरणं वक्तव्यम् । अत आह **शब्देति** । फलितमाह **इतीति** । वाक्यप्रकाश्ये अष्टादशप्रभेदाः, पदप्रकाशे (श्ये) सप्तदशेति पंचत्रिंशत्प्रभेदा इत्यर्थः । अर्थशक्तिजनितो ध्वनि(निः) प्रबंधद्योत्यो भवतीत्याह **प्रबंधेऽपीति** । तेन [न] केवल(लं) पदे वाक्ये द्योतके भवति अपि तु प्रबंधेऽपीत्यपि शब्दार्थः । { उदाहरति **यथेति** । } संवादमेवोदाहरति **त(य)था**–

(थे) { चे } ति। कालधर्मं मरणं त्यक्ष्य(ज)ध्वमिति, छंदोवत् तर्द्धि(द्वि)दा(दां) प्रवृत्तिरित(ति) न्यायेन व्यत्ययेनात्मनेपदं टेरेत्वाभावश्च। भारतोक्तगृध्रगोमायुसंवादापरपर्यायप्रतिप्रतिपाद्येनार्थरूपेण वस्तुना गृध्रगोमायोः पा(बा)लभक्षणाभिप्रायरूपवस्तु व्यज्यत इत्यर्थः। अर्थशक्तिमूलध्वनिभेदेषु द्वादशेसु(षु) प्रबंधे द्योतके एको भेद उदाहृतः। अन्ये वस्तुना अलंकारव्यंग्यादित्व एकादशभेदा उदाहर्तव्या इत्यत आह अन्ये त्विति। प्रे(प्र)ब(बं)धेऽपीत्यत्रापिशब्दार्थमाह अपिशब्दादिति। उक्तसमुच(च्च)यार्थोऽपीत्यर्थः।

एवं वाक्ये पदे प्रबंधे च ध्वनिभेदानुक्त्वा पदौ(दै)कदेशादिष्वपि ती(ता)नाह पदौ(दै)कदेशेति। पदस्यैकदेशा अंशाः प्रकृतिप्रत्ययसंबंधकालवचनपुरुषव्यत्ययपूर्वनिपातविशेषविभक्तितद्धितोपसर्गनिपातसर्वनामप्रातिपदिकाव्ययीभावः(व)कर्मभूताधारादिविशेषाः। रचना संघटनं, सा च त्रिविधा, असमासा मध्यमसमासा [दीर्घसमासा] वि(चे)ति। वर्णा मृदुरूक्षात्मानः प्रसिद्धाः। तेषु निमित्तसप्तमी, निमित्तेषु सत्सु, द्योतकेषु च सत्स्वित्यर्थः। रसादय इत्यादिशब्देन भावा (वाः) तदाभासादयः। यद्यपि विभावादीनां रसाभिव्यंजकत्वं तथापि विभावादीनामपि पदांशादिना प्रकाश्यमानत्वेन चमत्कारकारित्वात् इ[ति] विभावाद्य(द्या)श्रयपदांशानामपि सद्योतकत्वमविरुद्धम्। तत्र प्रकृत्या रसव्यंग्यमुदाहरति रे(र)ज्ञे(इ) [इ]ति। रज्ज(इ)केलिहिया(य)णिअसणकरकिसलयरुद्धणयणजुअलस्स रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य। हृतनिवसनश्चासौ करकिसलयरुद्धनयनयुगलश्चेति समासः। रुद्दस्स रुद्रस्य, पव्वइपरिचु(चुं)बिअ पार्वतीपरिचुंबितं, तइअणयणं त(तृ)तीयनयन(नं), जअइ जयति। अत्र व्यंग्यं रसमाह अत्रेते। जयतीत्युक्तं न तु शोभत इत्याद्युक्तमित्यर्थः। शोभत इत्यादि परित्यज्य जयतीति कथने प्रयोजनमाह समान इति। पिधान(नं) इतरलोचनद्वयसाधारणेऽपि लोकोत्तरेणैव चु(चुं)बनरूपेणास्य त(तृ)ता(ती)यनयनस्य पिधानमिति। तदेव तृतीयनयनमेव इतरनयनद्वयादुत्कृष्टम्। अधिकः अयमर्थो जयतिप्रयोगात् नान्यस्मादतः भयप्रकृत्या संभोगो व्यज्यत इत्यर्थः।

अत्रैवोदाहरणा(णां)तरमाह तथेति । कयाचिन्नायिकया सशपथं पादानतः प्रेयान् तिरक्त(स्कृ)तः स उन्मनाः सन् द्वित्राणि पदानि यावन्न याति तावत् धावित्वा प्रत्युत करयुगले वलभंध्वधनाय (गलद्बंधना च) लसंती या नीवी तया निबंधो निरोधनं यस्मिन्कर्मणि कृतप्रणामकं च य { म } था तथा धृतः, प्रेम्णोऽतिविचित्रा [गतिः इति] आश्चर्यम् । व्यंग्यास(र्थ)माह अत्रेति । द्वित्राणि पदानीत्युक्तं न तु द्वाराणीति । द्वित्राणि द्वाराणीत्युच्यमाने रसाप्रतीतेः । अतो द्वित्रादि(णि)पदप्रकृत्या प्रेक्षातिशयो व्यज्यत इत्यर्थः । तिङ्सु[प्]प्रत्ययाभ्यां रसव्यंग्यश्रु(त्व)मुदाहरति तिङिति । वायुः पथि पथि दिशि दिशि [शु]कचञ्चूवत् चारूणां कष्ट(द)ल्यंकुराणां लतानां च नर्तकः, कामः, प्रतिमनुष्यं बाणं(णा)न्विक्षिपति । प्रतिनगर(रं) मनस्विनी { मा } मानवार्ता निवृत्ता । व्यंग्यमाह अत्रेति । किरतीत्यत्र वर्तमानाभिधायी तिप्प्रत्ययोऽतीतानागतरहितस्य किरणस्य वर्तमानस्य(स्या)भिधीयमानत्वेनोत्कर्षं व्यनक्ति । निवृत्तेत्यत्र सुप्रत्ययो निवर्तनलज्ज(रूप)स्य धात्वर्थस्य तिष्पाद्यमानत्वं (निष्पाद्यमानत्वं) दूरीकृत्य निष्पन्नत्वेनोत्कर्षं व्यनक्ति । तत्रापि सिद्धत्वेऽपि क्तप्रत्ययोऽतीतत्वं व्यनक्तीत्यर्थः ।

अत्रैवोदाहरणान्तरमाह यथा वेति । प्राणवल्लभः बहिरवनतशिराः सन् भूमिं लिखन्नास्ते, तव सख्ये(ख्यो) निराहाराः सत्यः निरंतररोदनोच्छूननेत्राः, पंजरस्थशुकैः हसनं च पठनं च परित्यक्ते, तव चेयमवस्था । अतः हे कठिने मानं परित्यज । अत्र व्यंग्यमाह अत्रेति । लिखन्निति सुप्विभक्त्या प्रसादपर्यंतमास्त द(इ)ति व्यज्यते । लिखतीत्युक्ते अस्यार्थस्याप्रतीतेः । आस्त इति तिङ् विभक्त्या दयितानुनयतात्पर्यपो(पा)रतं त्य(त्यं) व्यज्यते । आसि(सी)न इत्युक्ते अस्यार्थस्याप्रतीतेः । भूमिमिति सुप्विभक्त्या तस्य खिन्नाकुलत्वं व्यज्यते, भूमावित्युच्यमाने [बुद्धि]पूर्वकचित्रलेखकस्यैव प्रतीयमानत्वात् अस्यार्थस्याप्रतीतेः । एवं सुबादयोऽभिप्रायविशेषं व्यंजंति । अभिव्यक्तिः सो(स्वा)भिप्रायः, स्वस्वविभावादिरूपना(णा) द्वारेण रसादीन्व्यनक्तीत्यर्थः । संबं-

ध्ये(धे)न व्यंग्यमुदाहरति **सबंधस्येति** । गामारुहम्मि ग्रामाहांस्मि, ग्र(ग्रा)म अल्पं(हं) जातास्मीति वा, गामे वसामि णअरत्थिइं नगरस्थितिं, ण आणामि न जानामि, णाअरिआणं नागरिकानां, पइणो पतीन्, हरेमि हरामि, जा या, होमि भवामि, सा होमि भवामि । अत्र व्यंग्यमाह **नागरिकाणामिति** । नागरिकानां(णां) पतीनित्यत्र स(सं)ब(बं)धार्था षष्ठी नागरिकाभिर्ह्तचित्तान(ना)मे(म)पि मय्यासक्ति(क्ते)रतिशयेनेति वैदग्धा(ग्ध्या)तिशयं व्यनक्ति । नागरिकापतीनिति-समासे संबन्धस्य मू(गू)ढतया उक्तस्य व्यंग्यस्याप्रतीतेरित्यर्थः ।

कालेन व्यंग्यमाह **रमणीय** इती(ति) । अत्र वर्तमानं श्रीरामं प्रति परशुरामेण प्रयुक्तः भूतकाले विहितश्चासीदिति लङ्प्रयोगः तद्धनन(नो)सु(त्सु)कस्व-(त्व)कथनेन परशुरामस्य जयस्व(व)चनेन वीररसोत्कर्षं व्यनक्ति । कालस्य काले विहितस्य लङे(ङो) । व्यंजकत्वं उपचारात् । अन्यथा कालस्य पदैकदेशत्वाभावात्तत्रानुदाहरणत्वं स्यात् । { ननु पदैकदेशद्योत्यो रसोऽत्र न प्रतीयते, तादृशपदाप्रयोगादित्यत आह पद्यादीति । } कुपितस्येत्यनेन रौद्रो रसोऽत्रास्तीत्फु-(त्यु)क्तम् । वचनत्य(स्य) व्यंजकत्वमुदाहरति **वचनस्येति** । हे सुंदर, ताण-(णं) तेषा(षां), गुणग्गहणाणं गुणग्रहणानां, तासां उक्कण्ठाणं उत्कण्ठानां, तस्स तस्य, प्रे(पे)म(म्म)स्स प्रेमाः(म्णः), ताण(णं) तेषां, भा(भ)णिआण(णं) भणितानां, इरिसअं ईदृशं,अवणा(सा)ग(णं) अवसाण(नं),जाय(यं) जातम् । व्यंग्यमाह **अत्रेति** । तेषां गुणग्रहणानामित्यत्र बहुवचनेन हृदयाकर्षि वैदग्ध(ग्ध्य)बहुत्वं ध्वन्यते, तदद्वारा दि(वि)प्रल(लं)भोऽपि द्योत्यत इत्यर्थः । तस्य प्रेमण(म्ण) इत्येकवचनेन प्रेम(म्ण) एकत्वं अखण्डत्वं ध्वन्यते । तदद्वारा विप्रलंभोऽपि द्योत्यत इत्यर्थश्चात्य(प्य)ते । तादृशेनैव प्रकर्षप्रतीतेः । तथा रसातिशयोऽपि द्योत्यत इत्यर्थः । न च सुपां वाचकत्वेन द्योतकत्वमसंभव(वी) { ती } ति वाच्यं, स्वार्थद्रव्यलिंगसंख्याकारकं प्र(प्रा)तिपदिकार्थ इति मतमाश्रित्य भाष्यकारेण सुपां द्योतकत्वांगीकारात् ।

पुरुषा(ष)व्यत्ययव्यंजकत्वमुदाहरति **पुरुषव्यत्ययेति** । कश्चिद्वैराग्यवान् चित्तं प्रत्याह । चंचललोचना स्त्री तस्यामंचिता रुचिर्यस्य मनसः, एवंविध रे रे

चित्त, स्थिरप्रेमाणं महिमानं हित्वा अबलां विलोक्य किं नृत्यसि, विहरिष्यामीति किं मन्यसे। बत खेदे। हतामिमां(मा)[मं]तराशां मुञ्च। संसारसमुद्रे एषा स्त्री कंठतले शिला कृता खलु। व्यंग्यमाह अत्रेति। हासः सपरिहासः, प्रहासे च मन्योपपदे मा(म)न्यतेरुत्तम एकवद्ये(च्चे)त्यनेन मन्योपपदे मध्यमः मन्यतेश्चोत्तमोऽभिधीयते। अतो मन्ये विहरिष्यस इति पुरुषव्यत्ययेन प्रहासो द्योत्यत इत्यर्थः। पूर्वनिपातस्य व्यंजकत्वमाह पूर्वेति। येषां राज्ञां दोर्बलमेव ते राजानो दुर्बलतया संमताः, प्रायः केवलनीतिरीतिशरणैः राजभिस्तैः कि(किं) कार्यं, पराक्रमम(न)यस्वीकारेण मनोहरगतयो ये तै(ते) नैव स्युः, लोकत्रये भवादृशास्त्वादृशाः प्र(प)वित्राः द्वित्रा(त्राः) पर(रं) संति। अत्र व्यंग्यमाह अत्रेति। पराक्रमनयेत्यत्र नयशब्दस्याल्पाइ(चू)तए(र)त्वेऽपि पराक्रमशब्दस्याभ्यर्हितत्वात्पूर्वनिपातः कृत(तः), तेन तस्य प्राधान्यं व्यज्यत इत्यर्थः। न चात्र पूर्वनिपातस्य पदैकदेशा(श)त्व(त्वं) नास्तीति वाच्यं, पदधर्मस्य पूर्वनिपातस्य पा(प)दैकद(दे)शत्वोपचारात्।

विभक्तिविशेषस्य व्यंजकत्वमुदाहरति विभक्तीति। हे धीर, तव विधुरैः शत्रुभिश्चापशब्दधारिणि युद्धप्रदेशे दिवसमयोधि। हे नृप, भवांस्तु दिवसेन विधिना, अनुष्ठानेन सिद्धः साधुवादः कीर्ति(र्तिः), न त(तु) स्तुतिमात्रेण, तस्य पदं यथा तथा आ(अ) युद्ध। अत्र व्यंग्यमाह अत्रेति। अपवर्गे त(तृ)तीयेति स्वरूपेण फलप्राप्तौ तृतीयाविधाना[त्] दिवसेने { नि } ति तृतीया फलप्राप्तिद्योतिका। अत एव शत्रूणां उपा(प)भावा[त्] दिवसमिति द्वितीया। तद्धितस्य व्यंजकत्वमुदाहरति भूयो भूय इति। अभिनवकाममिव गृहवलभीतु(तुं)गगवाक्षस्था मालती भूयो भूयः समीपस्थनगरीवोथ्या(थ्यां)न्प(प)[र्य]टंते(तं) माधवं पुग(नः) पुनरवलोक्य यथ(था)स्यात् [तथा] दृढौत्सुक्ये ललितं यथा तथा लुलीतैरंगकैस्तान्म(म्य)ति इति कथितं न(नः) लवंगिकयेति प्रका(क)रणसंगति(तिः)। अत्र व्यंग्यमाह अत्रेति। अनुकंपायामित्यनेन अनुकंपाया(यां) कप्रत्ययविधानात्, अंगकैरिति तद्धितेन { कप्रत्ययेन } कप्रत्ययेनानुकंपा व्यज्यते, तयानुकंपया दौर्बल्याद्यवस्थादिरन(च)नात् विप्रलंभरसप्रकर्षो ध्वन्यत इत्यर्थः।

उपसर्गस्य व्यंजकत्वमुदाहरति **परिच्छेदेति** । इयत्तारा(र)हितः सकलशब्दागोचरः अस्मिं(स्मि)[न्] जन्मनि पुनर्द्वितीयवारं अनुभवपथं न गतवान्। विवेकस्य प्रकर्षेण नाशादुपचितमहामोहगहनः एवंविधः कोऽपि विकाराः(रः) अंतर्जडयति च तापं च कुरुते । व्यंग्यमाह **अत्रेति** । प्रध्वंसादित्यत्र प्रशब्दः प्रकर्षं द्योतयन् आत्यंतिकविवेकाभावं व्यनक्तीत्यर्थः। निपातव्य(व्यं)जकत्वमुदाहरति **कृतमिति** । हे राजन् त्वया मनाः(नः) गर्वाभिमुखं कृतं च अन्यत्किं तव शत्रव एवं निहताश्च। तमांसि तावत्तिषु(ष्ठं)ति यावत्सूर्य उदयपर्वतं न प्राप्नोति । अत्र व्यंग्यमाह **अत्रेति** । चेति निपातः वीररसनिष्ठं तुल्ययोगितालंकारं ध्वनन् वीररसप्रकर्षं व्यनक्तीत्यर्थः । यद्यपि च पदमेव न पदैकदेशः तथापि पदैकदेशस्ये(स्यै)व चकार[स्य]स्वातंत्र्येणे(ण) प्रयोगाभावात्पदैकदेशत्वोपचारः ।

सर्वनामवचनप्रातिपा(प)दिकवचनानां व्यंजकमुदी(दा)[ह]रति **रामोऽसाविति** । राघवानन्दे रावणमुद्दिश्य कुम्भकर्णस्य वचनम् । असौ राम(मः) भुवनेषु विक्रमगुणैः संधिविग्रहादिभिः परां प्रसिद्धि प्राप्तः, अस्माकं भाग्यानां नाशात् यदि देव तं रामं न जानाति, एष वायुः बंदी सन् यस्य रामस्य एकबाणाहत्त्या कृताति(नि) श्रीणोभूतविशालतालानां विवराणि, तेभ्य उदीर्णे(र्णैः) सप्तभिस्स्वरैः यशांसि गायति । अत्र व्यंग्यमाह **अत्रेति** । असाविति सर्वनाम एकवचनं च, असावेव रामो नान्यो रामोऽस्तीति व्यनक्ति । भुवनेष्विति बहुवचनं, सर्वेषु भुवनेषु न त्वेकस्मिन्निति प्रसिद्धेः सार्वत्रिकत्वं व्यनक्ति। गुणैरित्यत्र प्रातिपदिकं गुणैरेव प्रसिद्धो न त्वगुणैरिति व्यनक्ति । अत्रैव बहुवचनं गुणानां बहुत्वं व्यनक्ति । अस्मा(स्म)दिति सर्वेषां नाशं व्यनक्ति, त्वन्मदित्युक्ते सर्वनाशाप्रतं तैः(तेः) । भाग्यविपर्ययादिति, [वि]पर्ययात् वैपरीत्यात् यानि भाग्यानि आसन् तानि इदानीमन्थासंपन्ना { ना } मी(नी)त्यभिधानं भाग्याभासं व्यनक्ति । अभावमुखेनाभिधानं न व्यनक्तीत्यर्थः । अत्र सर्वत्र रामविषयो भावः पदैकदेशद्योत्यः ।

इम निजव्यया(यी)भावाना(नां) कर्मभूताधाराणां व्यंजकत्वमुदाहरति **तरुणिमनी**ति । तरुणिमनि तारुण्ये कन्यां गतवति सति भ्रुवोरग्रे शिष्यभूतो(ते) कामधनू(नु)ष उपाध्यायभूतस्य समीपे पठति सति चकितचलनयना इयं स्त्री सर्वस्त्रीणां मो(मौ)लिमधिवसति । अत्र व्यंग्यान्याह **अत्रे**ति । इमनिजव्ययीभावकर्माधाराणां स्वरूपस्य व्यंजकत्वमिति संबंधत्वादिभिः स्वप्रत्ययाद्यैः इमनिजव्ययीभावकर्मभूताधारैः स एव विशेषो व्यंग्य इति शेषः । **प्राप्नोती**ति । यो { त } विशेषो व्यंग्यः स्वसाधकव्यंजकास्तित्वं प्राप्नोतीत्यर्थः । श्रुतिकट्वादिहीना(नो) माधुर्याधि(दि)युक्तः शब्दागोचर { स } संबंधो विशेषः इमनिजादीनां स्वरूपेण विभावादिद्वार(रा) तथा पारंपर्येण व्यज्यत इत्यर्थः । उक्तप्रकारेणान्येषामपि पदैकदेशादीनां व्यंजकत्वमुदाहार्यमित्याह **एवमि**ति । पदैकद(दे)शानां व्यां(व्यं)ञ्जकत्वोदाहरणानंतरं गुणानां रचनानां च व्यंजकत्वमु[दा]हा(ह)र्तव्यमित्याशंक्य गुणस्वरू[प]निरूपणे प्रस्तावान् उदाहरिष्यत इत्याह **वर्णे**ति । वर्णेष्वपीति सूत्रगतापिशब्दार्थमाह **अपिशब्दा**दिति । नाटकादिप्रबन्धेषु व्यंजकेषु सत्सु रसादयो व्यंग्या इत्यर्थः । उपसंहरति **एवमि**ति । पूर्वगर्णि(णि)ताप्ता(तेषु) भेदै(दे)षु पदवाक्यप्रकाश्यौ, ताभ्यां [सह] पदैकदेशद्योत्यः रचनाद्योत्य(त्य) वर्णद्योत्यः प्रबन्धद्योत्यः पदद्योत्यो वाक्यद्योत्यश्चेति षड्भेदा इत्यर्थः । मिलित्वा कियंतो भवंतीत्यत आह **भेदा** इति । वाक्येऽर्थान्तरसंक्रमितवाच्यादयोऽष्टादश, पदे च सप्तदश, प्रबन्धे च अर्थशक्तिमूलकद्वादश, रसादीनां च पदौ(दै)कदेशरचनावर्णप्रकाश्यत्वेन चत्वार इति सर्वसंकलने एकपंच(चा)शद्ध्वनिभेदा इत्यर्थः । वाक्यं पूरयति **व्याख्याता** इति ।

ध्वनेर्मिश्रभेदमाह **तेषामि**ति । तेषामेकपंचाशत्संख्या(ख्य)कानां शुद्धानां स्वभेदैकपंचाशद्भेदैरेकपंचाशता गुणने एकाधिकषड्विंशतिशतानि भेदा भवंति । तत्र योजनप्रकारः—अर्थान्तरसंक्रमितवाच्येनार्थान्तरसंक्रमितवाच्यस्य योजने अर्थान्तरसंक्रमितवाच्येनात्यंततिरस्कृतवाच्यस्य एवमर्थान्तरस(सं)क्रमितवाच्येनेनेतरभेदानां योजने[ऽ]र्था(र्थां)तरसंक्रमितवाच्यस्यैकपंचाशद्भेदाः, एवम्

शिष्टानामप्येकपंचाशद्भेदाः । एवं शुद्धभेदान्प्रदर्श्यापरानपि भेदान् संकरसंसृष्टिभ्यामाह **संकरो**(रे)णेति । सूत्रं व्याकरोति **न केवलमि**ति । त्रिरूपेणेत्येतद्व्याकरोति **संशयेति** । को मुख्यः को वा गौण इति संशयः । अनुग्राह्यानुग्राहकता अंगा(गां)नि(गि)भावः, अंगी प्रधानं अंगं गौणं व्यंजकशब्दः, तत एकव्यंजकानुप्रवेशः एकेनैव पदादिना युगपद्द्वयप्रतिपत्तिः । एकरूपयेत्येतद्व्याकरोति **परस्परे**ति । संकरस्त्रिरूपः, संसृष्टिरेकरूपा । एवं एकाधिकषड्विंशतिशतानी(नि) चतुर्गुणने परस्परयोजनेऽपि अन्ये भेदा भवंतीत्यर्थः । एतेषां संख्यानां भेदानाह **वेदे**ति । वेदाश्चत्वारः; ख(खं) शून्यं बि(बिं)दुः, अब्धयश्चत्वारा(रो) वियत् शून्यं बि(बिं)दुश्चंद्र एकः एवमंकः कर्तव्यः । १०-४०४ एकमयुतं चतुरधिका चतुःशती चेत्यर्थः । एतेषामेव शुद्धभेदो(दैः) सह मेलने संख्यामाह **शुद्धे**ति । शरः पंच; इषवः पंच, युगानि चत्वारि, खं शून्यं बिंदु(दुः)इ[न्दु]रेकः, एव(मं)कः, कर्तव्यः । १०४५५ एकमयुत(तं) पंचपंचाशदधिका चतुःशी(श)तीति भावः । संकराद्युदाह[रति] **तत्रे**ति । संशयास्पदत्वेन ध्वनिद्वयसंका(की)र्णस्योदाहरणमाह **खणे**ति । सुहअ शु(सु)भ[ग], देअर हे देवर ते जाआए जाया(य)या किंपि किमपि, भणिआ भणिता सती, खणपाहुणिआ खणे उत्सवे प्राहु(धु)नि(णि)का निमंत्र्याहूता, पडोहखलहीघरम्मि गृहपश्चाद्भागवली(ल)भा(भी)गृहे, रोदइ रोदिति, वराई वराकी, सा अणुणिज्जउ अनुनीयताम् । संशयमभिना(धा)य दर्शयति **अत्रे**ति । स्वभार्यावचनेन रोदनात् अनुनयकरणे सिद्धेऽपि अनुनीयतामित्येतत् मुखार्थस्य बाधे सति स्वविषयीभूतार्थविषये सम्बन्धे सति उपभोगलक्षणमर्थांतरं लक्षयन् संतोषोत्पादनादि व्यनक्ति किं वा स्वार्थमभिदधदेव सुभगशब्देन दत्तावकाशमुपभोगं व्यनक्ति इत्यर्थान्तरस(सं)क्रमितवाच्यविवक्षितान्यपरवाच्ययोरन्यतरनिर्णयकाभावात्संदेहास्पदत्वेन म(सं)कर इत्यर्थः । संसृष्टि अनुआ(ग्रा)ह्यानुग्राहकसंकरं एकव्यंजकानुप्रविष्टं संकरं चैकस्मिन्नेव श्लोके दर्शयति **स्निग्धेत्यादि** । स्निग्धा निबिडजलसंबन्धा[त्] स्ल(श्ल)क्ष्णा श्यामल(ला) या कांतिस्तयाति [लि]प्तं छुरितं

विर (य)त(त्) नभ(भः)यैः ते दर्पवशाद्वेल्लंत्यो बलाका येषु वेल्लं(ल्ल)न(नं) सविलासखेलनं एवंविधा ये मेघाः । अनेन नभसो धुर्दुर्श(दुर्धर्ष)तत्वमुक्तम् । प्रतिदिशं वायवः शीतलाः अने[न] दिक्षु गमनं निवारितम् । मयूराणां हर्षणकेका-रूपाः कला वर्तते(न्ते) अनेन पयोदाक्रांतस्मरणीत(य)गुहादौ ति(नि)लीयावस्थानं निवारितम् । एवमुद्दीपनविभावोद्बोधितविप्रलंभो रामेऽस्ति । उभयति-(नि)ष्ठत्वाद्विभावाना(नां) साधारण्यं मन्यमानः इ(अ)त एव प्रियां मनसि निधाय स्वष्ट(कृ)तांतमाह काममित्यादि । उद्दीपकामेघादयः काम(मं)संतु तथाप्यहं रामः दृढं कठोरहृदयोऽस्मि सर्व(र्वं)सहै(हे) । वैदेही तु सौकुमार्यात्कथं-स्थास्यति । तस्या अवस्थानमेव न । हा हा इति खेदे । हे देवि अप्रत्यक्षाया अपि कथं भव(वि)ष्यतीति चिंतया प्रत्यक्षायमाणत्वात्संबोधनम् । धीरा भव, त्वं कृतामि(भि)षेका; अतो ममै(मे)व तवापि धैर्यं युक्तमिति भावः । अत्र संसृष्टिमाह अत्रेति । लिप्तेत्येतत्पदं कांते कु(कुं)कुमादिवल्लो(ले)पनसाधनत्वासं-भवात् बाधितमुख्यार्थः(र्थं)सन्(त्) निबिडत्वसंबन्धात् स(सं)पर्कातिशयो(यं) लक्षयत् विरहिणामतिदुःखकारित्वं व्यनक्ति । ति(लि)प्तसुहृत्शब्दावत्यंततिरस्का-(स्कृ)तवाच्यो(च्यौ) । अतो वाच्यस्य बाधितत्वेनात्यंततिरस्कृतवाच्यध्वन्योः प्र(प्रा)धान्यात् परस्परनिरपेक्षत्वेन तिलतंडुलवत्स(सं)सृष्टिरित्यर्थः । अनुग्राह्यान-(नु)ग्र(ग्रा)हकभावेन संकरं दर्शयति ताभ्यामिति । राम इति पदं ........णैव प्रयुक्तत्वेन प्रतिपन्नत्वादनुपयुक्तमुख्यार्थं सत् सामान्यविशेषभावसंबंधात्सकल-दुःखभाजनत्वं लक्षयत् सीताभावेऽप्यहं जीवितुं शक्त इत्यर्थान्तरं व्यनक्ति । अतोऽयमर्थान्तरसंक्रमितवाच्यो ध्वनिस्ताभ्यामुक्ताभ्यामत्यंततिरस्कृतवाच्याभ्यां लेपनसुहृद्भावरूपाभ्यामुद्दीपनत्वेनानुग्राहकाभ्यामनुगृह्यते । अस्यानुग्राह्यस्या-नुग्राहकाभ्यां ताभ्यां सहानुग्राह्यानुग्राहकभावेन संकर इत्यर्थः । एकव्यंजका-नुप्रवेशेन संकरं दर्शयति रामेत्यादिना । रामोऽस्मीत्यनेन द्योतितस्यार्थांतर-संक्रमितवाच्यस्य ध्वने रामोऽस्मीति द्योतितस्यालंबनोद्दीपनविभावस्य दैन्याद्यनु-भावस्यावेगादिव्यभिचारिणो विप्रलं[भ]रसध्वनेश्चैकमेव रामपदं व्यंजकम् ।

अत एकव्यंजकानुप्रवेशेन तयोः क्षीरनीरवत्संकर इत्यर्थः । एववं(व)मन्ये-ऽपि भेदा उदाहर्तव्या इत्याह **एवमिति** ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसरस्वतीतीर्थविरचितायां काव्यप्रकाश-

टीकायां **चतुर्थ उल्लासः** ।

---

## उल्लास–५

एवं सप्रपंचस्योत्तमकाव्यस्य निरूपण(णा)नंतरं मध्यमकाव्यस्य प्रपंचो युक्त इति चतुर्थपंचमयोरुल्लासयोः संगतिं कथयन्नुत्तरसूत्रमवतारयति **एव-मिति**। व्यंग्योऽर्थो ललनालावण्यप्रख्यो यः प्रतिपादितः तस्य प्राधान्ये उत्तमं काव्यं, ध्वनिः, तस्मिन्निर्णीते, गुणभावे च वाच(च्य)वाचकत्वप्रकर्षे गुणीभूत-व्यंग्यो नाम मध्यमकाव्यभेदः, **अतादृशि गुणीभूते**त्यादिना सामान्येन लक्षितः । तस्य भेदान्विशेषानाहेत्यर्थः । अगूढं, अपरस्यांगं, काव्य(वाच्य)-सिद्ध्यंगमस्फु[ट]व्यंग(ग्य)मस्फुटं संदिग्धप्राधान्यं, तुल्यप्राधान्यं काका (क्वा)-क्षिप्तं, असुंदरव्यंग्यं चेति मध्यमकाव्यस्याष्टौ भेदाः । अगूढस्य वाच्यत्वाभावा-न्मुख्यत्वमेव न गुणत्वमित्याशंका(कां) निवारयितु(तुं) गूढरसस्य मुख्यत्वं सदृष्टांतमाह **कामिनी**ति । व्यंग्यप्रतोतो(तौ) त्रयः प्रकारा द्रुतत्वं मध्यमत्वं विलम्बितत्वं चेति। तत्(त्र) गूढत्वं नाम मध्यमत्वं तदेव–नांध्रीपयोधर इवा-तितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः, [अ]र्थो गिरामपिहितः पिहितश्च किंचित्सौभाग्यमेति मरहट्ट वधूकुचाभ इति न्यायेन चमत्का(त्क)रोति। अतस्तदेव मुख्यमित्यर्थः । यदर्थमेतदुक्तं तदाह,**अगूढं त्वि**ति । यद्यपि वाच्य-त्वं नास्ति तथापि **अगूढं**(ढ)स्फुटतया वाच्यसदृशमिति गुणीभूतमेवे-त्यर्थः । व्यंग्यं वस्तु(स्त्व)लंकाररसस्वरूपतया त्रिविधम् । तत्र वस्तुमात्रव्यंग-(ग्य)स्य अर्थान्तरसंक्रमितवाच्येभ्यः शब्देभ्यो वाच्यरूपवाक्यार्थापेक्षया गुणी-भावे सति गुणीभूतव्यंग्यत्वम् । { तदुदाहवेसति गुणीभूतव्यंग्यत्वं } तदु-दाहरति—**अगूढं यथे**ति । शत्रुकृततिरस्कारश्रवणानंतरं कस्यचिद्राज्ञो वचनम् । असुहृदा शत्रू(त्रु)णा कृततिरस्कृतिः, एत्य आ[ग]त्य, यस्य मे कर्णौ तप्तसूची-व्यधव्यतिकरेण युनक्ति, एष सोऽहं कांचीगुणग्रथनभाजनं स्त्रीरूपोऽस्मि । अतः संप्रति जीवन्न भवामि किमावहामि, किं करोमि । अस्मीत्यव्ययं अहंशब्द-पर्यायो वा । अस्मिन्नक्षेएकात्वयः (अस्मिन् पक्षे एकान्वयः) । एक(त)स्मिन् शो(श्लो)के प्रकृतोपयुक्तमंशमाह, **अत्रे**ति । जोवन्नभवो(वा)मीत्यनेन स्वार्थ-

स्य.नुपयुक्तत्वात् जीवत्कार्याकरणं लक्ष्यते। लक्षिते अर्थांतरे संक्रमितवाच्यः शब्दः। तस्य व्यंग्यं विक्रमराहित्यं बस्तु, अतिस्फुटत्वेन अप्रधानं, वाच्यस्यैव चमत्कारकारित्वात् झगिति पराक्रमरहितत्वं प्रतीयत इति अगूढव्यंग्यत्वमित्यर्थः। अथवा जीवन्न भवामीत्यनेन कष्टजीवनत्वं लक्ष्यते। मरणमेव श्रेय इति व्यंग्यं शिष्टं(ष्ट)समा(म्म)तम्।

अत्यंततिरस्कृतवाच्यस्य अगूढव्यंग्यत्वमुदाहरति, **उन्निद्रे**ति। भृंगाः विकसितरक्तोत(त्प)ञगभ(र्भ)पिंगलीकृतांगाः संतो गृहदीर्घिकासु मंजु यथा तथा गायंति। नूतनबंधूककुसुमदलाभं उदयपर्वतस्पर्शि पतत् खेबि(र्बि)म्बं चकास्ति। अत्रापि प्रकृतोपयुक्तमाह, **अत्र चुंबनस्ये**ति। चु(चुं)बनं वक्त्रसंयोगः, स चात्रानुपपन्न इति तत्सामान्यं स्पर्शनमात्रं लक्षयति। चुम्बितपदमत्यंततिरस्कृतवाच्यं; तस्य व्यंग्यं उदयकालशोभावहत्वं वा वस्तु स्फुटमिव प्रतीयत इति अगूढव्यंग्यत्वमित्यर्थः।

अर्थशक्तिमूलानुरणनरूपस्य अगूढव्यंग्यत्वमुदाहरति **अत्रासीदि**ति। प्रतिप्रयाणे रामः सीतां प्रत्याह हे मृगाक्ष(क्षि)सीते, अत्रास्मिन्प्रदेशे, फणिन एव पाशास्तै(स्तैः)कृतबंधनस्य विधिः अस्माकमासीद्। अत्र भवत्या देवरे लक्ष(क्ष्म)णे शक्त्या अस्त्रविशेषेण वक्षसि गाढं ताडिते सति, हनुमता द्रोणाद्रिः संजीवनीविशिष्टः अत्राहू(हृ)तः। अत्र दिव्यैः लक्ष्मणशरैरिंद्रजित् लोकांतरं प्रापितः। अत्र केनापि राक्षसपतेः रावणस्य कंटा(ठा)टवी कृता(त्ता), छिन्ना। अत्र प्रकृतोपयुक्तमंशमाह **अत्रे**ति। केनापीत्युक्ते मयेति व्यंग्यं झटित्येव प्रतीयत इति [अ]गूढव्यंग्यत्वमित्यर्थः। केनापीत्यस्मिन्पादे(ठे)मध्यमकाव्यत्वमस्त(स्ति)। कस्मिन्पादे(ठे)उत्तमत्वमित्याकांक्षायामाह **तस्यापी**ति। अस्मिन्पाठे मयेति व्यंग्यस्य गूढत्वादुत्तमत्वमित्यर्थः। एवं सप्रपंचमगूढमुदाहृत्य अपरस्यांगमुदाहर्तुमपरपदार्थमाह, **अपरस्य**[इति]। विभावतदाभासभावशांत्यादिरादिशब्दार्थः। रसादे(दे)रंगिनः **रसाद्यंगं**, वाक्यार्थभूतस्य प्रधानस्य वाच्यस्य वस्त्वलंकाररूपस्यांगिनः अनुरणनरूपं वस्त्वलङ्कारररूपं वा अंगं भवतीत्यर्थः। रसस्यांगिनः

अंगभूतरसमुदाहरति अयमिति । भूरिश्रवसो रणभुवि पतितहस्तावलोकना-नन्तरं वचनम् । रसं(श)नां मेखलां संभोगावसरे ऊर्ध्वं कर्षतीति पीनौ स्तनौ मर्दयति नाभिश्च { तु } [ऊ]रू च जघनं च नाभ्यूरुजघनं स्पृशति नीवीं विस्रं[स]त्प(न्प)तति सोऽयं करः । अयं स रस(श)नोत्कर्षी नीवीविस्रं-सनः करः । नाभ्यूरुजघनस्पर्शी पीनस्तनविमर्दन इति युक्तः पाठः । संभोग-क्रमलाभात् । तथापि शो(श्लो)क(का)र्त्तो(र्थो)क्तवेल(न) व्यत्ययो न दोषाय । अत्र को रसः कस्यांठा(ङ्ग)मित्याकांक्षायामाह अत्रेति । युद्धस्थले पतितकराव-लोकनेन अनुभूतप्राक्तनसंभोगवृत्तांतः स्मर्यमाणः सत्त(त्व)र(रं) इदानी(नीं) विध्वस्ततया शोकस्य विभावनां प्रतिपद्यत इति करुणस्य वाक(क्या)र्थ(र्थी)भूत-स्यांगिनः पोषकत्वेनोपकारकत्वात् अंगभूतो विप्रलंभशृंगार इत्यर्थः । भावस्यांग-भूतरसमुदाहरति कैलासेति । गिरिभुवः पार्वत्याः कैलासालयश(शं)भुः, तस्य ललाटलोचनरुचा अरुणकांत्यां(त्या) निर्वर्तिता निष्पादिता अलक्तकव्य-क्तिर्लाक्षाकांतिर्यस्याः, प्रसादनार्थं गौरीपादयोः शिवस्य पतनात् सा पादनखद्यु-तिः वः युष्मान् सदा त्रायतां रक्षतात् । नेत्रकांतिस्पर्धाबं { ध्येव } [धेन] समि-(मृ)द्धयेव अनिदाप्तयेव (अतिदीप्तयेव) स्थितया यत्पादनखद्युत्या, सुदृढं रूढा, कोकनदस्यानुकारः अनुकरणं, तेन सरसा नेत्रयोः कान्तिः सद्यः समुत्सार्यते। तिरस्क्[त]यत्ने शंभो प्रणमति सति गौर्याः कोपकृता लोचनारुणता टा(ग)ते-त्यर्थः । अत्रेति । अत्र कविः(वेः) पार्वतीविषयस्य रत्याद्यस्य भावस्य शृंगारो-[ऽ]ग(ङ्ग)म् । कमलाद्युपमितस्य मुखादेरिव रसाद्युपस्कृतस्यापि रसादेश्चारुत्वदर्श-नात्, उपस्कारकस्य रसादेरपि वस्तुन इवालंकारत्वमनुभवसिद्धमंगीकर्तव्यम् ।

भावस्यांगभूतं भावमुदाहरति अत्युच्चा इति । कश्चिद्राजानं स्तौति । हे वृद्धि(पृथ्वि), परितः अत्युच्चाः गिरयः स्फुरंति, स्फारा विशाला अंभोधयः तथा स्फुरंति, तो(ता)नेतानपि बिभ्रत्यपि त्वं किमपि क्लांता श्रांतान्ना(ना)सि तादृश्यै तुभ्यं नमः इति । आर्श्व(श्च)र्ये[ण] मुहुर्मुहुर्यावद्भुव(वः) स्तुतिं प्रस्तौति(मि), हे राजन्, तावत् इमां भूमिं बिभ्रत्तव भुजः स्मृतः, वाचो मुद्रिताः । राजप्र-

भावख्यापने कवेरतितरां रतिस्तस्याश्च भूविषयरतिरेव स्थायीभावोङ्गतयात्र शृंगारः परस्परा { व } स्थावस्तुबंधात्मिकाया रतेरभावात् । ततोऽत्र प्रेय(यो){स्विद} [ऽ]लंकारः । प्रेयः प्रियतराख्यानं विद्यते, यन्निबंधना इति वचनात्, भावस्यांगभूतौ रसाभासभावाभासौ दर्शयति बंदीकृत्येति। कश्चिद्राजानं स्तो(स्तौ)ति । हे नृपः ते तव सैनिकाः द्विषां मृगदृशः प्रियाः बंदीकृत्य ताः, पश्यता(तां) प्रेयसीं(सां), अनादरे षष्ठी, पश्यतः प्रियाम(न)नादृत्येत्यर्थः। ताः श्लिष्यंति, प्रणमंति, परितः लान्ति, परितः आददते चुंबंति । हे अचि(औचि)त्यवारांनिधे अचि(औचि)त्यसमुद्र त्व(त्वं) सुकृतिः । अस्माकं दृशोर्निपतितोऽसि यतः तत्तस्मात् अखिला विरो्धो विध्वस्ताः इति । तैः प्रत्यर्थिभिः शत्रुभिः त्वं स्तूयसे । अत्र कस्य को वा अंगमित्याकांक्षायामाह अत्रेति । शत्रुस्त्रीणां रत्यभावे सैनिकानामनौचित्यप्रवृत्तत्वात् रसाभासः प्रथमार्धेन द्योतितः । शत्रूणां च अनुचित्ये(त)दै(स्तु)त्यादौति । भावाभासो द्वितीयार्धेन द्योतितः । तौ च वर्णनीयत्वेन अंगिनः राजविषयस्य रतिभावस्यांगमित्यर्थः । उर्जस्वि अलंकारः ।

अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात् ।
भावानां च रसानां च बंध उर्जस्वि कथ्यते ॥

[इति] वचनात् । भावस्यांगं भावशांतिमुदाहरति अविरसे(ले)ति । हे राजन् तव वैरिणां यो मदः मुहुः अविरलैः करवालस्य कंपनैः भ्रुकुटीतर्जनगर्जनैश्च सह दृष्टः, स मदः तव नेत्रेक्षणात् क्वापि गतः । अत्रापि राजविषयरतिभावस्य मदलक्षणव्यभिचारिभावस्याभावः प्रशमः अंगम् । अत्र भावपरिहाररूपं समाहितमलंकारः । प्रशमस[मा]हितयोरेकार्थत्वात् ।

भावस्यांगं भावोदयमुदाहरति साकमिति । हे राजन् तव वैरिणि कुरंगदृशास्त्रिया, धू(सुहृ)द्भिरपि साकं मधुपानलीलां मद्यपानक्रीडां कर्तुं प्रवृत्ते सति केनापि गृहीतं अन्याभिधायि ते नाम तत्रै(त्र) वैरिणि विषमावस्थामकरोत् । अत्र राजविषयरतिभावस्य शत्रूणां विषमावस्थया त्रासलक्षणभावोदयो नामालंकारः ।

भावस्यांगं भावसंधिमुदाहरति आसोढेति । शैलदुहितुः तस्मिन् काले उल्लसत् असहभावः अशक्तत्वं पार्वतीदौर्बल्यं यत्र तत् तस्य तपसः, कर्मणि षष्ठी, तपो मुञ्च त्वे(त्व)येति भगवतापेक्षितमिति च सहत्वं तपसः, अथ च कथानां विश्रंभेषु रसिकः अस्या विश्रंभं जल्पितं शृणोतीत्यभिलाषवानित्यर्थः । कपटेन यो ब्रह्मचारिवेषः तस्यापनयने त्वराशैथिलाभ्यां युगपदभियुक्तः प्रेरितः स्मरहरः वो युष्मभ्यं प्रमोदं दिश्यात् । अत्र त्वरातिव्यंग्य अ(आ)वेगः शैथिल्याभिव्यंग्यं धैर्यं, ततो(योः) संधिः, स्मरहरविषयस्य रत्याख्यभावस्यांगम् । अत्र भावसंधिरलंकारः ।

भावस्यांगभूतां भावशबलतामाह पश्येदिति । वने काचित्कन्या रत्यर्थिनं { धं } प्रत्याह कश्चित् पश्येत् हे चपल, चल, गठ(शठ), का त्वरा अहं कुमार्यस्मि, हस्तालम्बं वितर देहि । हहहा व्युत्क्रमः, व्युत्क्रमो जायते । असीत्यव्ययं युष्मदर्थे । त्वं क्व यासि । इत्थं हे पृथ्वीपरिवृढ राजन् अरण्यवृत्तेः भवद्विद्विषः कन्या फलकिसलयात्यान्याद[दा]ना सती किंचिदभिधत्ते इति राजानं कश्चित्स्तौति । अत्र केषां शबलता । तत्राह अत्रेति । पश्येत्कश्चिदिति शंका, रे चपलेत्यसूया, कारेत्व(त्वरे)ति धृति(तिः), अहं कुमारीति स्मृतिः, हस्तालंबं वितरेत्यौत्सुक्यं [ह]हहेति { राम हेति } दैन्यं, व्युत्क्रम इति विबोध(धः), क्व यासीत्यौत्सुक्यं, एतेषां शबलता, पूर्वपूर्वोपमर्देन उपनिबंधः, सा राजविषयरतिभावस्यांगमित्यर्थः । अत्र भावशबलतैवालंकारः । यत्प्रतिज्ञातं प्राक् रसवदादयोलंकारा वक्ष्यंत इति तत्प्रस्तुतमित्यनुस्मारयति एते चेति । च एवार्थे । प्राधान्ये सति ध्वनिना व्याप्तविषयत्वात् रसः शृंगारादिः प्रेयः प्रियतराख्यानं ऊर्जो बलं तानि विद्यंते येषु समाहितं च एते रसवदाद्यलंकारा उक्ता इत्यर्थः । ननु रसादिचतुष्टयस्य अलंकारत्ववद्भावोदयादीनामप्यप्राधान्यात् अलंकारत्वं दुर्वारं भावोदयभावसंधिभावशबलताश्च पृथगलंकारा इत्यं(त्य)लंकारसर्वस्वकारसूत्रानुरोधेन कश्चिद्ब्रूयात्तद्धयंपोकार्यमित्येवमुक्तमिति परिहरति तथापीति । एवमिति अलंकारत्वेनेत्यर्थः । ननु गुणी-

भूतव्यंग्यस्य मध्यमकाव्यस्यापि रसभावनार्थपर्यालोचनया उत्तमकाव्य एव पर्यवसानान्मध्यमकाव्ययोः संकरः संसृष्टिर्वा स्यात् इत्याशंकामनुवदति **यद्यपीति** । स्वप्रभेदादिभिरित्यादिशब्देन अलंकारो ग्राह्यः । स्वशब्देन मध्यमोत्तमशब्दयोः काव्ययोर्ग्रहणम् । सालंकारैर्ध्वनिप्रभेदैः सालंकारैर्गुणीभूतव्यंगै(ग्यै)रित्यर्थः । यद्यपि सांका(क)र्यादिकमस्ति तथापि न्यायान्निर्णय इति परिहरति **तथापीति**। प्राधान्यमत्र वर्णनीयताया द्रष्टव्यम् । अ[यं] स रशनोत्कर्षीत्यादौ कविना शृंगारैर्वर्ण्यमानत्वात्प्राधान्यमस्तीति मध्यमकाव्यमस्तीति भावः । शब्दशक्तिमूलमपरस्यांगमुदाहरति **जनस्थान** इति । याचकवचनम् । मया याचकेन रामत्वं रामचन्द्रत्वमाप्तम् । तदेव विशेषणैराह । जनानां स्थाने, पक्षे दंडकारण्ये, कनक[स्य] मृगः, मार्गणं अन्वेषणं, तत्र तृष्णा तद्युक्तधिया, पक्षे कनकमृगे तृष्णा, तदन्वित(युक्त)धिया, भ्रांतं पर्यटितं, वै प्रसिद्धौ, देहि विश्राण वेति, पक्षे वैदेहि हे सीते इति वचः प्रतिपदं उपश्रुत्य यथा तथा प्रलपितम् । अलं अत्यर्थं काभर्तुः ईषद्भर्तुः अल्पत्वेन कुत्सितत्वं लक्ष्यते । वदनपरिपाटीषु वचनश्रेणिषु घटना आदेशकारितेति यावत् कृता, पक्षे लंकाभर्तुः रावणस्य वदनानां परिपाटी पंक्तिः तत्र इषुघटना शरयोजना कृता । कुशलं वसुधनं यस्य तस्य भावस्तत्ता, पक्षे कुशलवौ सुतौ यस्याः सा कुशलवसुता सीता तु नाधिगता न प्राप्ता । किं कस्यांगमित्याकांक्षायामाह **अत्रेति** । शब्द { इति } - शक्तिमूलं यस्य अनुरणा(ण)नरूपः व्यंग्यतायोग्यः । **अनुरणनोपम** इति पाठे अनुरणनसदृशः । रामवृत्तांतस्याप्र(प्रा)करणिकत्वात्सविशेषणोपमेयकथनेनैव रामत्वे सिद्धे रामत्वमिति शब्देनोपादानात् उपमानोपमेय[भा]वो वाक्यार्थीभूतस्य वाच्यस्यार्थस्यांगमित्यर्थः । वाच्यस्यालंकारस्य वस्तुरूपव्यंग्यं अर्थशक्तिमूलं अनुरणनरूपमंगमुदाहरति । कश्चिन्नायको नायिकां प्रत्याह, हे तन्वंगि, पश्य, क्वचित् क्वचिदपि द्वीपे क्षपिता त्रियामा रात्रिर्येन सहस्ररश्मिरागत्य संप्रति प्रभाते, पादपतनेन किरणपतनेन, कृत्वा वियोगेन विसंष्ठुलाङ्गीं विग(ष)मांगीकृशा(ता)मित्यर्थः । एतां अंभोजिनीं कमलिनीं शनैः प्रसादयति लक्षणया विकासयतीत्यर्थः । अत्र वाच्यस्यांगं किमित्याकांक्षायामाह **अत्रेति** । अत्र

श्लिष्टपदोक्तौ प्रस्तुत्त(त)रदि(वि)कमलिनोवृत्तांतस्य वाच्यस्य प्रधानस्य सामर्थ्याद्वाच्यसंस्कारकत्वेनागतो नायकवृत्तांतोऽङ्गम् । ननु वियोगविसंस्थू-(ष्ठु)लांगीं पादपतनेनेति श्लिष्टशब्दसद्भावात्किमुभयशक्तिमूलः अर्थशक्तिमूलो वेति शंकायामाह अर्थ(र्थे)ति । भूम्ना नु व्यपदेशा भवंतीति न्यायात् अर्थ-स्यैवाधिक्यादर्थशक्तिमूल एव(वे)तिभावः । ननु किमयमुपमालंकारध्वनिः किं वा वस्तुध्वनिरित्याकांक्षायामाह वस्तुरूप इति । उल्लास्य कालकरवालो(ले)-त्यादि(दा)विव श्लिष्टशब्दाभाव(वा)न(त्) पार्थक्येनार्थद्वयप्रतीत्यभावान्नो-पमालंकारः किं तु वस्तुरूपालंकार एवेत्यर्थः । नत्वयं वाच्यसिद्ध्यंगमस्तु मास्त्वपरस्यांगमित्यत आह निरपेक्षेति । रविकमलिन्यौ नहि नायिकानायक-दृष्टांतमपेक्षेते । अध्यारोपेणेत्यनेनैक्यप्रतिपत्तिः साध्यते । एवकारेण गुणभावं विना प्रकारांतरेणान्वयाभावः । निरपेक्षत्वेन सिद्धस्य वाच्यस्य यदुपोद्बलकं तदपरा(रां)गं, यत्तु वाच्योत्पत्तावेवोपकारकं तद्वाच्यसिद्ध्यंगमिति विवेकात् नायं वाच्यसिद्ध्यंगमिति भावः । अपर { स } स्यांगं सप्रपंचमुदाहृत्य क्रमप्राप्तं वाच्यसिद्ध्यंगमुदाहरति वाच्येति । जलदा एव भुजगाः सर्पाः, तज्जं विषं उदकं, वियोगि[नो]नां भ्रमिं रे(चे)तसोऽनवस्थानं, अरतिं विषयेष्वनभिलाषं, अलसंहृदयं, यामो(मां), ल(त)त्तां, प्रलयं इन्द्रियाणां नष्टचेष्टतां, मूढां(र्छां) मनसो बाह्येद्रि(न्द्रि)यैः सह शक्तिनिरोधः(धं), तमः सत्येव चित्तासामर्थ्ये बाह्ये-न्द्रियशक्तिनिरोधं, शरीरकार्श्यं, मरणशब्देन प्राणत्यागसाधिका { पूर्वं } क्रियैव, पाशबंधाद्यवसरगता विवक्षिते(ता), तच्च प्रसह्यं(ह्य) बलात्कारेण कुरुते । चकार उक्तसमुच्चयार्थः । अत्र किं व्यंग्यं कथं वाच्यसिद्ध्यंगम् । तत्राह, अत्रेति । जलदा एव भुजगा इति जलदानां भुजगभूषणं वाच्यं, हालाहलं वस्तुव्यंग्यं विना न सिद्ध्यतीति हालाहलं वाच्यस्य सिद्धिकृत् । वाच्यस्य भुजगार्थस्य निर्वा-हाय विषमितपदप्रकाश्यशब्दशक्तिमूलो हालाहलो द्यागं (व्यङ्ग्यम् ) । अत एव सापेक्षत्वादपरस्यांगादस्य भेदः । अत्रैवोदाहरणांतरमाह यथा वेति । हे अच्युत कृष्ण, अक्षरणशील, गच्छामि भवतो दर्शात(र्शने)न सुरतसेवाविकलेन प्रीतिः किमुत्पद्यते । किं तु हतजनः एवं विजनस्थयोरेकांतस्थितयोरावयोरन्यदा

संभावयति मन्यते, इत्यनेन प्रकारेणामंत्रणलिंगः अच्युतेत्यामंत्रणप्रकार(रे)- { तेन } [ण] सूचितं यद्वृधा(था)वस्थानं तज्जा(ज्ज)नितः चेद् (खेदः), तेन अलसां गोपी(पीं) श्लिष्यन् पुलकानां(ना)मुत्करस्तेनांचिता तनुर्यस्य स हरिः वऽ(वः) पातु। अत्र किमंगरि(मि)त्याकांक्षायामाह अत्रेति। अच्युतेत्यामंत्रणेन मद्विषये त्वं न चरम इति यद्व्यंग्यं तदामंत्रणभंगोत्यादिवाच्यस्य सिद्ध्यंगमिति शेषः। वाच्यमेवात्र वैदग्ध्यातिशयकारि तदपि वाच्यं स्वोत्पत्तौ स्वोपकारकं व्यंग्यमपेक्षते, अन्यथा { अन्यथा } स्वसैव्य(स्यैव)लाभादिति भावः। उदाहरणद्वयस्य को भेदस्तत्राह एतच्चेति। एतच्च व्यंग्य(ग्यं) एकत्रभ्रमिमरतिमित्यादौ एक एव कविर्वक्तो(क्ता)अपरत्र गच्छाम्यच्युतेत्यादौ पूर्वार्धे गोपी वक्त्री अपरार्धे कविर्वक्तेत्यनयोरुदाहरणयोर्भेद इत्यर्थः।

वाच्यसिद्ध्यंगमुदाहृत्य तदुत्तरमस्फुटमुदाहरति अस्फुटं यथेति। काचित्स्त्रियं प्रत्याह, त्वयि अदृष्टे दर्शनोत्कंवा(ठा), दृष्टे सति परित्यज्य गमिष्यसीति दर्शनविच्छेदभीरुता, अतः अदृष्टेन भवता कृत्वा मया [न] सुखं लभ्यते दृष्टेन कृत्वापि सुखं न लभ्यते। अत्र किं व्यंग्यमस्फुटमित्याकांक्षायामाह अत्रेति। तथा कुर्या इति व्यंग्यं स्फुटत्वेन प्रतीयत इति न तथा चमत्कारकारीति क्लिष्टं यु(उ)क्तम्। शब्दार्थशक्त्या प्रकाशमानं व्यंग्यं स्फ(स्फु)टं इतरदस्फुटमिति विवेकः।

क्रमप्राप्तं संदिग्धप्राधान्यमुदाहरति संदिग्धेति। चंद्रोदयारंभे अंबुराशिरिव किंचित्परिवृत्ते(त्त)धैर्यो हरा(र)स्तु बिंबफलमधरयतः बिंबफलाधरौ ओष्ठौ यस्य तस्मिन्मुखे विलोचनाति(नि) व्यापारयामास। [ओ]ष्ठद्वयं मुखं चेति स्थानत्रये व्यापारणार्थं विलोचन(ना)नीति बहुवचनम्। अत एवैतत्सचमत्कारम्। अत्र संदिग्धप्राधान्यं कथमित्यत आह अत्रेति। चु(चुं)बितुमैच्छदिति प्रतीयमानं प्रधानं किं वा विलोचनव्यापाराणां वाच्यं प्रधानमिति संदेहः। उभयोश्चमत्कारकारित्वादित्यर्थः।

तुल्यप्राधान्यमुदाहरति तुल्येति। जामदग्न्यो रावणस्य प्रधानपुरुषं प्रत्याह। ब्राह्मणावज्ञातिक्रमो भवद्भिश्च क्रियते तर्हि सा भवतां भूतय एव तथा जामद-

ग्न्योऽहं मित्रं अन्यथा जामदग्न्योऽयं दुर्मनायते । व्यंग्यकथनपूर्वकं प्राधान्यमाह **अत्रेति** । वाच्यदौर्मनस्यलक्षणस्य रक्षःक्षयलक्षणस्य व्यंग्यस्य च समकालं प्रतीत्या तुल्यं प्राधान्यमित्यर्थः ।

क्रमप्राप्तं काक्वाक्षिप्तमुदाहरति **काक्वाक्षिप्तमिति** । भीमवचनम् । समरे कोपात् कौरवाणां शतं न मथ्नामि, दुःशासनस्य उरस्तः रुधिरं न पिब(बा)मि, सुयोधनस्यु(स्य) ऊरू गदया न संचूर्णयामि । नृपतियुधिष्ठिरः पा(प)णेन भवतां संधि(धिं) करोतु । अत्र किं व्यंग्यं तस्य वा कथं गुणभावस्तत्राह **अत्रेति** । वाच्यश्चासौ निषिध(द्ध)श्च, तत्सहभावेन वाच्यप्रतीत्यनंतरं प्र(प्रा)धान्यम् । अत्र तु शक्तिरेव स्वा(स्व)सिधेया(द्धये) [आ]क्षिप्तकाकुसहाया सती अत्र विशेषप्रतिपत्तिहेतुर्न काकुमात्रमिति उभयोर्वाच्यव्य(व्यं)ग्ययोर्युगपत्प्रतीतत्वात् गुणीभूतव्य-(व्यं)ग्यत्वमित्यर्थः । न चात्र विपरीतलक्षणास्त्विति वाच्यं, उच्चारणकाल एव कोपाद्गद्गदस्वरादिसाकांक्षकाकुबलात् निषेधस्य निषिध्यमानतयैव युधिष्ठिराभिमतसंधिमार्गाक्षमारूपत्वाभिप्रायेण प्रतीतिरिति मुख्यार्थबाधाद्यभावात् ।

असुंदरमुदाहरति **असुंदरेति** । वाणीरकडुं(कुडं)गुड्डीणसउणिकोलाहलम् । वानीरा वेतसाः, कुंडंगं लतागहनं, वानीरकुडो(कुञ्जो)ड्डीनशकुनिकोलाहलं सुणंतो शृण्वंत्याः, घरकर्मवावडाए गृहकर्मव्यापृतायाः, व(व)हुए वध्वाः, अंगाइ अंगानि, सीयन्ति सीदन्ति । अत्रापि व्यंग्यस्य कथं गुणीभूतत्वम् । तत्राह **अत्रेति** । सीदंत्यंगानीत्युपलक्षणम् । गृहकर्मव्यापृताया अन्यपराया अपि अंगानीति बहुवचनेन एकमपि न ताद(दृ)गंगं यदात्मानं संवरीतुं शक्नोति एवं शकुनिकोलाहलश्रवणमात्रेण अंगसादोऽभूदिति वाच्यस्य स्मरकम्म(र्म)प्रतीतिहेतुत्वेन चमत्कारकारित्वेन सुद(व)ए(च)त्वादव्यंग्यमसुंदरमित्यर्थः । अगूढादीनामन्योन्ययोज-[नेन] संकर[सं]सृष्टी च पूर्ववदेव द्रष्टव्यमित्याह **एषामिति** । एषामगूढा { दा }-दीनां भेदाः । शुद्धध्वनिवद् द्रष्टव्याः । यावन्तः शुद्धध्वनेर्भेदाः तावंतः सर्वेऽपि मध्यमकाव्यस्यापि । किं स क्तिने(भवन्तो)त्याह **यथायोगमिति** । यथासंभवमित्यर्थः । यथायोगशब्दार्थं ध्वनिकारवचनसंवादपूर्वकमाह **यथेति** । यदा वस्तुमा

त्रेण केवलवस्तुना अलंकृतयः अलंकाराः व्यज्यंते तदा भा(ता)सामलंकृतीनां ध्रुवं निश्चयेन ध्वन्यंगता, ध्वनिः शब्दार्थौ अंगं व्यंजकत्वेन यासां तासां भावस्तत्ता। अत्र हेतुमाह काव्यप्रवृत्तिस्तदाश्रयात् व्यंग्यालंकारपरत्वात्, अलंकाराणा(णां) व्यंग्यानां प्राधान्यात्। तत्र काव्ये { न } गुणीभूतव्यंग्यत्वम्। यदि(दा) तत्र व्यंग्योऽर्थो मुख्यो न भवेत् तदा वस्त्वेव मुख्यं स्यात्, न च वस्तुमात्रे काव्यशब्दप्रवृत्ति(त्तिः), शब्दचित्रत्वेन जघन्या(न्य)त्वात्। अतस्तैर्भेदैर्न्यूना अगूढादिभेदाः। एतेषां गुणीभूतव्यंग्यत्वादिर्न यथायोगशब्दार्थ इत्यर्थः।

अन्योन्ययोजनादिना भेदा द्रष्टव्या इत्याह **सालंकारैरिति**। सालंकारैरित्येतद्व्याकरोति, **सालंकारैरिति** इति। विविधालंकारैरित्यनेन शुद्धस्य ध्वने(नेः) केवलैरलंकारैर्योगः अलंकारयुक्तैश्च तैरित्यनेन अलंकारयुक्तैर्गुणीभूतव्यंगै(ग्यै)र्योगश्चेति पक्षद्वयमुक्तम्। तैश्चेत्यनेन गुणीभूतव्यंगै(ग्यै)ः केवलैर्योग इति तृतीयः पक्ष(क्षः) इत्यर्थः। उक्तेऽर्थे संमतिमाह **तदुक्तमिति**। गुणीभूतव्यंग्यैः अलंकारैश्च सह ये वर्तंते ध्वनेः प्रभेदास्तैः संकीर्णतया संसृष्ट्या वा स्वभेदसंकीर्णः स्वप्रभेदस(सं)सृष्टो गुणीभूतव्यंग्यसंकीर्णो गुणीभूतव्यंग्यसंसृष्टो वाच्यालंकारान्तरसंकीर्णो { वाच्यालंकारान्तर संकीर्णो } वाच्यालंकारांतरसंसृष्टः संसृष्टालंकारांतरसंकीर्णः संसृष्टालंकारांतरसंसृष्टश्चेति अनन्तप्रकारो ध्वनिरिति भावः। तत्र ध्वनिगुणीभूतव्यंग्ययोः संसृष्टत्वं यथा, तेषां गोपवधूविलाससुहृदां राधारहः साक्षिणां क्षेमं भद्र कलिंदशैलतनया तीरे लतावेश्मनाम्। विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदो[पयोगे] { मया } ऽधुना [ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः] { सीनेका स्मरतल्पकल्पनेति } [इति]भावः। अत एवान्योन्यानुरागनिश्चयगर्भमेवाह **जाने** इति। वाक्यार्थस्यात्र कर्मत्वम्। अधुना जरती(ठी)भवन्ति मयि तु संनिहिते अनवरतोक्तोपयोगान्मे जराजीर्ण{ ता } मायुरित्यर्थः। विगलन्ति नीला त्विट् येषां अनेनाचिरकालप्रोषितस्याप्यौत्सुक्यं ध्वनितम्। अत्र तु सुहृच्छब्दे साक्षिशब्देऽविवक्षितवाच्यो ध्वनिभेदः। ते जाने इत्येते च पदे गुणीभूतव्यंग्ये। रूपभेद इति पदेन असाधारणगुणगु(ग)णोऽभिव्यक्तोऽपि गुणत्वम(मे)व। रते(यतो) वाच्यस्यैव स्मरणस्य

प्र(प्रा)धान्येन चारुत्वहेतुत्वात्। जाने इत्यनेनोत्प्रेक्ष(क्ष्य)माणा(णे)[न] { तत्र } धर्मव्यंजकेनापि वाच्यमेवोत्प्रेक्षणरूप(पं) प्रधानीक्रियते।

तयोः संस्का(क)रो यथा, न्यक्कारो ह्ययमे[व] [मे] यदरयस्तत्राप्यसौ तापस इति। अत्र लक्ष्यक्रमव्यंग्यस्य रौद्रस्य वाक्यार्थो(र्थी)भूतस्यं(स्य) व्यंग्यविशिष्टवाच्याभिधायिपदैः संकरः। मे अरयः इत्यादिभिः विभावादिरूपतया रो(रौ)द्र एवानुगृह्यते वाच्यस्यैव क्रोधोद्दीपकत्वात्। गुणीभूतव्यंग्यता वाच्यालंकारसंसृष्टत्वं च पदापेक्षया, यथा दीर्घीकुर्वन्पटुमदकलं कूजितं सारसानां प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषाया:(यः)। यत्र स्त्रीणां हरति सुरतग्लानिमंगानुकूलः शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः॥ कूजितां(तमां)दोलितशिप्रातरंगजमधुरशब्दमिश्रं भवतीति दीर्घत्वे(त्वम्)। विकसितकुसुमामोदेन या मैत्री अन्या(न्य)संगो, वियोगिनामन्या(न)नुकूला(ल)लाभः। तेन कषायः उपरक्तः मकरंदेन कषायः कषायीकृतः। प्रार्थनार्थं चाटूनि कारयति प्रियोऽपि संभोगार्थं चाटूनि करोति अंगेषु चातुःषष्टिकप्रयोगेष्वनुकूलः। अत्र मैत्रीपदं ह्यविवक्षितवाच्यो ध्वनिः। पदान्तरवा(राद्)त्प्र(त्प्रे)क्षादिवाच्यालंकारसंकीर्णत्वं चालक्ष्यक्रमव्यंग्यापेक्षया। रसवति सालंकारे काव्ये सर्वत्रैव(वं) द्रष्टव्यम्। न त्व(के)वलं ध्वनिः।

अभेदादिति संसृष्टिसंकरौ किंतु तेषामन्योन्ययोजनयापि तौ स्यातामित्याह **अन्योन्ययोगादिति** सूत्रं व्याकरोति एवमिति गुणतायाः प्रभूततरत्वमेवोपपादयति **तथाहीति**। एकस्यैव शृंगारस्य भेदप्रभेदगणनायामानंत्यं किं वक्तव्यम्। सर्वेषां तद्गुणतायामानंत्यं स्यादित्यर्थः। यद्येवं आनंत्याद्भेदानां भेदगणनमेव दुर्घटमित्यत आह—**संकलनेनेत्यादि**। संकलनं संग्राहकेनाप्युपाधिना एकीकरणमित्यर्थः। तत्र हेतुमाह **व्यंग्यस्येति**। त्रिरूपत्वाद्वस्त्वलंकाररसरूपत्वादित्यर्थः। तदेव विशदयति **तथाहीति**। किंचिद्व्यंग्यं वस्तुरूपमलंकाररूपं च वाच्यतां सहते वाच्यमपि कर्तुं शक्यत इत्यर्थः। तदेव विशदयति **तथाहीति**। किंचित् रमा(सा)दिरूपं अन्यथावाच्यतां न सहते वाच्यस्य स्पर्शाक्षममित्यर्थः। तयोर्मध्ये वाच्यतासहस्य द्वैविध्यमाह **तत्रेति**। तयोः स्वरूप-

माह **अविचित्रमिति** । मात्रग्रहणेन एतदाह— यथा विधिनिषेधतदुभयात्मतया वस्तुध्वनिः संक्षेपेण सुवचः तथालंकारध्वनिः अलंकाराणां **भूयस्त्वादि**ति ।

ननु यदालंकारो व्यंग्यः तदा तस्य अलंकार्यत्वात्कथमलंकारध्वनिरित्याशंक्याह **यद्यपी**ति । तथेत्यलंकारध्वनिः । 'तु'शब्देन रसादेः वस्त्वलंकाराभ्यां विशेषं दर्शयन्नाह **रसादी**ति । आदिशब्देन भावतदाभासतत्प्रशमा उच्यंते । रसादयः केवलं व्यंजनव्यापे(पा)रेणास्वाद्यमानजीव(वि)[त]तया भान्ति च(न) व्यापारान्तरेणेत्याह । **सही**ति । यदि स रसादिर्वाच्यः स्यात्तदा अयं रसः अयं शृंगारः अयं वीर इत्यादिशब्दैरभिधीयेत न चाभिधीयते विभागादिप्रयोगाद्यन्वयव्यतिरेकानुविधायित्वादित्यर्थः । अथ च व्यतिरेकानुविधायित्वमेवाह **तत्प्रयोगेऽपी**ति । रसादि शृंगारादिशब्दप्रयोगेऽपीत्यर्थः । **प्रतीयत** इति । प्रतीतिविषय इत्यर्थः । रसभावादिशब्दसहिते { शृंगारी गिरिजाननेत्यादौ केवलशृंगारहास्यकरुणादिशब्दमात्रभाजि विभावादिप्रतिपादने रहिते मनागपि न रसप्रतीतिसहिते } शृंगारीगिरिजाननेत्यादौ केवलशृंगारहास्यकरुणादिशब्दमात्रभाजिविभावादिप्रतिपादनरहिते मनागपि न रसप्रतीतिः । रसशृङ्गाराद्यभिधानं विनापि केवलेभ्यो विभावादिभ्यः प्रतीतिश्चेत्यन्वयव्यतिरेकाभ्यां न कथंचिदभिधेयत्वं रसादीनामिति भावः । एतेन स्वसंवेदनासिद्धत्वमुक्तमिति द्रष्टव्यम् । तर्हि रसादिलक्ष(क्ष्य) एवास्तु, नेत्याह **मुख्यार्थे**ति । { मुख्यार्थेति । } मुख्यार्थे विभावानुभावादौ लक्षणामूलबाधाद्यभावान्न लक्षणा, काव्यात्मकशब्दनिपीडनेन रसचर्वणादर्शनात् । अत एवालक्ष्यक्रमो रसादिरित्युक्तमिति भावः ।

ननु द्वितीयोल्लासे व्यंग्यविचारः कृतः पुनः किमिति क्रियत इत्याशंक्य म(त)त्र लक्षणामूलस्य ध्वनेर्व्यंग्यत्वमुपपादितमित्याह **अर्थान्तरे**ति प्रतिपादितं विस्तरेणेति शेषः । तर्हि किमवशिष्टमित्याशंक्य अभिधामूलस्य ध्वनेर्व्यंग(ग्य)त्वं पूर्व(र्वं) नोपपादितं इति तत्प्रतिपादनायाह **शब्दशक्ती**ति । शब्दशक्तिमूलानुरणनरूपव्यंग्ये ध्वनौ गावो वः पावनानामित्यादौ नियंत्रणेन प्रकरणनैयत्येन अना(न)भिधेयस्य अवाच्यस्य सुरविलक्षणस्यार्थान्तरस्य व्यंग्यत्वम् । तेन व्यंग्यरूपेणार्थान्तरेण सह प्राकरणिकस्यार्थस्य उपमानोपमेया(य)भावपरिकल्पनात् ,

उपमादिरलंकारः [त]स्य व्यंग्यत्वं च सर्वसंमतमिति भावः । अर्थशक्तिमूले कथमित्याशंक्याह {अ} अर्थशक्तिमूलो(ले) ध्वनौ व्यंग्यस्याभिधेयतायां का वार्तेति सम्बन्धः । विशेषे व्यक्तिविशेषे संकेतः कर्तुं न शक्यते आनंत्याद्व्यभिचारादिति भावः । **सामान्यरूपाणि(णा)मिति**। सामान्यभूतस्वार्थमात्रविश्रांतानामित्यर्थः । तथा चोक्तं सामान्ये हि पदं प्रवर्तते विशेषे वाक्यमिति । प्रतिपत्तुर्जिज्ञासा आकांक्षा, आकांक्षितस्य नैर{त्यं}[न्तर्यं] संनिधिः, संबन्धार्हत्वं योग्यता, एत[त्]त्रितयवशात्संसर्गे सति विशेषणविशेष्यभावलक्षणे परस्परमनुकूले अन्वये सति । अपिशब्दो भिन्नक्रमः । यत्र वाक्यार्थोऽपि अपदार्थः पदैरनभिधेयः तत्र अभिहिताना(नां) पदार्थानां उत्तरकाल अन्वयपरस्परानुकूललक्षणं वदतां भादा(ट्टा)दीनां मते व्यंग्योऽर्थः अभिधेयो न भवतीति किं वक्तव्यमित्यर्थः । सामान्याति(नि) पदार्थरूपाणि अनन्यथासिद्धेर्विशेषं{णं} गमयन्ति [इति] न्यायादित्याह **विशेषरूप** इति ।

एवमभिहितान्वयपक्षे व्यंग्यस्य वाच्यता नास्तीत्युक्त्वा अन्विताभिधानमतेऽवि(पि) व्यंग्यस्य वाच्य{वधा}[ता] नोपपद्यत इत्याह **येऽप्याहुरिति** । ये अन्विताभिधानवादिनः तन्मतं प्रतिपादयितुमाह **शब्दवृद्धे**त्यादि । शब्दाश्च वृद्धौ अभिधेयाश्च तान् । वृद्धयोर्व्यवहा(ह)रमाणयोः । किं च, व्युत्पन्नः पार्श्वस्थो बालः शब्दान् श्रोत्रप्रत्यक्षेण प्रतिपद्यते । वृद्धौ च व्यवहा(ह)रमाणौ, अभिधेयं{वद्य}{यद्य}[अ]र्थं चक्षुषा पश्यति । बालः श्रोतुर्मध्यमवृद्धस्य प्रतिपन्नत्व(त्वं) अर्थावगतित्वं च अर्थानयनलक्षणचेष्टानुमानेन पश्यति । ततो मध्यमवृद्धबुद्ध्यन्यथानुपपत्त्या शब्दै(ब्द)प्रतिपादिकां शक्तिं अर्थे च प्रतिपाद्यामवगच्छेत् । एवं च प्रत्यक्षानुमानार्थापत्तिलक्षणत्रिप्रमाणकं संबन्धं बुध्यंति लोकाः । **अर्थापत्त्यै**(त्ये){व}(ति) । अर्थापत्तेः साक्षात् शक्तिविषयत्वात् इतरयोः अर्थापत्तेरनुग्राहकत्वादिति भावः । प्रतिपादितद(दि)शा प्रतिपादितप्रकारेण तश्चे(च्चे)ष्टचा मध्यमवृद्धचेष्टया तत्र वाक्य(क्ये) वाक्यार्थविषये व्युत्पद्यते व्युत्पन्नो भवति । व्यवहर्तृगतयोः शब्दप्रयोगार्थप(प्र)तिपत्त्योरविभक्तोद्देशवाक्यत्व(स्य) वाक्यार्थनिष्ठतया पूर्वं हेतुफलान्वयो भवतीत्यर्थः । तर्हि

व्युत्पत्ति(त्तिः) कथमत आह परत इति । परतः न(त)दनंतरम् । देवदत्ताश्वमानयेत्यत्र चैत्रस्योद्वापः देवदत्तस्यावाय(प)ः । गोरुद्वापः अश्वस्यावापः । देवदत्त गां नयेत्यत्र आनयनक्रिययोरुद्वापावापौ अन्वयव्यतिरेकाभ्यां पा(प)दानां संकेतो गृह्यते इति संब(बं)धः । प्रवृत्तिनिवृत्तीति । वृद्धव्यवहाराभ्यां शब्दार्थसंबंधाध्यवसायः । स च व्यवहारः प्रवृत्तिनिवृत्तिरूपः प्रवृत्तिनिवृत्ती च विशिष्टार्था(र्थे)निष्ठ इति । अ { धो }[थवा] विशिष्ट एव पदार्थे पदानां संबंधावसाय इत्यर्थः । वाक्यमेवेति । अन्वितानां विशिष्टानामेव पदार्थानामभिधेयत्वम् । वाक्यार्थे हि क्रियाकारकसंसर्गरूपः कारकाणां च क्रियासंबंधोन्मुखतया क्रियाणामपि कारकविहोर(रहा)सहिष्णुत्वेनान्वितानामेव स्वशब्दैरभिधानं भवतीत्यर्थः । एवकारव्यावर्त्यमाह नत्विति । सामान्याकारेणाभिहितानां पदार्थानां पश्चाद्वैशिष्ट्यं वाक्यार्थत्वेन न संभवति । ननु किं पदार्थसामान्यान्विते स्वार्थे पदानां संकेतग्रहः, आहोस्वित्पदार्था(र्थ) वा(वि) { पश्चात् } -शेषान्विते । ( । ) नाद्यः, विशेषतो व्युत्पत्तिर्न स्यात् । नापि द्वितीयः प्रतिवाक्यं स्वार्थस्य विशेषरूपत्वात् अस्यैतद्वाचकमित्येवंरूपेण पदानां प्रत्यभिज्ञानं न स्यात् आनंत्यदोषश्च स्यादित्यन्विताभिधानपक्षो न संगच्छत इत्याशंक्याह यद्यपीति । संकेतगोचरो यद्यपीति संबंधः । यद्यपि वाक्यांतरे दृष्टप्रयोगानि तान्यै-(न्ये)वैतानीत्यर्थः । व्यतिवक्रा(षक्ता)नामिति । वाक्यस्यैव प्रयोगार्हत्वात्पदार्थान्तरैरन्वितानामित्यर्थः । तथाभूतत्वादिति । सामान्यावच्छादिते विशेषरूपत्वादित्यर्थः । प्रथमपक्ष एव स्वीकृतः । न च विशेषे व्युत्पत्त्यभावः । न(नि)र्विशेषे(षं) न सामान्यमिति न्यायेन विशेषे पयवसानादिति भावः ।

एवमन्विताभिधानं प्रदर्श्य व्य(व्यं)ग्यस्य अवाच्यतामाह तेषामिति । सामान्यतः कृताशेषविशेषाणि भवंतीति तत्प्रतीतिर्नांतरीयकतयैवेति विशेषसिद्धिः । निर्विशेषं न सामान्यं भवेच्छशविषाणवत् । ततः सामान्यावच्छादितो विशेष एव संकेतविशेषः(षयः) । ततश्च सामान्यरूप एव पदार्थो[ऽ]संकेतितत्वादनभिधेय इत्यर्थः । अतिविशेषभून इति । विशेषमतिक्रांतः अतिविशेषः संभूतः प्राप्तः अतिविशेषभूतः सामान्यपदार्थ इत्यर्थः । यत्र तु सामान्यरूपोऽपि पदार्थः प्रति-

पद्यते प्रतीतिविषयः न वाच्यः तत्रे(त्र) कैव कथा व्यंग्यस्य । { च } विध्या- देरर्थान्तरस्यावाच्यतामाह **अन्वितविशेष** इति । अन्विताः विशेषाः यत्र स संसर्ग इत्यर्थः । यतो वाच्यस्ततः पक्षद्वये { थ } [अ]पदार्थ एव वाक्यार्थः । अन्वि- ताभिधानत्वा(वा)द्येकदेशिमतं दूषयितुमाह **यदप्युच्यु(च्य)त** इति । नैमित्तिका- र्थानुसारेण वाक्यार्थतात्पथा(र्या)र्थानुसारेण निमित्तानि पदार्थाः कल्पंते । ततो नैमित्तिक एवायं न व्यंग्य इति वदन् वादी पृष्टव्यः किं निर्पि(मि)त(त्त)त्वं कार- कत्वं ज्ञापकत्वं वेति । विकल्पा(ल्पमा)द्यं दूषयति **शब्दस्येति** । द्वितीयेऽपि ज्ञाप- कत्वमज्ञातस्य वा । नाद्य इत्याह **ज्ञापकत्वं त्विति** । द्वितीयेऽपि अन्यस्मात् ज्ञानं संकेताद्वा । नाद्यः असंभवादित्यभिप्रेत्य द्वितीयं दूषयति **ज्ञातत्वं चेति** । स च संकेत आ(अ)न्वितमात्रो(त्रे) सामान्यावच्छादितविशेषरूपे अस्तु । को दोष इत्यासं(शं)क्य निमित्तप्रतीतौ नैमित्तिकप्रतीतिः नैमित्तिकप्रतीतौ निमित्त- प्रतीतिरित्यन्योन्याश्रय इत्याह **एवं चेति** । फलितमाह **इति नैमित्तिकेति** । एकदेश्यं(श्यं)तरमतं दूषयितुमाह **ये त्वभिदधतीत्यादि** । यथा इषुः उरश्छदं उरश्च भित्वा जीवितं गृह्णाति न कश्चित्प्रवृत्तिभेदः तथा शब्दस्याभिधाव्यापार एक एव स्वार्थमर्थान्तरं वावगमयतीति न व्यापारभेद इत्यर्थः । **यत्पर** इति । अभिधा हि यत्पर्यंता तत्रैवाभिधायकत्वमुचितं तत्पर्यंतता । सा च प्रधाना(नी)- भूतव्यंग्ये स्यादिति ध्वनेर्यन्निरूपितं तत्राप्यभिधाव्यापारेण भवितुं युक्तम् । ततो व्यंग्यस्य विधेः प्राधान्येन वाच्यत्वे(त्व)म(मे)व न्याय्यमिति तेषामभिप्रायः । ते तात्पर्यवाच्ये(चो)युक्तेर्यत्परः शब्दः श(स) स(श)ब्दार्थ(र्थ) इति वचनस्य अतात्पर्यज्ञाः अभिप्रायं न बुध्यंत इत्यर्थः । यथा देवा देवानामिन्द्रियाणां प्रियाः सुखिनः अज्ञा इति यावत् । एतदेव व्याचष्टे **तथा हीति** । भूतं प्रमाणां- तरेण सिद्धम् । भव्यं भवतीति व्युत्पत्त्या साध्यम् । **कारकपदार्थां** इति यथा देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यादावोदनपाकश्चेदन्यतः सिद्धः तदा स्थाल्यामधिकरणत्वमात्रं विधेयं तस्यैव साध्यत्वात् । **स्वक्रियेति** लोहितोष्णीष- त्वविधानादिकाः क्रियाः । ननु कारकस्य साध(ध्य)त्वाभावात्तत्र वाक्यस्य

तात्पर्यं न स्यादित्याशंक्याह **संध्यार्थो(साध्याय)मानतामिति** । साध्यस्वरूपतामित्यर्थः ।

फलितमाह **ततश्चेति** । उदाहरणमाह **यथेति** । अन्यतसर्वं प्रमाणांतरसिद्धमिति लोहितोष्णीषत्वमेव सर्वैः कारकैः साध्यत इत्यर्थः । उदाहरणांतरमाह **हवनस्येति अन्यत** इति अग्निहोत्रं जुहोतीत्यनेना(न) । अनयोरुदाहरणयोरेकमेव वस्तु विधेयं न तु द्वयमिति मात्रशब्दार्थः । मात्रशब्दव्यावर्त्यमाह **क्वचिदिति** । उदाहरति **यथेति** । रक्तत्वं वा न चेदन्यतः सिद्धं तदा पद(ट)मात्रं विधेयं, पदो(टो) वा न वेत्युभयमन्यतः सिद्धं तदा रक्तत्वमात्रं विधेयम् । क्वचित्त(त्तु) साक्षाच्छब्देनैव त्रयं व्वि(वि)धेयम् । फलितमाह **ततश्चेति** । उपात्तस्य उक्तस्यैव शब्दस्य संबन्धिन्यर्थे अभिधेये तात्पर्यं न तु निमित्तांतरेण प्रतीतिमात्रेण व्यंग्येप्यथ्ये(र्थे) तात्पर्यावकाशः । ज्ञानमात्रे तात्पर्यप्रसंगे अंगीक्रियमाणे बाधकमाह **एवं हीति** । पूर्वशब्दस्य सापेक्षत्वादपराद्यर्थोऽपि प्रतीयत इति तत्रापि तात्पर्यं स्यादित्यर्थः । ननूप(पा)त्ते(त्त)स्यैवेति शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्र इति यदुक्तं तदसंगतं, विषं भक्षयेत्यत्र व्यभिचारादित्याशंक्याह **यत्त्विति** । विषं भक्षयेत्येतद्वाक्यस्य पुत्रं प्रति मात्रोक्तस्य सा(मा) चास्य गृहे भुक्या (भुङ्क्था) इत्यत्र तात्पर्यादनुपात्तेऽपि तात्पर्यमिति पूर्वपक्षिणोऽभिप्रायः । { प्र } **उच्यत** इति । यत्--तत्रेतिसंबंधः । चकारादेकवाक्यतावगमात् आख्यातयोरंगानि(ङ्गि)भावाभावेनैकवाक्यतायां(याः) असंभवात् विषभक्षगवाक्यस्य अस्य गृहे न भोक्तव्यमिति कृदन्तवाक्यत्वकल्पनेनांगांगिभावात् विषभक्षगादपि दुष्टमेतद्गृहभोजनमिति सर्थ(र्व)था मास्य गृहे भुक्या (भुङ्क्था) इतिं उपात्त{श}शब्दापि(र्थ) एव तात्पर्यमिति सिद्धांताभिप्रायः । अनुपात्तेऽपि तात्पर्यकल्पनायामतिप्रसंगमाह **यदि वेति** । शब्दो हि संकेतसापेक्षः स्वार्थमभिधत्ते न निरपेक्षः । { अतो यत्रैवा चास्य संकेतसापेक्षः स्वार्थमभिधत्ते न निरपेक्ष } अतो यत्रैव चास्य संकेतस्तत्रैवाभिधाव्यापारः, नार्थान्तरे, तत्र संकेताभावात् । अन्यथा, ब्राह्मण पुत्रस्ते जात इत्यादिवाक्यश्रवणानन्तरं

प्रतीयमानानां हर्षशोकादीनां वाच्यत्वं स्यादिति भावः। अनुपात्तेऽपि तात्पर्य-कल्पनायां लक्षणा न स्यादिति दूषणांतरमाह **कस्माच्चेति**। गंगायां घोष इत्यत्र गंगाशब्दे लक्षणीये तीरे अतिदीर्घाभिधाव्यापारेण प्रतीतिसिद्धेर्लक्षणा न स्यादिति भावः। तत्रैव दूषणान्तरमाह **किमिति चेति**। श्रुत्या(त्य)र्थानां लक्षणानि त्वस्माभिरनंतरत्र प्रकरणे प्रदर्शितानि यथा—'श्रुतिः शब्दोऽनपेक्षः स्यादभिधातुं पदान्तरे श्रुतसर्वार्थसामर्थं(र्थ्यं) लिंगमित्युच्यते बुधैः। { पदवृन्दं मिलित्वार्थं कू(ब्रु)वद्वा-[क्यमभिधीयते]। { कामितीयीत } प्रधानवाक्यमगोक्त्याकांक्षं(क्षा)

[संहत्यार्थं ब्रुवद्वृद्वन्दं पदानां वाक्यमुच्यते।

प्रधानवाक्यस्याङ्गोक्त्याऽऽकाङ्क्षा] प्रकरणं मतम्।

स्थानं समानदेशत्वं सभाख्या थौ(यौ)ग(गि)को रवः। एतेषां प(पा)रदौर्बल्यं विरोधे पूर्वप(पू)र्वतः। अर्थस्य विप्रकर्षेण विप्रकर्षस्तु कथ्यते। पंचभिस्याध्यरहिता (?) समाख्या संनिधिः पुनः॥ वाक्यद्वयेन चैकेन लि(लिं)गं स्यात्केवला-श्रुतिः। बाध्यैव स्यात्समाख्या तु र्वा(बा)धिकैव श्रुतिः पुनः॥ बाध्यबाध-करूपेण लिंगादीनि यथोचितमिति एतेषामुदाहरणानि तर्व्वरन्त (रसरत्न) प्रदीपिकायां प्रदर्शितानि। यथा तत्र तावच्छ्रु(च्छ्रु)तिलिंग(गा)द(दे) { या } -र्बलाबलत्वचिंता तत्र कदाचन स्तरीरसि नेद्र(न्द्र) सश्चसि दाशुष इत्यादिकाए(ऐं)द्रीकृ(ऋ)क(क्)। ध्याद्रिया(ऐ) गार्हपत्यमुपतिष्ठत इति द्वितीया { ता } श्रुतिः। तत्र इन्द्रस्यैवोपस्थानं उत इन्द्रस्य गार्हपत्यस्य वा किं वा उभयोः उत गार्हपत्यस्येति विशेषहेतोरभावात्संशयः। तत्रेन्द्रध्प्र(प्र)काशनसामर्थ्यरूपाल्लिंगान्मंत्रस्य इन्द्रविषयक्रियासाधनत्वं गम्यते। अन्यथाऽनेनइन्द्रप्रकाशनं व्यर्थं स्यात् अत एतन्मंत्रकरणक्रियां प्रति इन्द्रः प्रधानमिति एवंविधबुध्युत्पादनं लिंगविनियोगः। का क्रियेति विषयजिज्ञासायां ऐं { द्रियो } (प्रो)पतिष्ठत इत्यनेन अविरुद्धपदद्वयरूपेण वाक्येन उपस्थानक्रियायां पर्यवसानं क्रियते। एतदुक्तं भवति—ऐंद्रेण मन्त्रेण इन्द्रमुपतिष्ठेति { मिति }। तथा गार्हपत्यमित्यनया द्वितीयांतपदरूपया स्तुत्या गार्हपत्यप्र(प्रा)धान्य(न्यं) गम्यते। तत्(त्र) गुणभूता किंचित्करणकक्रियामंतरेण न संभवति।

ततस्तादर्शी कांचनक्रियां प्रति गार्हपत्यः प्रधानमित्येतादृशबुध्युत्पा दनं श्रुतिविनियोगः। ऐन्द्रियो(य्रो)पतिष्ठत इति पदद्वयेन मंत्रविशेषक्रियाविशेषयोः पर्यवसानं भवति। एवं च सति ए(ऐं)द्र(द्रे)ण मंत्रेण गार्हपत्यमुपतिष्ठत इत्यर्थो भवति तदेवं श्रुतिलिंगयोर्विरोधे सति श्रुतिवदेव लिंगादेरपि मानत्वाविशेषात्ता(त)दर्थप्रतीतेश्च तलिं(लिं ? )गाधीनत्वादिंद्रोपस्थानस्य लिंगाधिगतिसमये श्रुत्या गा { द्र } र्हपत्योपस्थानावगमात् व्रीहियववद्विकल्पेन द्वयोरुपस्थानमित्येकः पक्षः। गुणानां प्रतिप्रधानमावृत्तेरुपस्थानद्वयेऽपि मंत्रावृत्तेरुपपत्तेः श्रुतिबलीयस्त्वेऽपि विरोधाभावेन लिंगस्य बाधात् उपस्थानसमुच्चय इति पक्षांतरम्। लिंगस्य सामर्थ्यरूपत्वेन श्रुत्यपेक्षया बाह्यत्वात् अशेषशब्दप्रवृत्तेर्वस्तुशक्त्यनुसारित्वात् इन्द्रस्यैव लिंगवदुपस्थानमित्यद:(यं) पूर्वपक्षः। मन्त्रेण तदर्थं प्रतिपादा(द्य) पुनः शक्तिं निरूप्य मंत्रस्याकांक्षावसा(शा)दिन्द्रशेषत्वे श्रुतिर्यावत्कल्प(ल्प्य)ते तावत्प्रत्यक्षया श्रुत्या गार्हपत्यांगत्वे मंत्रस्यावगते सति आकांक्षोपशान्तेः श्रुतिकल्पनाया निर्मूलत्वात् स(अ)तिसी(शी)घ्रप्रवृत्तं(त्त)श्रुत्या मंत्रगतेन्द्रप्रकानसामर्थ्ये लिंगं बाध्यते। न च लिंगस्य विरोधाभावादबाध इति वाच्यं, प्रामाण्यस्याकांक्षाधीनत्वात् आकांक्षायाश्च श्रुत्या प्रत्याख्याता(त)[त्वा]त् अविरोधसिद्धिः। विरोधे न प्रत्यक्षे(क्ष)योर { अ } नुमानं श्रुत्या लिंगं दुर्बलत्वेन बाध्यते तस्मादिंद्रो(न्द्रो)पस्थाननियमस्य विकल्पसमुच्चययोश्चासंभवात्, गार्हपत्योपस्थानमेव श्रुतिवशेन कर्तव्यमिति सिद्धांतः।

लिंगवाक्यविरोधस्योदाहरणस्य मंत्रे [स्योनं ते] सदनं करोति(मि)घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सोदामृते प्रतितिष्ठ, व्रीहीणा(णां) मेधसुमनस्य { मानस्य } मान इति दर्शपूर्णमासयोः श्रूयते। हे पुरोडाश, तव समीचीनं स्थानं करोति(मि), तच्च स्थानं घृतस्य धारया सुष्ठु सेवितु(तुं) योग्यं कल्पयामि। हे व्रीहि मा(सा)रभू(भू)त त्वं समाहितमनस्कः तस्मिन् समीचीने उपविश, तत्र स्थिरो भवेत्यर्थः। तत्र सकलो मंत्रः सदनकरणे। पुरोडाशासादने च विनियोक्तव्यः किं वा कल्पयाम्य(मित्ये)तत् सदनकरणे।

तस्मिन्सीदामृतेत्यादिस्तु(दौ तु) पुरोडाशासादन(नं) प्रति वाक्यैकत्वपदत्वाभ्यां संशयः। सति संभवे वाक्यभेदस्यान्या(न्य)थात्वात(त्) तस्मिन्निति पूर्वसापेक्षत्वाच्च वाक्यैकत्वादुभर्य(य)त्र समस्तो मंत्रो विनियोक्तव्यः। अथवा लिंगवाक्ययोः समानबलत्वान्मानत्वाविशेषादशेषन्यस्तस्य वा विकल्पेनोभयत्र विनियोग इति पूर्वः पक्षः। लिंगवाक्ययोर्द्वयोरपि श्रुतिद्वारा विनियोजकत्वाविशेषेऽपि लिंगेन साक्षादेव श्रुतिकल्पनात् वाक्येन { कि } लिंगद्वारा तत्कल्पना क्व(अ)तः श्रुतिविप्रकर्षादितरस्य च तत्संनिकर्षेण बलवत्त्वात्पूर्वार्धस्य सदनकरणे परापेक्षामंतरेण सामर्थ्यावगमात् उत्तरार्धस्यापि तस्यैव पुरोडाशसादने सामर्थ्यस्य क्लृप्तत्वात् अर्थभेदे नानावाक्यत्वावगमात् विसज्य(षय)विनियोगो लिंगबलीयस्त्वादिति सिद्धांतः।

वाक्यप्रकरणयोर्विरोधोदाहरणं(ण) { ।। } मुक्त्वा { कनिगदातत्र } अग्नीषोमाविदं हविरजुषेतां अवीवृधेतां महो ज्यायोऽक्रातां इत्यादि श्रुतौ इदं हविरजुषेतामित्यादीनि देवतापदेन एकवाक्यभूतानि ततोपस्थितप्रकरणविशेषादन्यत्रापि सर्वत्र प्रयोक्तव्यानि किं वा देवतापदैकवाक्यतया तथैव व्यवस्थितानीति प्रकरणस्य वाक्यतो बलीयस्त्वाबलीयस्त्वाभ्यां संशयः। प्रधानाकांक्षमप्रधानमिति न्यायेन सर्वस्य प्रधानार्थत्वमंगीकर्तव्यम्। तथा च वाक्कीयाद्विनियोगात्प्राकरणिकविनियोगो बलवानिति पूर्वः पक्षः। वाक्येन सामर्थ्यं बुद्धूवा श्रुति { त्त } तः कल्पयित्वा तया विनियोगे गम्यमाने प्रकरणाद्वाक्यादिपरंपरया विनियोगस्य विप्रकृष्टत्वेन प्रकरणस्य ततो दुर्बलत्वम्। अतो वाक्कीयो विनियोगो बलवानिति सिद्धांतः। प्रकरणस्थानयोर्विरोधोदाहरणं राजसूये बहुषु यो(या)गेषु फलवस्तुसमप्रधानेषु अभिषेचनीयनाम्नः सोमयागस्य संनिधावक्षैर्दीव्यति राजन्यं जिनातीत्यादिना देवनादयो धर्माः श्रुताः। ते किं सर्वस्य राजसूयस्यांगं उताभिषेचनीयस्यैवेति प्रकरणसंनिधिभ्यां संशयः। संनिधिविशेषादभिषेचनीयांगत्वमेषां प्रकरणानुसरणे संनिधिविशेषस्य निरर्थकत्वं स्यात्। संनिध्यनुरोधे तु प्रकरणं विशेषे संकुचितमपि सावकाशम्। अतो देवनादयः अभिषेचनीयस्यांगा-

नीति पूर्वः पक्षः । पवित्रादारभ्य क्षत्रस्य धृतिपर्यंत(तं) राजसूयेतिकर्तव्यताद्युक्ते-स्तन्मध्यपतितदेवनादीनां प्रकरणाविशेषास(त्स)वा(र्वा)र्थत्वावगमात् अविशेषतः सर्वाकांक्ष(क्षा)यामपि यावत्संनिधिविशेषादभिषेचनीयस्य विशेषाकांक्षा(क्षां) { यां } कल्पयित्वा ता(त)दर्थकल्पनायाः क्लृप्ताकांक्षातः सर्वार्थतावगमस्य संनिकृष्टत्वादाकांक्षाकल्पन(ना)या अभिषेचनीयार्थ { च } स्य विप्रकृष्टत्वादेते धर्माः सर्वार्था इति सिद्धांतः ।

क्रमसमाख्ययोर्विरोधा(धो)दाहरणं पौरोडाशिक समाख्याने दर्शपूर्णमास-कांडे सान्नाय्यपात्रसंस्कारक्रमे समाम्नायते, शुन्धध्वं दिव्याय कर्मण इत्यादि मंत्रः । स किं समाख्यया बलीयस्त्वात् पुरोडाशपात्रांगं किं वा क्रमस्य बलव-त्त्वात्सांनाय्यपात्रांग आहोस्विदविशेषादुभयांगमिति संशयः । विशेषाग्रहणादुभ-योरपि क्रमसमाख्ययोस्तुल्यबलत्वेनोभयांगत्वम् । संबंधवचनत्वेन समाख्याया बलीयस्त्वात्पुरोडाशपात्रांगत्वमिति वा पूर्वः पक्षः । { दडीत्प्रप्रडप्रकृत्या दडस्यो कृत्वा त्प्रत्ययो } [?] न पुरुषस्याभिधानान्मिथोयोगस्य समभिव्याहारलभ्यतया वाच्यभावात् इहापि समाख्यायाः संबंधवचनत्वानंगीकारात् तद्वचनत्वे[ऽ]पि तयोस्तत्राप्रमाणत्वात् तामुपलभ्य पुरोडाशस्वरूपस्य कांडस्वरूपस्य च सामान्यसं-बंधं परिकल्प्य(ल्प्या)पेक्षावशादेकवाक्य { थ } त्वमुपेत्य ततः सामर्थ्यकल्पनया ततः श्रुतिं कल्पयित्वा तया विनियोगो यावद् गम्यते तावत्क्रमकृतसंबंधमात्रस्य प्रत्यक्षत्वात्तस्मादारभ्य श्रुत्यर्थप्रतिपत्तेः संनिकर्षात्क्रमलीयस्तेन शु(शुं)धध्वमिति मंत्रः सान्नाय्यपात्रांगमिति सिद्धांतः । तदुक्तं श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्याना-(नां) समवाये पारदौर्बल्यमर्थविप्रकर्षादिति । श्रुत्यादीमां(नां) समवायः समा-नविषयत्वेनैकार्थस(सं)निपातः । तत्र परस्य दौर्बल्यम् । तस्य पूर्वानुमानद्वारा तऽस्य बन्धा (तत्साध)नेनार्थसाधकस्य ततो विप्रकर्षात् पूर्वस्य प्राबल्यम् । तस्य-(स्या)र्थपाधे(ध)न(ने)न परापेक्षाभावात् तेन संनिकर्षादिति सूत्रार्थः । अत्रोदा-हरण(णं) { माचार्थसुंदर पांड्येन दर्शितनिश्रोण्यारोहण प्राप्य प्राप्तिमात्रोद-वाति च एकमेवाफलं प्राप्तुमुभावारोहति यदा } [?] { एकसोपानवर्त्येको मिष्टश्चापरस्तयोः उभयोस्तु जवस्तुल्यः प्रतिबंधश्च तांतुरा विरोधिनोस्तदैको हि

तत्फलं प्राप्नुयात्तयोः । प्रथमेव गृहीतेऽस्मिन्पश्चिमोऽवतरेन्मुधेति । } [?]अत्रापि दीर्घदीर्घाभिधाव्यापारेणैव शेषशेषिभावप्रतीतेः सर्वेषां सामान्यात्सबलदुर्बलभावो न स्यादिति भावः ।

उक्तदोषनिराकरणार्थं व्यंग्यत्वमंगीकर्तव्यं तथा चावाच्यत्वेन सर्वैरभिमतस्य विधेरपि अन्विताभिधानवादे व्यंग्यत्वं स्यादित्युक्तं स्यादित्युपसंहरति **इतोति** । पुनरपि अन्विताभिधानवादिनं दूषयति **किं चेति** । कुशब्दं अंते यस्य, वैपरीत्यस्य तस्मिन्वैपरीत्ये रुचि(चिं) कुर्वित्यादिरूपे अन्विताभिधानपक्षेऽपि दुष्टं प्रतीयताम् । को दोषस्तत्राह **न हीति** । लाटभाषायां चि(चिं)कुरिति मदनमंदिरांतर्वर्ति(र्त्य) [ङ्कुरापर] पर्यायः । तदर्थो लभ्यः । तस्य पदार्थांतरान्वितत्वाभावेनाभिधेयाभावे प्रतीयमानत्वेन व्यंग्यत्वमंगीकर्तव्यं स्यादिति भावः । स्वदर्शनेऽपि बाधकं तर्कमाह **यदीति** । असाधुत्वादयश्च्युतसंस्कारत्वादयस्तेषां नित्यदोषत्वम् । सर्वदा सर्वत्र परिहरणीयत्वात् कष्टत्वादयः अधाक्षीदद्राक्षीदित्याह(दि)श्रुतिकटुत्वादयः शृंगारादौ व्यंग्ये सति हेयाः । न वाच्ये अर्थमात्रे न च व्यंग्येऽपि शृंगारादिव्यतिरिक्त इति विभागः स्वदर्शनवृद्धैः कृतः, व्यंग्यव्यंजकभावानांगीकारे न स्यादिति भावः । तदंगीकारे व्यवस्था स्यादित्यन्वयमाह ॥ वाच्येत्यादिना पुनरपि वाच्यव्यंग्ययोर्भेदं दर्शयत्(न्) अन्विताभिधानत्वादिना दोषमाह **द्वयं गतमित्यादिना** । पूर्वं चन्द्रकलैव शोच्या जाता इदानीं [इ]यमपीति द्वयं शोच्यमभूदित्यर्थः । अत्र कपालिन इत्यनेन बीभत्सो व्यज(ज्य)ते । पिनाकिन इत्यने[न] नेति । कपालिपदोनं(देन) तस्य काव्यानुगुणत्वं { न } स्यात् । वाच्यव्यंग्यविभागानंगीकार [न] इत्यर्थः । इदानी(नीं) वाच्यस्यैकविधत्वं व्यंग्यस्य बहुविधत्वं विविच्य दर्शयंत, **अपरवाच्य** इत्यादिना । अनवधिः अनंतः । वाच्यस्यैकविधत्वाद्व्यं(द्व्यं)ग्यस्य बहुविधत्वादुभयोर्भेदोङ्गीकर्तव्य इत्यर्थः । वाच्यव्यंग्ययोर्विषयभेदादेकत्वं नास्तीत्याह वाच्यव्यंग्ययोरित्यारभ्य किं चेत्यन्तः । पूर्वगं(ग्रं)थेन निषेधविध्यात्मनेत्यादीनां तृतीयान्ता[नां] शब्दानां विषयभेदेऽपीत्युत्तरत्रसंबंधः । निषेधो वो(वा)च्यः । रंतुं गतासीति विधिश्च व्यंग्यः । हे आर्याः विद्वांसः भवंतः मात्सयर्मुत्सार्य निवार्य मर्यादासहितं कार्यं विचार्य इदं वक्ष्माणं

वं(व)द(दं)उ(तु)। तदेवाह भूधराणां पर्वतानां नितंबाः मध्यप्रदेशाः सेव्याः। किं स्मरेण कामेन स्मेराणामीषद्धासयुक्तानां विलासिनीनां पश्चाद्भागाः सेव्या इतीदं वदन्त्विति संबंधः। अत्र संशयो वाच्यः। शान्तशृंगारान्यतरनिश्चयश्च व्यंग्य इत्यर्थः। कश्चित्कंचिद्राजानमाह हे राजन् त्वया निशातया तीक्ष्णया असिधारया दत्तनं खंडनं तेन छिन्नशिरसां शत्रूणां श्री श्वी(स्वी)कृतेति यत् अयं कथं दर्प(र्पः)। { किं नु विपद्भयोऽर्थो जातः तमेवाह } निहतारेर्मारितशत्रोरपि तव वल्लभा असौ कीर्तिः अपगतांगैर्मृतैरेभिः शत्रुभिः त्रिदिवं स्वर्गं किं न नीता, नीतैव। अत्र मृतैरपि शत्रुभिर्वल्लभा स्वर्गं नीतेति नि(निं)दा वाच्या स्त(स्तु)-तिर्व्यंग्येति वाच्यव्यंग्ययोः स्वरूप { स्व } भेदेऽपीत्युत्तरत्र संबंधः। पूर्वं वाच्यं प्रतीयते पश्चाद्व्यंग्यमिति। वाच्यव्यंग्ययोः कालस्य भेदेऽपि वाच्यं शब्दाश्रयमेव व्यंग्यं तु शब्दाश्रयं तदेकदेशाश्रयं अर्थाश्रयं वर्णरचनाद्याश्रयं च। शब्द-शब्दैकदेशादिभिरपि व्यंजकत्वस्य प्रतिपादितत्वादिति वाच्यव्यंग्ययोनि(र्नि)मि-(मि)त(त्त)स्य कारणस्य भेदेऽपि। तथा चोक्तं शब्दार्थशासनज्ञानमात्रेणैव न विद्यते, विद्यते स वें(तु) कार्या(व्या)र्थतत्त्वतै(ज्ञै)रेव [केव]लमिति। वाच्यो-(च्य)बोद्धा बोद्धैवोच्यते व्यंग्यबोद्धा विदग्ध इति। तथा च वाच्यार्थः प्रतीतिमात्रकारी व्यंग्यश्चमत्कारकारीति वाच्यव्यंग्ययो(योः) कार्यस्य भेदेऽपि। गतोस्तमर्क इत्यादौ प्रदे(द)शि(र्शि) तन्यायेन वाच्यस्तावदेकः व्यंग्यश्च प्रकरणादिविशेषसहायतया अनेकप्रकार इति वाच्यव्यंग्ययोः संख्याया भेदेऽपि। काचिद्विदग्धा सखी कांचिदविनीतां उपपतिखंडिताधरां नायिकां तत्पतिसंनिधौ तमपश्यंती च नायिकाव्यग्रतानिवारणायाह **कस्य इति**। सभमरपडए(म)ग्धाइरि(णि) हे सभ्रमरपद्माघ्राणशीले, वा(व)रिअवामे हे वारितवामे, वारणानंगीकारिणि, हे सखि पिय(आ){रए}[इ] प्रियायाः सव्वणं सव्रणं, अरहं(हरं) अधरं, दठ्ठूण दृष्ट्वा कस्स च कस्य वा, रोसो रोषाः(षः) ण होइ न भवति अपि तु भवतीत्यर्थः। अत इणिहं (एण्हिं) इदानीं, सहसु सहस्व उपालंभानिति शेषः। वाळभमूर्स्वद्वार इति सूत्रेण दकारमकारयोर्मध्ये उकारे पउमेति रूपम्। पद्मेमीति सूत्रेणोत्वपक्षे

पोम्मं इति रूप(पं) इरइतिसूत्रेण शीलाद्यर्थानां तत्तादीनामिरादेशः। इदानीं सह-स्वेति वाच्यं अविनीतसखीविषयं भ्रमरेणाधरो दष्ट नान्यथेति अस्या अपराधो नास्तीति त्वया अन्यथा शंका न कार्येति कांतविषयं भ्रमरेण पीडितोधर इति मया समर्थितं अतस्त्वया नेतव्यमिति व्यंग्यमुपपतिविषयं भ(भ्र)मरे[ण] दष्टो[ऽ]-धरः न रमणेन अतस्त्वया संरंभो न कर्तव्य इति सपत्नीविषयं, अन्यथा श(शं)का न कार्येति प्रातिवेशिकविषयं, अद्य मया यथाकथंचित्समाहितं अतः परं साव-धानतया त्वया भव(वि)ति(त)व्यमिति नायिकाविषयं इत्यादिप्रकारेण वाच्यव्यंग्य-योर्विषयस्य च भे[ऽ]देपि स्वरूपभेदात्कारणभेदात्कार्यभेदात्संख्याभेदाद्विषयभेदाच्च वाच्यव्यंग्ययोरत्यंतभेदः। तथाप्येकत्वांगीकारे नीलपीतादेरपि भेदो न स्यादित्याह यद्येकत्वमिति। तर्हि वृथ(द्ध)संमतिमाह उक्तं हीति। अयमेव हि घटपटयोर्भेदः जलाहरणशीतत्राणादिविरुद्धधर्माध्यासः अयमेव हेतुः यत्कारणभेदश्चेत्यर्थः। भेदकांतरमाह वाचकानामिति। नियताभिधाव्यापाराणां वाचकानां शब्दानां तत्तद्वर्णादीनां अर्थनिरपेक्षाणामनियतव्यंजकशक्तीनां कथनवैलक्षण्यमित्यर्थः। शब्दस्य व्यंजकत्वे अर्थस्यापि व्यंजकत्वात् अस्त(स्त्य)र्थापेक्षा वर्णस्वना(रा)-दीना(नां) नास्तीत्यपिशब्दार्थः। यत्परः शब्दः स शब्दार्थ इतीत्येतत्पुनर्दूषयन्नाह किं त्विति। वाणीरकुडुं(डं)गुडी(ड्डी)ग सउणिकोलाहल सुणत्तीए घरकम्मवाव-डाए बहुए सोअन्ति अंगाइं वेतमि(स)कु(कुं)जोड्डीनशकुनिकोलाहलं शृण्वंत्याः गृहकर्मव्यापृतायाः वध्वाः सीदंत्यंगानीत्यादौ वाच्यार्थप्रतीतिपुरःसरा प्रतीयमा-नार्थप्रतीतिः। तदनंतरं तृती[य]कक्षायां वाच्यं { धान्याश्तरूप एव वि श्रास्यति } [प्रधानभूतम्। ]तत्र गुणीभूतव्यंग्यं यस्य तस्मिन्काव्ये अतात्पर्यभूतः शब्दानभिधेयः रसादिस्वरूपोऽर्थः प्रतीयमाना:(नः) कस्य व्यापारस्य विषयता-मवलंबतां व्यंजकव्यापारव्यतिरेकेणेति शेषः। व्यंज[क]व्यापारस्यैव विषय इत्यर्थः। अतो भिन्नं वाचकत्वाद्व्यंजकत्वा(त्व)मिति भावः।

ननु यथा व्यंग्यः प्रस्तावादिबलादनेकः तथा लक्ष्योऽपीति। तत्र व्यंग्य-स्यांतर्भावो भविष्यतीति शंकते न त्विति। स्निग्धश्यामलकां(का)न्ति-लिप्तवियतो वेल्लद्बलाकाघना वाताः शीकरिणः पयोदस(सु)हृदामानंदकेकाः कलाः

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे वैदेही तु कथं भविष्यति हहा [हा]देवि धीरा भवेति श्लोके रामोऽस्मीत्यत्र कठिनहृदयत्वं वनवासादिदुःखभाजनत्वं च इत्य(त्या)दिरनंतो लक्षो(क्ष्यो)ऽर्थः। प्रत्याख्यानरूपः(रुचेः) कृतं समुचितं क्रूरेण ते रक्षसा सोढुं तच्च तथा त्वयाकुलजनो धत्ते यथोच्चैः शिरः, व्यं(व्य)र्थं संप्रति वि(बि)स्र(भ्र)ता धनुरिदं त्वद्व्यापदः (दां) साक्षिणी(णा) रामेण प्रियजीवितेन तु कृतं प्रेमाः(म्णः) प्रिये नोचितमिति श्लोके न रामेण प्रियजीविते[ने]त्यत्र कातरत्वं कैतवस्नेहत्वं वा इत्यादि ल(ल)क्षो(क्ष्यो)ऽर्थः। रामो[ऽ]सावित्यत्र सर्वलोकां(का)तिशायित्वं खरदूषणादिराक्षसहिंसानिपुणत्वं लक्षो(क्ष्यो)ऽर्थः इति लक्षो(क्ष्य)ऽर्थो नानाविध इत्यर्थः। यथा व्यंग्यबोद्धुर्विदग्ध इति व्यपदेशः तथा लक्षा(क्ष्यो)र्थबोद्धुर्लक्षक इति विशेषव्यपदेश इत्यपि समानम्। अतो व्यंग्यं लक्ष्ये [अं]तर्भा(र्भ)वतीति न व्यंग्यं पृथगिति भावः। व्यंग्यलक्ष्ययोर्भेदं दर्शयन् परिहरति **उच्यत** इति। व्यंग्यवत् लक्षणीयो नानाविधो गोशब्दार्थवन्नियतसंबंध एव। यथा गंगायां घोष इत्यादौ मुख्येन गंगाशब्दार्थेन तटादिर्लक्ष्यते न तथा पावनत्वादिरपि अति(नि) यतसंबंधो लक्षयितुं शक्यत इति। उक्तमेवार्थं विशदयति व्यंग्योऽर्थस्तावदेवंविधो न भवतीत्याह **प्रतीयमानस्त्विति**। यत्र यत्र व्यंग्यप्रतीतिस्तत्र लक्षणा न भवतीत्याह। न चात्राव्यत्थणुमज्जुइएत्थ अहं दिअसअपुलोएहि मा एहि अरति अंध अस जाए महं णु मज्जिहिसि।

(अत्ता एत्थ णिमज्जइ एत्थ
अहं दिअहए पलोएहि।
मा पहिअ रत्तिअन्धअ
सेज्जाए मह णिमज्जहिसि ॥)

श्वश्रूरत्र निषदिति अत्राहं दिवसकोयं विलोकयमापधिकरा अंधशय्याया-मावयोर्निषीदसि।

(श्वश्रूरत्र निमज्जति अत्राहं
दिवसके प्रलोकय।
मा पथिक रात्र्यन्ध
शय्यायामावयोर्निमङ्क्षयसि ॥)

अत्र च न सु(मु)ख्या(ख्या)र्थबाध इत्यध्य(न्व)यः। मुख्यार्थबाधाभावात् अत्र लक्षणा नास्तीत्यर्थः। किंच प्रयोजनं विना लक्ष[णा]या नोपयोग इति लक्षणायामपि व्यंजनाव्यापारो[ङ]गीकर्तव्य इति प्राक् प्रतिपादितम्। अतोनयोर्भेदो[ङ]गीकर्तव्य इत्याह **लक्षणायामपीति** ।

ननु उभयोर्नियतत्वानियतत्वरूपावान्तरभेदोस्तु नानात्वभ(भा)जनादिना धर्मेणा(ण) भेदः। किं तस्मादित्यत आह **यथा चेति**। अभिहितान्वए(य)पक्षमाश्रित्य मुख्यार्थबाधादित्रयमेव समय इत्युक्तम्। यथा अभिधालक्षणयोः संकेतापेक्षत्वसाम्येऽपि मुख्यार्थबाधादित्रयरूपसंकेतविशेषादिना भेदः न(त)था लक्षणाव्यंजनयोरपि नानात्वभ(भा)जनादिधर्मसाम्येऽपि नियतत्वानियतत्वरूपावांतरभेदेन भेद इति भावः। अभिधालक्षणयोर्भेदकमाह **अत एवेति**। यत उभयोर्भेदः अतः मुख्यया वृत्त्या संकेतग्रहणमपि तत्रास्तीति अभिधाशेषभूता लक्षणा। उभयोरभेदे शेषशेषिभावो न स्यादिति भावः। व्यंजनलक्षणे वे(चे)ति यदुक्तं तद्दूषयति **न चेति**। व्यंजनस्य लक्षणात्मकत्वं अनुगममात्रात्साध्यते नियतानुगमाद्वेति विकल्पा(ल्प्या)द्यं दूषयति **तदिति**। तदनुगमेन लक्षणानुगमनेन तस्य व्यंजनस्य अनुगममात्रात्तदात्मकत्वे साध्यमाने अतिप्रसंग इति भावः। द्वितीयं दूषयति **न वेति**। विवक्षितान्यपरवाच्ये ध्वनौ अभिधमूलत्वेन ध्वननस्य संभवात् न लक्षणानुगतमेव ध्वननमित्यर्थः। अस्तु तर्हि ध्वनन(नं) अभिधालक्षणानुगतमेवेत्यत आह **न चोभयेति**। ललितपरुषादिवर्णानुप्रासस्य अर्थाभिधाना { न } नुपयोगिनोऽपि रसं प्रति व्यंजकत्वदर्शनात् न ध्वननमुभयानुगतमेवेत्यर्थः। मय्यासक्तश्चकितहरिणीहारिनेत्रवि(त्रि)भाग इत्यत्र गुरुजनमवधीर्यापि साभिलाषार्तमघरं विलोकितवतीति स्मरणे विप्रलंभोद्दीपनं आदिशब्देन अधोवक्त्रकुचकंपनबाष्पावेशादि गृह्यते। व्यंजनस्य अभिधादि व्यतिरेकसाधनमुपसंहरति **इतीति**। शब्दस्य मुख्यो व्यापारः अभिधा वाच्यार्थव्यापारस्तात्पर्यं लक्षणीयव्यापारो लक्षणेति त्रिविधात्मकं यद्व्यापारत्रयं तदतिवर्ती तद्व्यतिरिक्त(क्तं) ध्वन[न] { म् } द्योत [नं]- { म } व्यंजक[त्वं] इत्यादिपर्यायो यस्य स चतुर्थो(र्थोङ)गीकर्तव्य इत्यर्थः। प्रतीयमानोऽर्थः नियतसंबंधः संब(बं)धसंब(बं)धश्च द्योत्यत इत्युक्तं तत्क्रमेणोदा-

हरति तत्रेति । तत्र तेषु मध्ये अत्ताएहणु मज्जइएत्त अह दियस अंपुलोए हि मा एहि अरति अंधय सेज्जाए माहणु मज्जहि

(अत्ता एत्थ णिमज्जइ एत्थ
अहं दिअहए पलोएहि ।
मा पहिअ रत्तिअन्धअ
सेज्जाए मह णिमज्जहि ॥ ) इत्यादौ ।

अत्रैव शेषेति पुरुषाभ्यर्थनलक्षणो विधि व्यंग्यो नियतसंबंधः ।

कस्स व ण होइ सौरो (रोषो)
दठ्ठूण पिआए(इ) सव्वणं अहरं ।
सभमरपडमग्घाइनि(णि) वा(व)रिअ
वामे सहसु { व } इन्हि(एण्हिं) ॥

इत्यादौ सतीत्वप्रकटनादिव्यंग्यं सपत्नीप्रभृतीनां चान्यदिति अनियतसंबन्धः । **विवरीयेत्यादि** । लच्छी लक्ष्मीः विवरीअरए विपरीतसुखे उपरिसुरत इत्यर्थः, णाहिकमलत्थं(ट्ठं) नाभिकमलस्थं, वंभं(बम्हं) ब्रह्माणं दठ्ठूण दृष्ट्वा रसाउला रसाकुला, सतो हरिणो हरेः दाहिणनयनं(णअणं) दक्षिणनयनं झ { इ } ति(त्ति) झटिति, इच्छे इच्छा दयति स्थगयति । दाहिणेति न वा तीर्थदुःखदक्षिणदीर्घ इति सूत्रेण क्षशब्दस्य हत्वे, हे दक्षिणस्येति सूत्रेण दीर्घत्वे दक्षि(दाहि)णमिति भवति, पक्षे दक्षिणमिति । ठादेर्नुमनुमोवा- लटंकयच्चभसंतुगा इति सूत्रेण ठादेर्ठकादेशः बालदलोदशतृष्टितिएत्वं अत्र संबं(ब)द्धसंबन्धत्वं व्यंग्यस्य दर्शयति **अत्र हीति** । अत्र संबंधस्य व्यंग्यस्यार्थस्य सूर्यात्मकस्य संब(बं)धोऽपरो व्यंग्योऽर्थः सूर्यास्तमयरूपः, तस्य च पद्मसंकोचरूपो[ऽ]परः संबंधः, ततो ब्रह्मणः स्थानं तस्मिंश्च सति गोप्यांगस्यादर्शे(र्श)नेन निर्लज्जरतप्रवृत्तिरित्यर्थः । ननु सत्य(त्यं)ज्ञानमनंतं ब्रह्मेत्यादौ धर्मिधर्मभावाभावात् अखंडः परब्रह्मात्मको वाक्यार्थ एव वाच्या(च्यः) अखंडवाक्यमेव वा[च]कमिति ब्रह्मवादिनः { अपनिपदाः } शब्दब्रह्मवादिनो भर्तृहरिप्रभृ-

तयश्च कथयंति। अतो विध्यादिर्व्यंग्यो वाच्य एवेति सं(शं)कते अखंडेति। अखंडया बुध्या(द्धया) नितरां आग्राह्यो वाक्यार्थ एव वाच्य(च्यः) अखंडवाक्यमेव वाचकमित्यर्थः। तैरपि देशकालावच्छेदेन अशेषव्यवहर्तृनिष्ठतया कल्पितपदपदार्था(र्थ)संश्रयेण वाच्यवाचककल्पना तैरपि क्रियत एवेति तन्मतेऽपि शब्दस्य अर्थान्तरप्रतीतौ व्यंजकत्वमेवांगीकर्तव्यमिति। परिहरति तैरपीति। अविद्यापदं व्यवहारमार्गः। उक्तोदाहरणादौ निःशेषच्युतेत्यादौ विध्यादिः तदंतिकमेव रंतु(तुं) गतासीत्यादिरूपः। व्यंजकत्वं शब्दानां गमकत्वं वाक्या-(च्या)र्थप्रतीतिपूर्विका व्यंग्यार्थप्रतीतिः। वाच्योऽर्था(र्थो) लिंगरूपः व्यंग्योऽर्थो लिंग(गि)रूपः इति व्यंग्यव्यंजकभावो लिंगलिंगिभाव एवेति व्यक्तिविवेककार-मतमवलंब्य पूर्वपक्षमाह वाच्यादिति। वाच्यादर्थादसंबं(ब)धं(द्धं) वस्तु न प्रतीयते असंबद्धमपि यदि प्रतीयते तदा यतः कुतश्चिच्छब्दाद्यस्य कस्यचि-दर्थस्य प्रतीति(तिः) स्यादित्यतिप्रसंगमाह यतः कुतश्चिदिति। वाच्य-संबं(ब)ध(द्ध)स्यैव प्रतीतिरस्तु। प(प्र)कृते किमागतं तत्राह एवं त्विति। प्रतिब(बं)धो व्याप्तिः अप्रतिबंधाः(ध)स्तदभावः। व्याप्तत्वेनेत्यनेन सपक्षसत्त्वं, नियतेत्यनेन विपक्षाद्व्यावृत्तिः धर्मनिष्ठत्वेनेत्यनेन पक्षधर्मत्वमुक्तम्। अथवा व्याप्तत्वेनेत्यनेनैव पक्षधर्मत्वं सपक्षे सत्त्वं च दर्शितं नियतेत्यादिपदेन विपक्षा-द्व्यावृत्तिः तद्रूपः अनुमानरूप एवायं व्यंग्यव्यंजकभावः पर्यवस्यतीति भावः। तथा चोक्तं अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितु(तुं) व्यक्तिविवेकं कुरुते प्रणम्य महिमापरां [वा]चमिति तदेतदनुमानं ध्वनिकारोक्तध्वनेरुदाहरणे योजयति तथा हीति। धम्मिअ धार्मिक हे धार्मिक वीसद्धो विस्रब्धं(ब्धं) यथा तथा भम भ्रम चरेत्यर्थः कुत इत्याकांक्षायामाह, सो सः, सुणओ शुन-काः(कः), अज्ज अद्य, तेण तेन, गोलाणइकच्छकुडंगवासिणे(णा) गोदानदीक-च्छनिकु(कुं)जवासिना, दरिअसीहेण दृप्तसि(सिं)हेन, मारिओ मारितः, णइक-तेत्यत्र दिहौमि थस्से इति सूत्रेण नदीशब्दस्य वाक्तस्वत्वं दरियवि दृप्ते त्राप्त इत्यनेन यकारतकाराभ्यां सह ऋकारस्य अरि इत्यादेशे दरयमिति रूपम्। अत्र

किं वाच्यं किमनुमेयमित्याकांक्षायामाह **अत्रे**ति । यत श्वा दुःशीलो निवसति सः श्वा मारित इति श्वनिवृत्त्या अत्र गृहे भ्रमेति धार्मिकभ्रमणं विहितं वाच्यं, गोदावरीतीरे मा भ्रमेति प्रतीयमानमनुमानगम्यम् । गोदावरीतीरं भीरुभ्रमणं-(ण) योग्यं न भवति भयानकाक्रांतत्वात्संप्रतिपन्नवदित्यनुमानव्यतिरेकव्याप्तौ भीरुभ्रमणं गोदावरीतीरे अभ्रमणमनुमापयतीत्यर्थः । तामेव व्यतिरेकव्याप्तिमभिधाय अन्वयव्यप्ति दर्शयति **गोदावरी**ति । व्यतिरेकव्याप्तौ यद्व्यापकं भयकारणनिवृत्तिरूपं तद्विरुद्धभयकारणाक्रांतत्वं तस्योपलब्धिः यद्यद्भयकारणाक्रांतं तत्तद्भीरुभ्रमणयोग्यं न भवति यथा संप्रतिपन्नमित्यन्वयव्याप्तिः । अतोन्वयव्यतिरेकानुमानेन गोदावरीतीरे मा भ्रमेय(त्य)स्यार्थस्य सिद्धत्वान्न व्यंग्यं पृथक् कल्पनीयमित्यर्थः । सिद्धांतं प्रतिजानीते **अत्रे**ति । गोदावरीतीरे(रं) भीरुभ्रमणयोग्यं न भवति भयानकाक्रांतत्वादित्ययं हेतुः पक्षत्रयवृत्तित्वादनैकांतिकः न केवलमनैकांतिकः विरुद्धोऽपीत्याह **शुन** इति । यदा नर(तटं)भीतभ्रमणयोग्यं न भवति सिंहाक्रांतत्वादिति प्रयोगः तदा तावत्पक्षे वर्तते, अभीतपुरुषभ्रमणविशिष्टसंग्रामादौ सपे(प)क्षे न च वर्ति(र्त)ते, विपक्षे पर्वतो-(ता)दौ अभीतोऽपि वीरत्वात्सिंह(हा)दबिभ्यद्भ्रमतीति पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्ध इत्यर्थः । किं च असिद्धोऽपीत्याह **गोदावरी**ति । सिंहाक्रांतत्वादिति हेतुरसिद्धः प्रत्यक्षानुमानाभ्यामनिश्चितत्वात् । न च वचनेन सिद्ध इति वाच्यं, वचनस्य कुलटोक्तत्वेन अर्थव्यभिचारादिति भावः । उक्तमर्थमुपसंहरति **तदि**ति । तत्तस्मात्कारणात् एवंविधात् अनैकांतिकादिदोषसहितात्कथं साध्यसिद्धः । न कथंचिदपीत्यर्थः ।

इदानी(नीं) व्यंगा(ग्या)नामनुमेयत्वं नास्तीति स्थलांतरेण दर्शयन्नाह **तथे**ति । कारणांतरतः स्थानादिरूपकारणांतरात् अस्त्वेवं ततः किं तत्राह **अतश्चे**ति । स्नानं कारणं तत्काध्र्य(र्य)त्वेनोक्तानि चंदनव्यच(च्यव)नादीनीति । उपभोगे प्रतिबद्धानि { चिताभू } तानि न भवंतीत्यनैकांतिकानीत्यर्थः । एवंविधस्थले अनुमानं [न] प्रवर्तत इति वक्तु(क्तुं) व्यंजनवादिनो { उक्तं } गमकत्वमाह,

**व्यक्तीति** । व्यक्तिवादिना व्यंजनव्यापारवादिना एषां चंदनच्यवनादीनां व्यंजकत्वं गमकत्वमित्यर्थः । अस्त्वेवं, कथमनुमानं नेत्यत आ[ह] **न चात्रेति** । प्रत्यक्षादिप्रमाणमनुमानांगं धूमादिवत् । न चात्राधमत्वं प्रमाणा(ण)सिद्धं अतो नानुमानमित्यर्थः । ननु प्रमाणाप्रतिपन्नेन वस्तुना व्यंजनसिद्धिरपि कथं, तत्राह **एवंविधादिति** । एवंविधान्निश्चिताद्वा अर्थात् एवंविधोऽर्थः निश्चितः अनिश्चितो वा अर्थः उत्पत्त्यनपेक्षत्वेऽपि युक्तिशून्यत्वेऽपि व्यंग्यस्य प्रतीतिमात्रपर्यवसायित्वात् सत्यासत्यनिरूपणं विनैव प्रकाशः । ते[न] नानुमानमेवंविधम् । अतः शब्दस्य व्यंजनव्यापारः पृथगङ्गीकर्तव्य इति भावः । { तत्र प्रमाणाप्रतिपन्नत्वं }

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां **पंचमोल्लासः** ।

---

## Appendix No. 2.

# INDEX

### of Authors and Works referred to by Guṇaratnagaṇi In Sāradīpika

## Appendix No. 3.
# INDEX
### of verses quoted in Kāvyaprakās'a.

# Appendix No. 4
## INDEX
of references from various अलङ्कारग्रन्थs cited in सारदीपिका

## Appendix No. 5.

## INDEX

### of verses quoted in Saradīpikā

# शुद्धिपत्रकम्

| पृष्ठसंख्या | पंक्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|
| २८ | १५,१६ | विभानावि० | विभावनावि० |
| ३४ | ११ | वापस्नाने | वापीस्नाने |
| ४८ | १ | वृर्तिल[२७] क्षणा | वृत्तिर्लक्षणा |
| ६९ | २१ | प्रयोजनलक्षाणा | प्रयोजनलक्षणा[२७] |
| ७४ | २३ | लक्षस्य | लक्ष्यस्य |
| ७५ | १ | तटादीनां | तटादीनां [इति] |
| ७७ | ८ | समानविभक्तकयोः | समानविभक्त(क्ति)कयोः |
| ८२ | ७ | पुरुषेश्वतद्भावेऽपि | पुरुषेश्व(ष्व)तद्भावेऽपि |
| ९१ | १७ | र [ प्रकणम् ] | [प्रकरणम् ] |
| ९६ | २२ | प्रमणान्तरता | प्रमाणान्तरता |
| ९६ | २५ | [व्यञ्जवः] | [व्यञ्जकः] |
| ९७ | १३ | अर्थ इति । | अर्था इति । |
| १०० | १२ | ख्या(त्य)पकर्ष० | ख्या(ऽत्य)पकर्ष० |
| १०४ | १३ | पूरं | पुरं |
| १०६ | २० | इत्थ | एत्थ |
| ११७ | १८ | या समा | या {समा} |
| १२० | ११ | ०ऽरस[ऽरसत्वात्] | ०ऽरस[त्वात् ] |
| १२२ | ८ | साधरणी [करण]० | साधारणी [करण] |
| १२३ | ५ | उत्पत्त्यनङ्गीकरे | उत्पत्त्यनङ्गीकारे |
| १२८ | ६ | सम्यगगनु० | सम्यगनु० |
| १३१ | २३ | म्लानात्वादय० | म्लानत्वादय० |
| १३२ | २३ | ०नोपदानात् | ०नोपादानात् |
| १३३ | १० | ०शृङ्गारादय | ०शृङ्गारादयः |
| १३४ | ४ | भृङ्खारस्य | भृङ्गारस्य |
| १३८ | १६ | प्रवासो(से) वैवेश्यं | प्रवासो(से)वैवश्यं |
| १३९ | ६ | (त्वतदभा ?) | [त्वतदभा ?] |
| १४४ | २१ | दौणाचार्याणां | द्रोणाचार्याणां |
| १४४ | २४ | भ्रकुटी० | भ्रुकुटी० |
| १४७ | २५ | तथ | तथा |
| १४८ | ११ | स्यायिभावो० | स्थायिभावो० |
| १४८ | १२ | ०श्लोकमतवारयति | ०श्लोकमवतारयति |

| पृष्ठसंख्या | पंक्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|
| १५० | ११ | क्रोधारि्पु | क्रोधादिषु |
| १५८ | २६ | शङ्गारस्यापि | शृङ्गारस्यापि |
| १६६ | १८ | ०मिन्यन्तेन | ०मित्यन्तेन |
| १७४ | १९ | ०योग्योऽह– | ०योग्योऽथ- |
| १७७ | २२ | चमत्कारकरीति | चमत्कारकारीति |
| १८८ | १४ | ०लङ्कारा | ०लङ्कारो |
| १९१ | १७ | ग्लानत्वं | म्लानत्वं |
| १९१ | २४ | विजम्भमाणः | विम्भमाजृणः |
| १९४ | २५ | अङ्कपाल्या | अङ्कपाल्या |
| २०० | १३ | निवसन | निवसनं |
| २०५ | १६ | शक्तिस्तदस्तदप्रतीतेः | शक्तिस्तदप्रतीतेः |
| २०७ | ११ | (दृढोत्सौक्येन ?) | (दृढौत्सुक्येन ?) |
| २१७ | २३ | कथभूतोऽह | कथंभूतोऽहं |
| २१८ | ११ | सङ्कमित० | सङक्रमित० |
| २१९ | १० | वात्सस्या(ल्या)० | वात्सस्या(ल्यो)० |
| २२४ | १९ | निश्चायाभावोत् | निश्चयाभावात् |
| २२४ | २२ | मुच्च | मुञ्च |
| २२५ | २४ | भावो [ऽ]ङ्ग | भावो(ऽ)ङ्गं |
| २२६ | २४ | ०प्राधान्यमध्यम० | ० {प्राधान्य} मध्यम० |
| २३९ | १५ | ०पति [पत्ति] | ०पति (पत्ति) |
| २४७ | २२ | तात्यर्यं | तात्पर्यं |
| २४८ | २६ | कन्तु | किन्तु |
| २५२ | २ | ०त्वान्नन्य० | ०त्वान्नान्य० |
| २५३ | २३ | ०वच्छेदकांता(क्षा) | ०वच्छेदताकां [क्षा] |
| २५४ | २१ | तद्गाहपत्य० | तद्गार्हपत्य० |
| २५९ | २३ | कपालिदेपन | कपालिपदेन |
| २६७ | २३ | ०त्वादा | ०त्वादौ |
| २७० | २३ | ०निय(र्य)० | ०निय(र्य)० |
| २७४ | २४ | प्रामण्यं | प्रामाण्यं |